सं.शि. ७

व्रत बन्ध दीक्षाः॥ सौम्यायने कर्म शुभ न्विधेयं यद्गर्हितं तत्खलु दक्षिणेच ॥ ४८ ॥ अथर्तवः ॥ मृगादि राशि द्वय भानु भोगात् षड् र्तवस्स्युः शिशिरो वसंतः॥ ग्रीष्म श्च वर्षाच शरच्च तद्वद्धे मंत नाम्ना कथित श्च षष्ठः ॥ ४९॥ अथर्तुपतयः ॥ मारुतो ऽग्नि श्च स्त्वगेशो विश्वे देवाः प्रजापतिः सौम्यश्च षट् ऋतूनां हि पंतयः परिकी र्त्तिताः ॥ ५० ॥ अथमास परिज्ञानं ॥ पूर्व राशिं परित्यज्य उत्तरां याति भास्करः ॥ साराशिः संक्र मारव्या स्यान्मा सर्त्वयन हायने ॥ ५१॥ अथ मासानां नामानि ॥ मास श्चैत्रो ऽथ वैशाखो ज्येष्ठ आषाढ संज्ञकः ॥ ततस्तु श्रावणो भाद्र पदो ऽथाश्विन संज्ञकः ॥ ५२॥ कार्त्तिको मार्ग शीर्षश्च पौषो माघो ऽथ फाल्गुनः ॥ अथ मासानां संज्ञाः ॥ मधु स्तथा माधव संज्ञक श्च शुक्रः शुचि श्चाथन भोनभस्यः ॥ तथेष ऊर्ज श्च सहा सहस्य स्तप स्तपस्य श्च यथा क्रमेण ॥ ५३॥ अथ मास पश्चर्तुविधिः ॥ चांद्रः सौरः सावनिकः नाक्षत्रेति दर्श वधिं मास शुक्लादि

चांद्रं सौरं तथा भास्कर राशि भोगात् त्रिंशा दिनं सावन सद्म मार्या नाक्षत्र मि-
शो भं गणा श्रयाद्य ॥ ५४ ॥ मासानां फलम् ॥ सौरे कार्य्यं विवाहादि ग्रह चार
दिकं तथा ॥ व्रत यज्ञादिकं चांद्रे मासे परिगण्य: क्वचित् ॥ ५५ ॥ चांद्रस्तु द्विविधो मा
सो दर्शांत: पूर्णिमांतिम: ॥ देवार्थे पौर्णि मास्यंत: दर्शांत: पितृ कर्मणि ॥ ५६ ॥
सावने गर्भ वृद्ध्यादि नाक्षत्रे मेघ गर्जनम् ॥ प्रोक्त कार्य्ये त्विमे मासा विज्ञेया: कोविदै
स्सदा ॥ ५७ ॥ अथ पक्ष विचार: ॥ पूर्वा परं मास दलं द्वि पक्षौ पूर्वा परौ तौ सितनील संज्ञौ
॥ पूर्वस्तु देवस्त्व परश्च पैत्र्य: केचित्तु कृष्णे सित पञ्चगात: ॥ ५८ ॥ आदौ शुक्ल: भवन्ति
च: केचित्कृष्णोपि मास के ॥ अथ अधिक मास ॥ एके वीणा केरं कें के विरहिते नंदेंदुं भि-
भाजिते ॥ शेषे वन्हि जयो न्च माधव शिवे ज्येष्ठेऽवरे चाष्टके ॥ आषाढे नृपतौ न भश्च
भार के भाद्रे च विश्वा सके नेत्रे चाश्विन केऽधि मास मुदितं शेषे ऽन्य के स्यान्नहि ॥
अथ क्षय मास: ॥ ६० ॥ असंक्रांति मासोधि मास: स्फुटं स्याद्वि संक्रांति मास: क्षया

ख्यः कदाचित् ॥ क्षयः कार्तिकादित्रये नान्यतः स्यात्तदा वर्षमध्येऽधिमासद्वयं च ॥ ६१
॥ गताब्ध्यद्रिनंदैर्मिते शाककाले तिथीशैर्भविष्यत्यथांगोक्ससूर्यैः ॥ गजाद्र्यग्निभू
मिस्तथा प्रायशोयं कुवेदेंदु वर्षैः क्वचिद्गोकुभिश्च ॥ ६२ ॥ द्विवेदिकुलसंभूत सरयू कृ
त संग्रहे ॥ शिरोमणौ समासेषा प्रथमेयं प्रभा शुभा ॥ ६३ ॥ इति श्री संग्रह शिरोमणौ अ
यनादि प्रकथनम्प्रथम प्रभा ॥ १ ॥ अथ तिथि प्रकरणम् ॥ प्रतिपञ्च द्वितीया च तृतीया
तदनंतरम् ॥ चतुर्थी पंचमी षष्ठी सप्तमी चाष्टमी ततः ॥ १ ॥ नवमी दशमी चैवैकादशीद्वा
दशी ततः ॥ त्रयोदशी ततो ज्ञेया ततः प्रोक्ता चतुर्दशी ॥ २ ॥ पौर्णिमा शुक्लपक्षे तु कृष्ण
पक्षे त्वमास्मृता ॥ अथ तिथि पतयः ॥ तिथीशा वह्निकौ गौरी गणेशोऽहिर्गुहो रविः ॥ ३
॥ शिवो दुर्गांतको विश्वे हरिः कामः शिवः शशी ॥ अमावास्यातिथेरीशाः पितरः परि
कीर्त्तिताः ॥ ४ ॥ नन्दा भद्रा जया रिक्ता पूर्णाश्च प्रतिपन्मुखाः ॥ षष्ठ्याद्याश्च क्रमाद्वेया
स्तथैवैकादशीमुखाः ॥ ५ ॥ असन्मध्यं शुभं शुक्ले तिथीनां पंचकं क्रमात् ॥ कृष्णपक्षे

शुभं मध्यं नेष्टं ज्ञेयं शुभे सदा ॥ ६ ॥ अथ नंदादिषु कृत्यम् ॥ गीतं नृत्यं तथा क्षत्रं चित्रोत्सव
गृहादिकं ॥ वस्त्रालंकार शिल्पादि नन्दा स्वेत च्छुभं स्मृतम् ॥ ७ ॥ विवाहे वन यात्रा च
भूषा शिल्प कलादिकम् ॥ राजा प्रवश्य कृत्यंच भद्रा तिथि सुसिद्धिदम् ॥ ८ ॥ सैन्य
संग्राम शस्त्रादि यात्रोत्सव गृहादिकम् ॥ भेषज्यं चैव वाणिज्यं सिद्धे त्सर्वञ्जया सुच ॥
९ ॥ शत्रूणां वध वंधादि विष शस्त्राग्नि योजनम् ॥ कर्तव्यं तच्च रिक्तायां नैव सन्मं
गलं कचित् ॥ १० ॥ व्रत वंध विवाहादि यात्रा राजाभिषेचनम् ॥ शांति कं पौष्टिकं
कर्म्म सिद्धे त्पूर्ण स्व मांविना ॥ ११ ॥ विवाहो वन यात्रा च प्रतिष्ठा वास्तु कर्म्मच ॥
कुर्य्यां चौलादिकं कृत्स्नेन प्रुक्ते प्रति पत्तिथौ ॥ १२ ॥ राज्य कार्य्ये विवाहादि मंगल
वास्तु भूषणं ॥ व्रत वंध प्रतिष्ठाच द्वितीयायां तिथौ स्मृताः ॥ १३ ॥ अन्न प्राशन
संगीत विद्या शी मंत शिल्प कं ॥ द्वितीया प्रोक्त मखिलं तृतीयायां प्रशस्यते ॥ १४ ॥
शत्रूणां वध वंधादि विष शास्त्रादि योजनं ॥ कर्तव्यं तच्चतुर्थ्यांतु नैव सन्मंगलं कचित्

न॰चि॰ ॥ २५ ॥ शुभ कर्म्माणि सर्वाणि स्थिराणि च चराणि च ॥ ऋण दानं विनायांति सुसि-
२१ द्धिं पंचमी तिथौ ॥ २६ ॥ दंत काष्ठांग मर्द्यंगो त्यक्त्वा थो शिल्प्य कर्म च ॥ रणो वास्तुवि
भूषाद्यं षष्ठ्या सिद्ध्यति मंगलम् ॥ २७ ॥ गज कृत्यं विवाहादि संगीतं वस्त्र भूषणम् ॥
यात्रा प्रवेश संग्रामाः सिध्येच्च सप्तमी तिथौ ॥ २८ ॥ नृत्यं स्त्रीरत्न भूषादि संग्रामः श-
स्त्र धारणम् ॥ वास्तु शिल्प्यादिकं कार्य्य मष्टम्यां सिद्धि माप्नुयात् ॥ २९ ॥ विग्रहः
कलहो द्यूत मद्य मा खेटकस्तथा ॥ विषाग्नि शस्त्र कृत्यं च नवम्यां सिद्धि माप्नुयात्
॥ ३० ॥ विवाहादि शुभं सर्वं भूषा यात्रा प्रवेशनम् ॥ गजाश्व नृप कार्य्याणि सिद्ध्य-
न्ति दशमी तिथौ ॥ ३१ ॥ व्रत बंधो विवाहादि रणाशिल्पं सुरोत्सवः ॥ गमागमौ वि-
भूषादि रेका दश्यां प्रशस्यते ॥ ३२ ॥ चरस्थिराणि कार्य्याणि विवाह व्रत बंधनम्
॥ द्वादश्यां तत्र कुर्वीत तैलं यात्रादिकं त्यजेत् ॥ ३३ ॥ यात्रा प्रवेश संग्राम वस्त्रभूष
ण मंगलम् ॥ व्रत बंधं विनान्यत्र शुभा शुक्ल त्रयोदशी ॥ ३४ ॥ विष बंधाग्नि शास्त्रा २१

णो प्रकुर्य्याद्रुद्र कर्म्मच ॥ चतुर्दश्यां शुभं कर्म्म क्षौरं यात्रां च वर्ज्जयेत् ॥ २५ ॥ मा-
गल्यं भूषणं शिल्पं प्रतिष्ठायज्ञ कर्म्म च ॥ संग्रामो गृह कृत्यं च पौर्णमास्यां प्रसिद्ध्यति
॥ २६ ॥ अग्न्याधानं महादानं पितृयात्रादिकं चयत् ॥ प्रोक्तं कर्म्म प्रकर्तव्यं दर्शेना-
न्या शुभा क्रिया ॥ २७ ॥ इति तिथीनां कृत्यम् ॥ सामान्यतश्शुभास्तिथयः ॥ द्वितीया पं-
चमी चैव तृतीया सप्तमी तथा ॥ दशम्येकादशी कृष्णा प्रतिपच्च त्रयोदशी ॥ २८ ॥ पू-
र्णिमास्तिथयो ह्येताः सर्वे कार्ये शुभावहाः ॥ अन्यास्तु तिथयो नेष्टाः प्रोक्त कृत्येषु
मताः ॥ २९ ॥ कृष्णा चतुर्दशी शुक्ला प्रतिपद्दर्श संज्ञका ॥ एताः शुभेषु कार्येषु
षु वर्ज्जनीयाः प्रयत्नतः ॥ ३० ॥ चतुर्थी ४ रस ६ वस्व ८ क ९ द्वादशी १२ शक्र १४
संमिताः ॥ तिथयः पक्षरंध्राख्या स्त्याज्यास्सर्वेषु कर्म्मसु ॥ ३१ ॥ एतास्तु वसु ८ नंद
देन्द्र १४ तत्व २४ दिक् १० शर ५ संमिताः ॥ हेयास्युरादि माना ड्यः क्रमाच्छेषास्तु
शोभनाः ॥ ३२ ॥ अथ दंत धावने निषिद्धाः ॥ अमायां च तथा षष्ठ्यामेकादश्यां रवेर्दिने

प्रतिपद्यु दिते ऽर्के च न कुर्य्याद्दंत धावनम् ॥ ३३ ॥ आमलकस्नाने निषेधः ॥ दशमी सप्तमी दर्श्री द्वितीया नवमी दिने ॥ त्रयोदश्यां तथा नैव स्नायादामलकैर्नरः ॥ ३४ ॥ अथोक्त कार्ये निषिद्धाः ॥ क्षौरे चतुर्दशी चैव षष्ठी तैले पले ऽष्टमी ॥ दर्शं स्त्री सेवने जह्यात्स्यादी क्षे दीर्घ जीवितम् ॥ ३५ ॥ अथ प्रतिपदादिषु निषिद्धाः ॥ त्येजे त्प्रति पदाद्यासु कूष्मांडं वृहती फलम् ॥ लवनं मूलकं चैव पनसं तैल सेवनम् ॥ ३६ ॥ धात्री फलं नारिकेलं फलतुंव्याः पटोलकम् ॥ निःपावान्नं मसूरांश्च वृंताकं माक्षिकं क्रमात् ॥ ३७ ॥ अमायां सुरतं चैव पूर्णिमायां दुरोदरम् ॥ अमायां विशेष योग माह पराशर शातातपः ॥ ३८ ॥ अमावास्या भवेद्वारे यदा भूमि सुतस्य वै ॥ जाह्नवी स्नान मात्रेण गो सहस्र फलं लभेत् ॥ ३९ ॥ अमावासोम वारेण रवि वारेण सप्तमी ॥ चतुर्थी भौम वारेण विषुवत्स दृशं फलम् ॥ सिनी वाली कुहू वापि यदि सोम दिने भवेत् ॥ ४० ॥ गो सहस्र फलं दद्यात्स्नानं चेन्मौनि ना कृतम् ॥ अत्रैवामायां व्यतीपात योगः ॥ श्रवणाश्वि धनिष्ठार्द्रा नाग दैवत मस्तके ॥ यद्यमा रवि वारेण व्यती



दृष्टचंद्रा सिनी वाली नष्टचन्द्रा कुहू स्मृताः २ श्लेषा मृगशिरा १

पातः स उच्यते ॥ ४१॥ अथार्द्धोदय योगः ॥ माघे मासि रवौ दर्शे व्यती पाते श्रवान्विते ॥ अर्द्धो-
दया भिधो योगः सूर्य्य पर्व शताधिकः ॥४२ ॥ अथ मुक्तो दिवा योगः किंचिन्न्यूनं महोद-
यः ॥ अथ गजछाया ॥ पितृ पक्षे त्रयोदश्यां हस्ते ऽर्के ऽब्जे मघां गते ॥ गजच्छाया भिधो यो-
गः श्राद्धे ऽक्षय्य फल प्रदः ॥ ४३ ॥ अथ कपिला षष्ठी ॥ आश्विने कृष्ण पक्षे च षष्ठ्यां भौमो-
ऽथ रोहिणी ॥ व्यती पात स्तदा षष्ठी कपिला नंत पुण्य दा ॥ ४४ ॥ अथ व्यतीपातः ॥
पंचा नन स्थौ गुरु भूमि पुत्रौ मेषे रवि स्स्याद्यदि शुक्ल पक्षे ॥ मासाभि धाना करभेण युक्ता
तिथिर्व्यती पात इतीह योगः ॥ ४५॥ अथ गोविंद द्वादशी योगः ॥ यदा चापे जीवो भवति घ-
टराशौ दिनमणि स्तथा तारा नाथ स्व भवन गतः ॥ फाल्गुन शिते यदार्के द्वादस्या स-
दिति भयुतः शोभन युत स्तदा गोविंदाख्य हरि दिव समस्मिन्भुवितले ॥ ४६ ॥ अ-
थ वारुणी योगः ॥ वारुणेन समायुक्ता मधौ कृष्णा त्रयोदशी गंगायां यदि लभ्येत सूर्य्य
ग्रह शतैस्समा ॥ ४७ ॥ शनि वार समा युक्ता सा महा वारुणी स्मृता ॥ शुभ योग समा

युक्ता भानो भ्रात भिषा यदि ॥ ४८ ॥ महा मद्देति विख्याता त्रिकोटि-कुल मुद्धरेत् ॥ अ-
थ प्रसंगाद्युगादि मन्वादि तिथयः ॥ नवमी कार्त्तिके शुक्ला वैशाखेच तृतीयका ॥ त्रयोद-
श्याश्विने कृष्णा तथा दर्शश्च फाल्गुणे ॥ ४९ ॥ कार्त्तिके ऽभूत्कृता रंभे त्रेतारंभ स्तु-
माधवे ॥ फाल्गुणे द्वाप रारंभः आरंभ श्चाश्विने कले : ॥ ५० ॥ क्रमाच्छंभु र्हरि र्वे-
धाःपितर स्तत्र देवताः ॥ तिलान् लवण सौवर्णं गांश्च दद्या द्युगादिषु ॥ ५१ ॥ एता यु-
गा दयःपुण्याः शुभे वर्ज्या मनीषि भिः ॥ तत्रा प्यक्ष तृतीया तु सर्व कार्येषु शोभना
॥ ५२ ॥ आश्विने नवमी शुक्ला माघ मासेतु सप्तमी ॥ भाद्रे चैत्रे तृतीया च कार्त्तिके
द्वादशी तथा ॥ ५३ ॥ आषाढे दशमी प्रोक्ता ज्येष्ठ मासेतु पौर्णिमा ॥ आषाढी फाल्गु-
नी चैत्री कार्त्तिकी पौर्णिमा तथा ॥ ५४ ॥ भाद्रे कृष्णाष्टमी प्रोक्ता पौषे त्वेका दशी सिता
॥ अमा भाद्र पदे मासि मन्वाद्या स्तिथ यस्त्विमाः ॥ ५५ ॥ अत्र मासा स्तु राकांताः वि-
ज्ञेयाः परि कीर्त्तिताः ॥ द्विवे दिकुल संभूत संस्थू कृत संग्रहे ॥ शिरो मणौ समाप्तैया -

द्वितीयेयं प्रभा शुभा ॥ इति श्री संग्रह शिरोमणौ तिथि कथनं नाम द्वितीया प्रभा ॥ २ ॥ अथ वार प्रकरणम् ॥ आदित्य श्चंद्र मा भौमो बुध श्चाथ बृहस्पतिः ॥ शुक्र श्श-नै श्चर श्चैते वासराः परिकीर्त्तिताः ॥ १ ॥ शिवो दुर्गा गुहो विष्णु र्ब्रह्मेन्द्र कालसं-ज्ञकाः ॥ सूर्य्यादीनां क्रमा देते स्वामिनः परिकीर्त्तिताः ॥ २ ॥ गुरु श्चंद्रो बुधः शुक्रः शुभा वाराः शुभे स्मृताः ॥ क्रूरास्तु क्रूर कृत्येषु ग्राह्या भौमार्क सूर्य्यजाः ॥ ३ ॥ सूर्य्य श्चरः स्थिर श्चंद्रो भौम श्चोग्रो बुध स्समः ॥ लघुर्जीवो मृदुः शुक्रः शनि स्ती क्ष्ण स्समीरितः ॥ ४ ॥ अथ वार कृत्यम् ॥ राज्याभिषेको त्सव यान सेवा गो वन्हि मंत्रौ ष-ध शस्त्र कर्म्म ॥ सुवर्ण ताम्रो र्णिक चर्म काष्ठ संग्राम पण्यादि रवौ विदध्यात् ॥ ५ ॥ शंखाब्ज मुक्ता रजतेक्षु भोज्य स्त्री वृक्ष कृष्यांबु विभूषणाद्याः ॥ गीतं क्रतु क्षी-र विकार शृंगी पुष्पाम्बरा रंभण मिन्दु वारे ॥ ६ ॥ भेदा नृतस्तेय विषाग्नि शस्त्र वध्याभिधाना हव धारण द्यदं भान् ॥ सेनानि वेशा कर धातु हेम प्रवाल रत्नानि कु-

जे विदध्यात् ॥ ७ ॥ नैपुण्य पुण्या ध्ययनं कलाश्च शिल्पादि सेवा लिपि लेख
नानि ॥ धातुक्रिया कांचन युक्ति संधि व्यायाम वादाश्च बुधे विधेयाः ॥ ८ ॥ धर्म्म
क्रिया पौष्टिक यज्ञ विद्या मांगल्य हेमां बर वेश्म यात्राः ॥ रथाश्व भैषज्य विभूषणा-
दि कार्य्यं विद ध्यात्सुर मंत्रि वारे ॥ ९ ॥ स्त्री गीत शय्या मणि रत्न गंधव स्त्रो त्सवालं
करणादि कर्म्म ॥ भूपण्य गो कोश कृषि क्रियाश्च सिद्धांति शुक्रस्य दिने समस्ताः
॥ १० ॥ लोहा श्मसी सत्र पुशास्त्र दाश पापा नृतस्ते य विषार्क विद्धं ॥ गृह प्रवेश द्विप बं
ध दीक्षा स्थिरं च कर्मार्क सुतेह्नि कुर्य्यात् ॥ ११ ॥ पतंग सूनो र्दिव साधिपत्य नि प्रा-
प्य दश्चैव तु तिग्म भानोः ॥ रात्रि द्वयं चैक दिनं च सोमे शेष ग्रहाणा मुदय प्रवृत्तिः
॥ १२ ॥ अथ दोषा दोष माह ॥ नवार दोषाः प्रभवंति रात्रौ देवेज्य दैत्येज्य दिवा कराणा
म् ॥ दिवा शशांकार्कि ज भूसुतानां सर्वत्र निंद्यो बुध वार दोषः ॥ १३ ॥ अथ तैलाभ्यंगे
शुभा शुभं ॥ रवि स्तापं कांतिं वितरति शशी भूमि तनयो मृतिं लक्ष्मीं सौम्यः सुर पति

गुरु वित्त हरणाय ॥ विपत्ति दैत्यानां गुरु रविल भो गानु गमनं नृणां तैला भ्यंगात्स पदिकुरुते
१८ सूर्य तनयः ॥ २४ ॥ रवौ भौमे व्यती पाते संक्रांतो वैधृता वपि ॥ षष्ठ्यष्टम्यो श्च विरयांच
तैला भ्यंगो न पर्वसु ॥ २५ ॥ अथ दोषाप वादः ॥ तैलाभ्यंगे न दोषस्त्र प्रत्यहं क्रियते चयः ॥
उत्सवे वात रोगे वा यंत्र वाचनि केऽपिवा ॥ २६ ॥ भार्गवे गोमयं भौमे मृदं दूर्वां वृहस्पतौ ॥
२७ ॥ रवौ पुष्पं निधायाथ तैला भ्यंगो न दोष कृत् ॥ मंश्रितं कथितं तैलं सार्षपं पुष्प वासि-
तम् ॥ द्रव्यां तर युतं वापि नैव दुष्येत्क दाचन ॥ २८ ॥ अथ तात्कालिक वार कृत्य र्थं होरा ॥ स्व
। मध्य रेखातो योजनैः पाद वर्जितैः ॥ तावत्यले र्युतो नास्युस्तिथयः पर पूर्वतः ॥
२९ ॥ तद्दिना र्द्धान्तरं पले रूनाधि को दिनार्द्धतः ॥ ऊर्द्ध ग्राधः क्रमा द्वार मवेषा स्तपनोद
यात् ॥ ३० ॥ वारा रम्भा त्कृता नाड्यो द्विघ्नाः पञ्च विभाजिताः ॥ लब्धां के गत होराः स्यु
र्वासरे क्षादितः क्रमात् ॥ ३१ ॥ रवि श्शुक्रो बुधश्चंद्र श्शनि र्जीव स्ततः कुजः ॥ एते
क्रमानु विज्ञेयाः काला होरे श्वरा ग्रहाः ॥ ३२ ॥ यस्मिन्वारे तु यत्कृत्यं पूर्वाचार्यै रुदा

हृतम् ॥ तत्कृत्यं तस्य खेटस्य होरायां खलु सिद्ध्यति ॥ २३ ॥ खेटस्यो पचयस्थस्य वारे
कार्यं शुभावहम् ॥ तदेवापचयस्थस्य यत्नेनापि न सिद्ध्यति ॥ २४ ॥ द्विवेदिकुलसंभू
तसरयूकृतसंग्रहे ॥ शिरोमणौ समाख्या तृतीयेयं प्रभा शुभा ॥ २५ ॥ इति श्री संग्रह
शिरोमणौ वारकथनं नाम तृतीया प्रभा ॥ ३ ॥ अथ नक्षत्र प्रकरणम् ॥ अश्विनी भरणी
चैव कृत्तिका रोहिणी मृगः ॥ आर्द्रा पुनर्वसुः पुष्यस्ततः श्लेषा मघा ततः ॥ १ ॥ पूर्वा फाल्गु-
णिका तस्मादुत्तरा फाल्गुणी ततः ॥ हस्त चित्रा तथा स्वाती विशाखा तदनंतरम् ॥ २ ॥
अनुराधा ततो ज्येष्ठा ततो मूलं निगद्यते ॥ पूर्वाषाढोत्तराषाढ स्त्वभिजित् श्रवणास्ततः ॥
३ ॥ धनिष्ठा शततारख्यं पूर्व भाद्रपदा ततः ॥ उत्तर भाद्रपदश्चैव रेवत्येतानि भानि च
॥ ४ ॥ अथ नक्षत्रेशाः ॥ अश्विनी दस्रदैवत्यो भरणी यमदेवता ॥ आग्नेयी कृत्तिका प्रोक्ता
विधाता रोहिणी प्रवरः ॥ ५ ॥ मृगशीर्षे प्रवरश्चंद्रस्तथैवार्द्रे प्रवरः शिवः ॥ अदितिस्तु
पुनर्वस्वोः पतिः पुष्यस्य वाक्पतिः ॥ ६ ॥ श्लेषाधिपतिस्सर्पो मघेशाः पितरस्स्मृताः ॥

शि॰ भगश्च पूर्वा फाल्गुन्याः उफायाः पतिरर्य्यमा॥ ७॥ हस्तस्याधिपतिस्सूर्य्यस्त्वाष्ट्रा
२० चित्राभिधस्यच॥ स्वातेश्च दैवतं वायु र्विशाखेंद्राग्नि दैवतम्॥ ८॥ अनुराधे श्वरो
मित्रो ज्येष्ठाया इंद्र उच्यते॥ मूलस्य दैवतं रक्षः पूर्वाषाढे श्वरो जलम्॥ ९॥ उषाया दै-
वतं विश्वे विधि श्चाभिजितोऽधिपः॥ श्रवणाधिपतिर्विष्णु र्धनिष्ठा वसुदेवता॥ १०॥
वरुणश्च शततारायाः पूर्भेष्ठः कथितोऽजपात्॥ अहिर्बुध्न्यस्तथो भायाः पूषो क्तारेव-
ती पतिः॥ ११॥ अथ सामान्यतश्शुभाशुभनक्षत्राणि॥ रोहिण्य ध्रुव मृगाः पुष्यो हस्त चि-
त्रो त्तरात्रयम्॥ रेवती श्रवणश्चैव धनिष्ठाच पुनर्वसूः॥ १२॥ अनुराधा तथास्वातीशु-
भान्येतानि भानिच॥ सर्वाणि शुभकार्य्याणि सिद्धेद्येतेषु चोडुषु॥ १३॥ पूर्वात्रय
विशाखाच ज्येष्ठार्द्रा मूलमेवच॥ शततारा भिधेश्चैव कृत्यं साधारणं स्मृतम्॥ १४
॥ भरणी कृत्तिका चैव मघाश्लेषा तथैवच॥ अत्युग्रं दुष्ट कार्य्यंच प्रोक्त मेषु विधीयते
॥ १५॥ यात्रौषध विभूषाश्च विद्या शिल्प कलादिकम्॥ राज कार्य्यं विवाहांगं मांग-२०

भरण्यां कूप कु-
ल्यं चाश्विने चरेत् ॥ १६ ॥ साहसं दारुणं शत्रुनाशनं विष बंधनम् ॥ भरण्यां कूप कु-
र्यादग्नि दाहादिकं चरेत् ॥ १७ ॥ कृत्तिकायां सदा कुर्य्यात्साहसाग्नि परिग्रहम्
रिपो वधं विवादंच लोहमणयोश्च कर्म्मसु ॥ १८ ॥ रोहिण्यां मष्टकां कुर्य्याद्विवाहं धन
संग्रहम् ॥ प्रासाद सदनां कृत्यं मांगल्यं भूषणादिकम् ॥ १९ ॥ विवाहो वनजा यात्रा
मृग शीर्षेच शोभनम् ॥ सुर संस्थापनं वास्तु क्षेत्रारंभादि सिद्ध्यति ॥ २० ॥ आर्द्रायां
विग्रहं कुर्य्या दूंधनं छेदनं वधम् ॥ विष संधान विद्यादि दारणो च्छादने तथा ॥ २१ ॥
शांतिकं पौष्टिकं यात्रा भूषा वास्तु व्रतादिकम् ॥ वाहनं कृषि विद्याच पुनर्वसौ विधीय-
ते ॥ २२ ॥ चरस्थिराणि कार्य्याणि शांतिक पौष्टि कोत्सवम् ॥ विवाहं वर्जयित्वान्यत्स
र्वं पुष्य भे चरेत् ॥ २३ ॥ श्लेषायां चरिपो घातं वाणिज्यं साहसं तथा ॥ विषसर्पा-
दि कृत्यंच स्तेयादिकमुपाचरेत् ॥ २४ ॥ मघायां पैतृकं कार्य्यं तथा शस्यादि रोपणम् ॥
जला श्रयं विवाहंच कुर्य्याद्युद्धादि साहसम् ॥ २५ ॥ बंधनं दारुणं शिल्पं कापर्दे रणं

कृत्तानि शुभे ॥ ४४ ॥ गृहेण विद्धोप्य शुभान्वितोपि विरुद्ध तारोपि विलोम गोपि ॥
करोत्य वश्यं सकलार्थ सिद्धि म्विहाय पाशि ग्रहण न्नुपुष्यः ॥ ४५ ॥ अथ नक्षत्राणां
स्वरूपम् ॥ तुरग मुख सदृक्षं योनि रूपं क्षुराभम् शकट सम मथैण स्योत्त मांगे न तु-
ल्यम् ॥ मणि गृह शर चक्रं भाति शालोपमन्भं शयन सदृश मन्य च्चात्र पर्यंक रू-
पम् ॥ ४६ ॥ हस्ताकार मत श्च मौक्तिक समं चान्यत् प्रवालोपमं धिष्ण्यं तोरण व-
त्स्थितं वलिनिभं सत्कुण्डलाभं परम् ॥ क्रुध्यत्केशरि विक्रमेण सदृशं शय्या समा-
नं परं चान्य द्दंति विलासव त्स्थित मतः शृंगाटक व्यक्तिमत् ॥ ४७ ॥ त्रिविक्रम-
भं च मृदंग रूपं वृत्तं ततो न्य द्यमल द्वयाभं ॥ पर्यंक रूपं मुरजानु कारी त्वेव मश्व्या-
दिव चक्र रूपम् ॥ ४८ ॥ अथ नक्षत्राणां संख्या ॥ वन्हि त्रि ऋत्विषु गुणेंदु कृताग्नि
भूत बाण श्विनेत्र शर भूकु युगाब्धि रामाः ॥ रुद्राब्धि राम गुण वेद शत द्वि युग्म
दंता बुधै र्निगदिताः क्रमशो भ तारा: ॥ ४९ ॥ अथ नक्षत्राणां संज्ञा ॥ ध्रुवं स्थिर

मिति ख्यातं रोहिणी चोत्तरा त्रयं ॥ तत्रा राम महद्ग्रामा भिषे काद्याः स्थिर क्रिया ॥ ५० ॥ मृगश्चित्रा नुराधाच रेवती स्तु मैत्र कम् ॥ तत्र गीतं रतं कुर्य्याद्भूषा मांगल्य मंबरम् ॥ ५१ ॥ पुष्या श्विन्य भि जिद्धस्तं लघुक्षिप्र मुदाहृतम् ॥ तत्र भूषौ षध ज्ञानं शिल्प कंच तथा रतिः ॥ ५२ ॥ ज्येष्ठार्द्रा मूल मश्लेषाती क्ष्णं दारुणमु-च्यते ॥ तत्र भेदो वधो वंधो मंत्र भूतादि साधनम् ॥ ५३ ॥ श्रवणादि त्रि भं स्वाती पु नर्वसु चरं चलम् ॥ तस्मिन्वाजिगजा रामा कर मोक्ष गमा दिकम् ॥ ५४ ॥ भरणी च मघा पूर्वा क्रूर मुग्रमुदा हृतम् ॥ विष शस्त्राग्नि घातादि तत्रो च्छेद विनाशन-म् ॥ ५५ ॥ विशाखा कृत्तिका प्राज्ञै र्मिश्रं साधारणं स्मृतम् ॥ नीलोत्सर्गाग्नि कार्यंच मिश्रं तत्र च सिद्ध्यति ॥ ५६ ॥ अथ नक्षत्र मुखतत्त्वंच ॥ मूला श्लेषा मघा पूर्वा वि-शाखा भरणी द्वयम् ॥ अधोमुखानि भान्यत्र कर्म्म सिद्धे रधो मुखम् ॥ ५७ ॥ खु वापी तडा गादि कूप भूमि त्रणा निच ॥ देवा गारस्य खन नं निधान खननं तथा ॥

संशि· २२

कर्म्मचं ॥ पूर्वा फाल्गुनि कायां तु चित्र कर्म्मादि साधयेत् ॥ २६ ॥ विवाहो व्रत वंध ध्रुव स्थि
रं कर्म्म विभूषणं ॥ उत्तरा फाल्गुनि भे स्याद्गृहारंभ प्रवेशने ॥ २७ ॥ यात्रा विद्या विवाहा
दि विभूयां वर सेवयम् ॥ गृहारंभ प्रति सांच विद्या हस्त भेऽखिलम् ॥ २८ ॥ मांगलिकं
प्रौष्टिकं शिल्पं वास्तु भूषां वरादि कम् ॥ व्रत वंधं स्थिरं कार्य्यं चित्रायां कृषिकर्म्मच ॥
२९ ॥ सुर संघ विधानंच मंगलं वर भूषणम् ॥ वीजा रोपंच संग्रामं शस्त्राद्यं स्वाति भेच
रेत् ॥ ३० ॥ वास्तु संग्रहणं भूषा शिल्प चित्र प्रहारकम् ॥ रथ कार्य्यं विशाखायां कुर्य्याद्वि
षध सेवनम् ॥ ३१ ॥ पाणि ग्रहं व्रतं यात्रां गजाश्वांवर भूषणम् ॥ चरं स्थिरं शुभं कुर्य्या
दनुराधाभिधेऽखिलं ॥ रिपूणां हनने भेदे प्रहारे लोह कर्म्मणि ॥ शिल्पे स्नेह विधौ
चित्रे ज्येष्ठा श्रेष्ठा समीरिता ॥ मूल भे भवना राम संग्रामाःसंधि विग्रहे ॥ वापी कूप तडागा
द्याविधेयाः कृषयोऽपिच ॥ ३४ ॥ वापी कूपादिकं कार्य्यं विग्रहं वंध मोक्षणम् ॥ कू
र कार्य्यं द्रुम च्छेदं पूर्वाषाढाभिधे चरेत् ॥ ३५ ॥ स्थापनं मंडलं वास्तु निवेशश्च प्र- २२

र्गो [illegible] कर्म्माणि ॥ [illegible]

वेशनम् ॥ वीजा रोपं विभूषायं उत्तरा षाढ मे चरेत् ॥ ३६ ॥ देवता स्थापनं गेहं प्रो-
ष्टिकं शिल्प कर्म्मच ॥ मांगल्यो पनयं चित्रं प्रांति कं श्रवणे चरेत् ॥ ३७ ॥ चौलेचो
पनये युद्धे राजा पुत्तोक्षादि कर्म्माणि ॥ गेहोद्यान विभूषासु धनिष्ठा कथितोत्तमा ॥३८
॥ राजाश्वरथ नौकानां रौप्य मुक्ता फल स्रजाम् ॥ वास्तु संग्राम शस्त्राणां कार्य्यं त-
च्छत मेचरेत् ॥ ३९ ॥ पूर्वा भाद्र पदे शिल्पं साहसं छेदनं कृषिः ॥ विक्रयं महिषो
ष्ट्राणां जल यंत्रादि कं शुभम् ॥ ४० ॥ विवाहो व्रत वंधश्च देवता स्थापनं गृहम् ॥
वास्तु कर्म्माभि धानंच उत्तर भाद्र पदे भवेत् ॥ ४१ ॥ गेहं देवालयं भूषा विवाहं व्र
त वंधनम् ॥ जल स्थाना दिकं कार्य्यं रेवत्यां सिद्धि माप्नुयात् ॥ ४२ ॥ अथ पुष्य प्रशं-
सा ॥ परकृतं निखिलं निहंति पुष्यो न खलु निहंति परन्तु पुष्य दोषं ॥ ध्रुव मस्तक-
रे ऽष्ट मे पि पुष्ये विहित स्तु पैति सदैव कर्म्म सिद्धिम् ॥ ४३ ॥ सिंहो यथा सर्व चतुष्प-
दानां तथैव-पुष्यो वल वानुडूनां ॥ चंद्रे विरुद्धे प्यथ गोचरेपि सिद्धंति कार्य्याणि

कृतानि शुध्ये ॥ ४४ ॥ गृहेण विद्धोप्य शुभान्वितोपि विरुद्ध तारोपि विलोम गोपि ॥
करोत्य वश्यं सकलार्थ सिद्धि म्विहाय पाणि ग्रहणं न्तुपुष्यः ॥ ४५ ॥ अथ नक्षत्राणां
स्वरूपम् ॥ तुरग मुख सदृक्षं योनि रूपं क्षुराभम् शकट सम मथैणस्योत्तमांगेन तु-
ल्यम् ॥ मणि गृह शर चक्रं भाति शालोपमन्भं शयन सदृश मन्य च्चात्र पर्यंक रू-
पम् ॥ ४६ ॥ हस्ताकार मत श्च मौक्तिक समं चान्यत् प्रवालोपमं धिष्ण्यं तोरण व-
त्स्थितं वलिनिभं सत्कुण्डलाभं परम् ॥ क्रुध्यत्केशरि विक्रमेण सदृशं शय्या समा-
नं परं चान्य द्दन्ति विलास वत्स्थित मतः त्रैकोण कं व्यक्ति मत् ॥ ४७ ॥ त्रिविक्रमा-
भं च मृदंग रूपं वृत्तं ततोन्य द्द्यमलय द्वयाभं ॥ पर्यंक रूपं मुरजानु कारी यत्येव मश्व्या-
देश्च चक्र रूपम् ॥ ४८ ॥ अथ नक्षत्राणां संख्या ॥ वन्हि त्रि त्रत्वि षु गुणेन्दु कृतागि-
भूत बाण ष्विनेत्र शर भू कु युगाब्धि रामाः ॥ रुद्राब्धि राम गुण वेद शत द्वियुग्म
दंता बुधै र्निगदिताः क्रमशो भतारा: ॥ ४९ ॥ अथ नक्षत्राणां संज्ञा ॥ ध्रुवं स्थिर

मिति ख्यातं रोहिणी चोत्तरा त्रयं ॥ तत्रा राम स्तद् ग्रामा भिषे कादा : स्थिर क्रिया ॥ ५० ॥ मृगचित्रा नुराधा च रेवती स्तु मैत्र कम् ॥ तत्र गीतं रतं कुर्याद्भूषा मांगल्य संवरम् ॥ ५१ ॥ पुष्या श्विन्य भिजिद्धस्तं लघुक्षिप्र मुदाहृतम् ॥ तत्र भूषौ षध ज्ञानं शिल्प कंच तथा रतिः ॥ ५२ ॥ ज्येष्ठार्द्रा मूल मश्ले षाती क्ष्णं दारुण मुच्यते ॥ तत्र भेदो वधो बंधो मंत्र भूतादि साधनम् ॥ ५३ ॥ श्रवणादि त्रि भं स्वाती पुनर्वसु चरं चलम् ॥ तस्मिन्वाजिगजा रामा कर मोक्ष गमादिकम् ॥ ५४ ॥ भरणी च मघा पूर्वा क्रूर मुग्रमुदाहृतम् ॥ विष शस्त्राग्नि घातादि तत्रो च्छेद विनाशनम् ॥ ५५ ॥ विशाखा कृत्तिका प्राज्ञै र्मिश्रं साधारणं स्मृतम् ॥ नीलोत्सर्गाग्नि कार्यं च मिश्रे तत्र च सिद्ध्यति ॥ ५६ ॥ अथ नक्षत्र मुखं तत्कृत्यं च ॥ मूला श्लेषा मघा पूर्वा विशाखा भरणी द्वयम् ॥ अधो मुखानि भान्यत्र कर्म सिद्ध्ये दधो मुखम् ॥ ५७ ॥ स्तु वापी तडागादि कूप भूमि तृणा निच ॥ देवा गारस्य खननं निधान खननं तथा ॥

॥ ५८ ॥ गणितं ज्योतिषा रंभ खनी विल प्रवेशनम् ॥ कुर्य्यादधो गता न्येव कार्य्या-
णि वृष भ ध्वज ॥ ५९ ॥ रोहिण्या र्द्रा तथा पुष्यो धनिष्ठा चोत्त र त्रयम् ॥ वारुणं
श्रवणं चैव नव चोर्द्धु मुखा स्तथा ॥ ६० ॥ प्रासाद पट्ट ध्वज छत्र प्राकार गृहतोर-
णम् ॥ नृपा भिषेक मारामं उच्छ्राय स्तूर्द्ध वक्त्र के ॥ ६१ ॥ रेवती चाश्विनी चित्रा
स्वाती हस्त पुनर्वसू ॥ अनुराधा मृगो ज्येष्ठा एतास्तिर्य्यङ्मुखाः स्मृताः ॥ ६२ ॥ गजो
ष्ट्राश्व वली वर्द्द दमनं सन्निवस्य च ॥ वीजानां वपनं कुर्य्याद्गमना गमना दिकम् ॥
६३ ॥ चक्र यंत्र रथा दीनां नौका दीनां प्रवाहनम् ॥ पार्श्वयो र्यानि कार्य्याणि कुर्य्या
देषु च तान्यपि ॥ ६४ ॥ अथ पंचकम् ॥ धनिष्ठार्द्धो त्तरं पंच स्वर्क्षेष्वेषु त्यजे द्बुधः ॥ याम्य
दिग्गमनं शय्या पूरणं गृह गो पनम् ॥ ६५ ॥ स्तंभो च्छ्रायं प्रेत दाहं तृण काष्ठादि संग्र-
हम् ॥ भवे त्पंच गुणं चात्र जातं लब्धं मृता गतम् ॥ ६६ ॥ अथ नक्षत्राणा मंधादिसंज्ञा
॥ अंधकं तदनु मंद लोचन म्मध्य लोचन मतः सुलोचनम् ॥ रोहिणी प्रभृति भं च तुष्टयं सा

भिजिच्च गणयेत्पुनःपुनः ॥ ६७ ॥ अंधके पूर्वतो वस्तु मंदके दक्षिणे तथा ॥ पश्चिमे म
ध्यनेत्रेच उत्तरे तु सुलोचने ॥ ६८ ॥ अंधे सद्यः प्राप्यते वस्तु नष्टं कष्टात्प्राप्यं मंदनेत्रेच
तद्वत् ॥ दूरात्श्राव्यं मध्यनेत्रे न लभ्यं न श्रोतव्यं नैव लभ्यं सुनेत्रे ॥ ६९ ॥ अथ नक्षत्रद
र्शनात् रात्रिलग्नज्ञानं तत्रादौ नक्षत्रचारः ॥ पूर्वाषाढद्वयं मूलाऽनुराधार्द्रा मृगः करः ॥ ज्ये-
ष्ठा पुनर्वसु श्चैषां तारा दक्षिणगाः सदा ॥ ७० ॥ रोहिणी कृत्तिकाश्लेषा रेवती श्रवणत्रयम्
पुष्य श्चित्रा रोग चैतानि मध्यचारीणि भानि हि ॥ ७१ ॥ अश्विनी द्वितयं स्वाती विशाखा
फाल्गुणी द्वयं ॥ मघा भाद्रपादा युग्म मेतान्युत्तर गानिच्च ॥ ७२ ॥ अथ नभोमध्यभात् उदय
र्क्षज्ञानं ॥ विशाखादित्रये पूर्वाषाढाऽश्लेषार्द्र भे यदा ॥ रोहिणीभ नभोमध्ये तदास्या-
च्चाष्टमोदयः ॥ ७३ ॥ नवमर्क्षोदयो मूले मृगे चांवरमध्यगे ॥ शेषे मध्यगते व्योम्नि स-
प्तमर्क्षोदयो भवेत् ॥ ७४ ॥ अथ रविभात् मध्यभात् उदयभात् गतरात्रिज्ञानम् ॥ रविभाद
स्तभं च्येकं मध्यभं वारहीनकम् ॥ उद्यभं तिथि १५ हीनं वा नख २० घ्नं नवभाजितम्

॥ ७५ ॥ लब्ध रवि गता नाड्यः प्रोया लब्धा पलानि च ॥ गणना ॥ शुक्ल भाद्रकेंऽलिष्या ९५
हीनं मध्य भतोऽशभिः ॥ ७६ ॥ उदयर्क्ष निशा वेकं विंशति घ्नं खहे भजेत् ॥ लब्धा घट्या
दिका ज्ञेया शेषा रात्रि स्फुटा यवा ॥ ७७ ॥ सशाष्ट नवहीनंच स्व स्वोदय गता गतः ॥ म-
ध्य मेवु विशेषोयं ज्ञेयो युक्त्या विचक्षणैः ॥ ७८ ॥ अथ दिवा रात्रौ मुहूर्ताः ॥ शिवो हि मि-
त्र पितरो वस्वंभो विश्व वेधसः ॥ विधि रिंद्रो थ शक्रा ग्नी रक्षो ब्धी शोर्यमा भगः ॥ ७९
॥ मुहूर्ते घ्ना इमे प्रोक्ता दिवा पंच दशाः क्रमात् ॥ मुहूर्ता रजनी शंभु रजे क चरणा व्ययः
॥ ८० ॥ दस्रात्यं चादितिर्जीवा विष्णु कौं तष्ट मारुतौ ॥ दिन मानस्य तिथ्यं शो रात्रे
रपि मुहूर्त काः ॥ ८१ ॥ नक्षत्र नाथ तुल्ये स्मिन् कार्यं कुर्यात्स्वभो दितं ॥ दिन म
ध्ये ऽभिजित्संज्ञे दोष संघे ष्वसत्स्वपि ॥ सर्वं कुर्याच्छुभं कर्म यास्य दिग्गमनं वि-
ना ॥ ८२ ॥ अथ रव्यादि वारे त्याज्य मुहूर्ताः ॥ सूर्यमा भानु मद्वारे चंद्रे हि विधि राक्षसौ
॥ पित्रारनी कुज वारेतु चंद्र पुत्रे तथा भिजित् ॥ ८३ ॥ पित्र्यब्रा सौ भृगोर्वारे राक्ष

| संख्या | नक्षत्रनाम | शुभाशुभ | स्वामी | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| २८ | रेवती | क्षामदा | पूषा | तीर्य्यङ्मु | मृदु | मैत्र | अंधाक्ष | मृदंग | ११ |
| २७ | उत्तराभाद्र | लक्ष्मी | अहिर्बुध्न्य | ऊर्द्धमु. | ध्रुव | स्थिर | दिव्याक्ष | यमलाभ | २ |
| २६ | पूर्वाभाद्र | मृत्युद | अजैकपा | अधोमु. | उग्र | क्रूर | काणाक्ष | पर्तुला | २ |
| २५ | शतभिषा | कल्याण | वरुण | ऊर्द्धमु. | चर | चल | विपटाक्ष | मृदु गात्र | १०० |
| २४ | धनिष्ठा | शुभद | वसु | ऊर्द्धमु. | चर | चल | अंधाक्ष | वाम नाभ | ४ |
| २३ | श्रवण | शुभद | विष्णु | ऊर्द्धमु. | चर | चल | दिव्याक्ष | अक्षाभ | ३ |
| २२ | अभिजित | सिद्धिद | ब्रह्मा | ० | लघु. | क्षिप्र | काणाक्ष | त्रिकोण | ३ |
| २१ | उत्तराषाढ | वृद्धिद | विश्वेदेव | ऊर्द्धमु. | ध्रुव | स्थिर | विपटाक्ष | गजाभ | ३ |
| २० | पूर्वाषाढ | हानिमद | उदक | अधोमु. | उग्र | क्रूर | अंधाक्ष | शय्याभ | ४ |
| १९ | मूल | सर्वनाश | राक्षस | अधोमु. | तीक्ष्ण | दारुण | दिव्याक्ष | सिंहाभ | ११ |
| १८ | ज्येष्ठा | क्षयनाश | इंद्र | तीर्य्यङ्मु | तीक्ष्ण | दारुण | काणाक्ष | कुंडल | ३ |
| १७ | अनुराधा | सर्वसिद्धि | मित्र | तीर्य्यङ्मु | मृदु | मैत्र | विपटाक्ष | बलि सम | ४ |
| १६ | विशाखा | अशुभ | इंद्राग्नी | अधोमु. | मिश्र | साधारण | अंधाक्ष | तोरण | ४ |
| १५ | स्वाती | अशुभ | वायु | तीर्य्यङ्मु | चर | चल | दिव्याक्ष | प्रवाल | १ |
| १४ | चित्रा | शुभद | त्वष्टा | तीर्य्यङ्मु | मृदु | मैत्र | काणाक्ष | मौक्तिक | १ |
| १३ | हस्त | लक्षद | रवि | तीर्य्यङ्मु | लघु | क्षिप्र | विपटाक्ष | हस्ताकृति | ५ |
| १२ | उत्तराफाल्गुनी | विघातक | अर्य्यमा | ऊर्द्धमु. | ध्रुव | स्थिर | अंधाक्ष | पर्यंक | २ |
| ११ | पूर्वाफाल्गुनी | मृत्युद | भग | अधोमु. | उग्र | क्रूर | सुलोचन | शय्या | २ |
| १० | मघा | नाशक | पितर | अधोमु. | उग्र | क्रूर | मध्यलोचन | शाला सम | ५ |
| ९ | श्लेषा | शोक | सर्प | अधोमु | तीक्ष्ण | दारुण | मंदाक्ष | चक्राभ | ५ |
| ८ | पुष्य | शुभ | गुरु | ऊर्द्धमु. | लघु | क्षिप्र | अंधाक्ष | शराभ | ३ |
| ७ | पुनर्वसु | मध्यम | अदिति | तीर्य्यङ्मु | चर | चल | सुलोचन | गृहाभ | ४ |
| ६ | आर्द्रा | शुभ | रुद्र | ऊर्द्धमु. | तीक्ष्ण | दारुण | मध्याक्ष | मणि सम | १ |
| ५ | मृगशिर | शुभ | चंद्र | तीर्य्यङ्मु | मृदु | मैत्र | मंदाक्ष | मृग सम | ३ |
| ४ | रोहिणी | सिद्धि | ब्रह्मा | ऊर्द्धमु. | ध्रुव | स्थिर | अंधाक्ष | शकट | ५ |
| ३ | कृत्तिका | अशुभ | अग्नि | अधोमु. | मिश्र | साधारण | सुलोचन | क्षुराभ | ६ |
| २ | भरणी | अशुभ | यम | अधोमु. | उग्र | क्रूर | काणाक्ष | योनि | ३ |
| १ | अश्विनी | शुभ | अश्विनी कुमार | तिर्य्यङ्मुख | लघु | क्षिप्र | मंदाक्ष | अश्व मुख | ३ |

॥ ७५ ॥ लब्ध रात्रि गता नाड्यः श्रेया लब्धा पलानिच ॥ अथवा ॥ अल्प भाद् र्कं भं लिप्ता ९५
हीनं मध्य भतोऽथभिः ॥ ७६ ॥ उदयर्क्ष निशा वे कं विंशति भं ग्रहे भजेत् ॥ लब्धा घट्या-
दि का ज्ञेया शेषा रात्रि स्फुटा थवा ॥ ७७ ॥ सप्ताष्ट न वहीनंच स्व स्वोदय प्रमाणतः ॥ म-
ध्यमेषु विशे षोयं ज्ञेयो युक्तया विचक्षणैः ॥ ७८ ॥ अथ दिवा रात्रौ मुहूर्त्ताः ॥ शिवो हि सि-
त्र पितरो व स्वंभो विश्व वेधसः ॥ विधि रिंद्रो थ शक्रा ग्नी रक्षो अपां पोर्यमा भगः ॥ ७९
॥ मुहूर्ते शा इमे प्रोक्ता दिवा पंच दशाः क्रमात् ॥ मुहूर्त्ता रजनौ शंभु रजै क चरणा न्यथः
॥ ८० ॥ दस्रात्यं चादितिर्जीवा विष्ण कौं तष्ट मारुतौ ॥ दिन मानस्य तिथ्यं शो रात्रे
रपि मुहूर्त काः ॥ ८१ ॥ नक्षत्र नाथ तुल्ये स्मिन् कार्य्यं कुर्य्यात्स्वभो दितं ॥ दिन म
ध्ये ऽभिजित्संज्ञे दोष संघे शुभ स्त्वपि ॥ सर्वं कुर्य्याच्छुभं कर्म याम्य दिग्गमनं वि-
ना ॥ ८२ ॥ अथ रव्यादि वारे त्याज्य मुहूर्त्ताः ॥ अर्यमा भानु मद्वारे चंद्रे हि विधि राक्षसौ
॥ पित्राग्नी कुज वारेतु चंद्रपुत्रे तथा भिजित् ॥ ८३ ॥ पित्र ग्नासौ भृगो वीरे राक्ष

अथ योग प्रकरणम् ॥ वाक्पतेर्क्षे नक्षत्रं श्रवणा चान्द्र मेवच ॥ गणयेत्तच्छुतिं कुर्य्याद्योगस्या
हुस्तु प्रोक्तः ॥१॥ विष्कुंभः प्रीति रायुष्मान् सौभाग्यः शोभन स्तथा ॥ अति गण्डः
सुकर्म्माच धृतिः शूल स्तथैवच ॥ २ ॥ गंडो वृद्धि र्ध्रुव श्चैव व्याघातो हर्षण स्त-
था ॥ वज्र सिद्धी व्यती पातो वरियान् परि घः शिवः ॥ ३ ॥ सिद्धिः साध्यः शुभः शु-
क्लो ब्रह्मेन्द्रो वैधृतिः क्रमात् ॥ सप्त विंशति योगास्तु कुर्यु र्नाम समं फलम् ॥ ४॥
विरुद्ध संज्ञा इह येच योगा स्ते षा मनिष्टः खलु पाद आद्यः ॥ सर्वे धृतिस्तु व्यतिपा-
त नामा सर्वोप्य निष्टः परि घस्य चार्द्धम् ॥ ५॥ तिस्रस्तु योगे प्रथमेच वज्रे व्या-
घात संज्ञेन व पंच शूले ॥ गंडेति गंडेच षडेव नाड्यः शुभे षु कार्य्येषु विवर्जनी
याः ॥ ६ ॥ द्विवे दि कुल संभूत सरयू कृत संग्रहे ॥ शिरो मणौ समाप्ते या पंचमी-
यं प्रभा शुभा ॥ ७ ॥ इति श्री संग्रह शिरो मणौ योग कथनं नाम पंचमी प्रभा ॥
५ ॥ अथ करण प्रकरणम् ॥ गताश्च तिथयो निघ्नाः द्वाभ्यां शुक्ला दितः क्रमात् ॥ एकोनाश्च

शि· ३०

साम्बु गुरौ दिने ॥ रौद्र सार्पौ शने रन्हि द्वमे त्याज्या मुहूर्त्तकाः ॥ ८४ ॥ द्विवेदि कुल संभूत

| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ | दिवा मुहूर्ताः |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| शिव | सर्प | मित्र | पितर | वसु | अंबु | विश्वे | विधि | वेधा | इंद्र | इंद्राग्नी | राक्षस | वरुण | अर्य्यमा | भग | देवताः |
| आर्द्रा | आश्लेषा | अनु | मघा | धनिष्ठा | पूषा | उत्तराषाढ | अभिजित | रोहिणी | ज्येष्ठा | विशाखा | मूल | शतभिष | उत्तराफाल्गुनी | पूर्वाफाल्गुनी | नक्षत्राणि |
| रुद्र | अजैक | अहिर्बुध्न्य | पूषा | दस्र | यम | अग्नि | ब्रह्मा | चंद्र | अदिति | गुरु | विष्णु | सूर्य्य | त्वष्टा | वायु | रात्रि मुहूर्ताः |
| आर्द्रा | पूर्वाभाद्र | उत्तरभाद्र | रेवती | अश्विनी | भरणी | कृत्तिका | रोहिणी | मृग | पुनर्वसु | पुष्य | श्रवण | हस्त | चित्रा | स्वाती | नक्षत्राणि |

अथ रव्यादि वारे त्याज्य मुहूर्त्ताः ॥

| अर्य्यमा | ब्रह्मा राक्षस | पितृ अग्नि | अभिजित | राक्षस अंबु | पितृ ब्रह्म | शिव सर्प | मुहूर्त्तानि |
|---|---|---|---|---|---|---|---|
| उत्तराफाल्गुनी | रोहिणी मूल | मघा कृति· | अभिजित | मूल पूर्वाषा· | मघा रोहि· | आर्द्रा श्लेषा· | नक्षत्र |
| दि १४ | दि·९। ११ रा·८ | दि ५। रा·७। | दि·८ रा· | दि·१२ ६ रा· | दि·४।८ रा·९ | दि·१।२ रा·१ | दिन·रात्रि |
| र | चं | मं | बु | बृ | शु | श | वार। |

सत्यू कृत संग्रहे ॥ शिरो मणौ समाप्तेयं चतुर्थीयं प्रभा शुभा ॥ ८५ ॥ इति श्री संग्रह शिरोमणौ नक्षत्र कथनं नाम चतुर्थी प्रभा ॥ ४ ॥

३०

वाक्यते को:धः पुष्य नक्षात्



अथ योग प्रकरणम् ॥ वाक्यतेर्क्क नक्षत्रं श्रवणा च्चान्द्र मेवच ॥ गणयेत्तद्युतिं कुर्य्याद्योगस्या



द्दक्षा प्रोयतः ॥१॥ विष्कुंभः प्रीति रायुष्मान् सौभाग्यः शोभन स्तथा ॥ अतिगण्डः
सुकर्म्माच धृतिः शूल स्तथैवच ॥ २ ॥ गंडो वृद्धि र्ध्रुव श्चैव व्याघातो हर्षण स्त-
था ॥ वज्र सिद्धी व्यती पातो वरियान् परि घः शिवः ॥ ३ ॥ सिद्धिः साध्यः शुभः शु-
क्लो ब्रह्मैन्द्रो वैधृतिः क्रमात् ॥ सप्त विंशति योगास्तु कुर्युर्नाम समं फलम् ॥ ४॥
विरुद्ध संज्ञा इह येच योगा स्तेषा मनिष्टः खलु पाद आद्यः ॥ सवै धृतिस्तु व्यतिपा-
त नामा सर्वो प्यनिष्टः परि घस्य चार्द्धम् ॥ ५॥ तिस्रस्तु योगे प्रथमेच वज्रे व्या-
घात संज्ञेन व पंच शूले ॥ गंडेति गंडेच षडेव नाड्यः शुभेषु कार्य्येषु विवर्जनी
याः ॥ ६ ॥ द्विवेदि कुल संभूत सरयू ज्ञात संग्रहे ॥ शिरो मणौ समाप्तेषा पंचमी-
यं प्रभा शुभा ॥ ७ ॥ इति श्री संग्रह शिरो मणौ योग कथनं नाम पंचमी प्रभा ॥
५ ॥ अथ करण प्रकरणम् ॥ गताश्च तिथयो निघ्नाः द्वाभ्यां शुक्ला दितः क्रमात् ॥ एकोनाप्तस

मकि हच्छेषाः करणं स्याद्ववादिकम् ॥ १ ॥ ववाद्व्यं बालवं कौलवं च खैतं ततो भवेत्तैतिल
३२ नामधेयम् ॥ गराभिधानं वणिजं च विष्टि रित्याहुरार्याः करणानि सप्त ॥ २ ॥ अंते कृ-
ष्णचतुर्दश्यां शकुनिर्दर्शभागयोः ॥ शेषं चतुष्पदं नागं किंस्तुघ्नं प्रतिपद्दले ॥ ३ ॥
अथ करणानां स्वामिनः ॥ इन्द्रो ब्रह्मामित्र नामार्य्यमाभूः श्रीः कीनाशश्चेति तिथ्यर्धनाथाः
॥ कल्युक्षाख्यो सर्पवायुस्तथैवं चत्वारस्ते स्थिराणां चलानाम् ॥ ४ ॥ पौष्टिकस्थिरशु
भानि ववाख्ये बालवे द्विजहितान्यपि कुर्य्यात् ॥ कौलवे प्रमदमित्रविधानं तैतिले शुभ
गताश्रयकर्म्म ॥ ५ ॥ गरे च बीजाश्रयकर्षणानि वाणिज्यकेऽस्थैर्यवणिक्क्रियाश्च
॥ न सिद्धिमायाति कृतं च विष्ट्यां विषारिघातादिषु तत्र सिद्धिः ॥ ६ ॥ मंत्रौषधानि श-
कुनौ तु सपौष्टिकानि गोविप्रराज्यपितृकर्म्म चतुष्पदे पि ॥ सौभाग्यदारुण ध्रुवि भव
कर्म्म नागे किंस्तुघ्ननाम्नि निखिलं शुभकर्म्म कार्यम् ॥ ७ ॥ अथ भद्रायां विशेषः ॥ ए-
कादश्यां चतुर्थ्यां च भुक्ते पक्षे परे दले ॥ अष्टम्यां पूर्णिमायां च भद्रा पूर्व दले स्मृता ॥ ३२

८ ॥ तृतीयायां दशम्यांच कृष्णे पक्षे परे दले ॥ सप्तम्यां च चतुर्दश्यां भद्रा पूर्व दलेभ-
वेत् ॥ ९ ॥ अथ भद्रायाः अंग विभागः फलंच ॥ नाड्यस्तु पंच वदने च गले तथै का वक्षो
दशैक सहितं निहितंच तस्मः ॥ नाभ्यां कटौयद्द्य पुच्छ लतासु तिस्रो विदेर्बुधै रभि-
हितोंग विभाग एषः ॥ १० ॥ स्थान फलम् ॥ मुखे कार्य ध्वस्ति र्भवति मरणं चाथ गलके
धना हानि र्वक्षस्यथ कटि तटे बुद्धि विलयः ॥ कलिर्नाभौ देशे विजय मथ पुच्छे च
जगदुः ॥ शरीरे भद्रायाः पृथगिति फलं पूर्व मुनयः ॥ ११ ॥ अथ भद्रा वासः ॥ मीने मे
षालि कर्के प्राशि निनि वसति स्वर्ग संस्थापि विष्टिः ॥ कन्यायां तौलि संस्थे धन मिथु-
न गते नाग लोके निवासः ॥ १२ ॥ कुंभे सिंहे वृषे वामकर सुपगते राज ते मृत्यु लोके ॥
भद्रा चंद्र प्रभावात् मकर तनया नो शुभा लौकि के स्यात् ॥ १३ ॥ स्थान फलम् ॥ स्वर्गे
भद्रा भवेत्सौख्यं पातालेच धनागमः ॥ मृत्यु लोके यदा भद्रा कार्य्य सिद्धि स्तदा न-
हि ॥ १४ ॥ अथ वाराणां फलम् ॥ सोमे शुक्रेच कल्याणी शनौ चैव तु वृश्चिकी ॥ गुरौ पुण्य

म॰ चि॰ ३४

वती ज्ञेया चान्य वारेषु भद्रका ॥ २५॥ कार्य्ये ऽत्यावश्यके विष्टेर्मुखमात्रं परित्यजे-
त् ॥ अथ भद्राया:दिङ्मुखम् ॥ शक्रा १४ष्ट ८ मुनि ७ तिथ्य १५ब्धि ४ दि १० मुद्रा ११ विन ३
सिते तिथौ प्रथमादि षु यामेषु दिक्षु पूर्वा दितः क्रमात् ॥ १६ ॥

| शुक्ले भद्रायां पंच घटी भद्रा मुखगं | | | | |
|---|---|---|---|---|
| ४ | ८ | ११ | १५ | [illegible] |
| ५ | २ | ७ | ४ | |
| प | आ | उ | ऐ | |

| | | | |
|---|---|---|---|
| ३ | ७ | १० | १४ |
| ८ | ३ | ६ | १ |
| दृ | द | वा | पू |

कृष्णे भद्रायां त पंच घटी भद्रा मुखम् ॥

विष्टेर्मुखं विजानीयाच्छुभं दृष्टेऽगतो ऽशुभम् ॥ अथ भद्रा पुच्छम् ॥
चतुर्थ्यां चाष्टमे यामे प्रथमे चाष्टमी दिने ॥ एकादश्यां तथा षष्ठे पौर्णमास्यां तृतीयके
॥ १७ ॥ एवं घटी त्रयं पुच्छं कृष्णपक्षे त्वथो च्यते ॥ १८ ॥ सप्तमे स्यात्तृतीयायाम
स्तसम्यास्तु द्वितीयके ॥ दशम्यां पंचमे यामे चतुर्दश्यां चतुर्थके ॥ १९॥ विष्टेः पुच्छे
जयो युद्धे कार्य्य मन्यच्च शोभनम् ॥ अथ भद्रा कर्म्माणि ॥ वध बंध विषाग्न्यस्त्रच्छेदनोच्चा-
टनादिकम् ॥ तुरंग महिषोष्ट्रादि कर्म विष्ट्यांतु सिद्ध्यति ॥ ३० ॥ अथ भद्रायां दोषापवादः
॥ तिथेः पूर्वार्द्धजा रात्रौ दिने भद्रा परार्द्धजा ॥ भद्रा दोषो न तत्र स्यात् कार्य्येऽत्या-

(धि २५

वश्य के सुनि ॥ २१ ॥ वैधृतौ व्यतिपाता रव्ये विष्टयां भौमे च वासरे ॥ तथैव दुष्टता
रासु मध्यान्हात्परत प्रशुभः ॥ २२ ॥ अथ भद्राविषये कस्य चिन्मते विशेषः ॥ शुक्ले तु वृश्चि
की भद्रा कृष्ण पक्षे भुजंगमा ॥ सादिना सर्प्पिणी रात्रौ वृश्चिकी त्यपरे जगुः ॥ २३ ॥ मु-
खं त्याज्यं तु सर्प्पिण्या वृश्चिकयाः पुच्छमेव च ॥ खरास्याः प्रसवे दुर्गा पूजने दान कर्म्म-
णि ॥ २४ ॥ दाह घातादि के भद्रा प्रशस्ता नान्यत्र शोभना ॥ दैत्येंद्रैः समरे भवेषु वि
जिते व्योमेशः क्रुधा दृष्टवान् ॥ ॥ स्वात्कायात्किल निर्गता खरमुखी लांगूलि-
नी च त्रिपात् ॥ विष्टि सप्तभुजा मृगेन्द्र गल काक्षामोदरी प्रेतगा दैत्यघ्नी मुदितो
सुरैस्तु करणांते नियुक्ता तु सा ॥ २६ ॥ द्विवेदि कुल संभूत सरयू कृत संग्रहे ॥ शिरो
मणौ समाप्ते वा षष्ठो यं हि प्रभा शुभा ॥ २७ ॥ इति श्री संग्रह शिरो मणौ करण क-
थनं नाम षष्ठी प्रभा ॥ ६ ॥ अथ तारा प्रकरणम् ॥ सपाद र्क्ष द्वयं भोगे मेषादीना मनु-
क्रमात् ॥ अश्विन्य आद्रेव तीया च द्वाशि भोगो न वांछितः ॥ १ ॥ अथ राशयः ॥ अश्विनी

भरणी धिसे कृत्तिका प्रथमां घ्रिकम् ॥ मेषस्स्यात्कृत्तिका पाद त्रितयं रोहिणी तथा ॥ २
॥ वृषभो मृग पूर्वार्द्ध तदर्द्धं च तथार्द्रभम् ॥ पादत्रयं पुनर्वस्वोः सराशिर्मिथुनाभि-
धः ॥ ३ ॥ तदंत्यों ऽघ्रिस्तथा पुष्यो ऽश्लेषा कर्कटाभिधः ॥ मघा पूर्वोत्तराद्यों ऽघ्रिः
सिंहस्तच्चरणत्रयम् ॥ ४ ॥ हस्त चित्रा भ पूर्वार्द्धं कन्या चित्रोत्तरं दलम् ॥ स्वाति
भं च विशाखाया श्चरण त्रितयं तुला ॥ ५ ॥ तदंत्योंघ्र्यनुराधाख्ये ज्येष्ठा भं वृश्चिकः
स्मृतः ॥ मूलं पूर्वोत्तराषाढा प्रागंघ्रिः कथितो धनुः ॥ ६ ॥ उत्तरांघ्रित्रयं कर्ण ध-
निष्ठा प्रथमं दलम् ॥ मकराख्यो धनिष्ठा त्रिर्दलं च शत तारका ॥ ७ ॥ पूर्वा पाद
त्रयं कुम्भ स्तदंत्य श्चरण स्तथा ॥ उभा भं रेवती चैव मीन राशिः प्रकीर्त्तितः ॥ ८ ॥
अथावकहड चक्रानुसारेण नक्षत्र चरणानां वर्णाः ॥ अश्विनी तु चु चे चो ला लि लू ले लो भर-
ण्यपि ॥ कृत्तिका स्या द इ उ ए रोहिण्या वा वि वु स्मृता ॥ ९ ॥ वे वो क कि मृगाख्या-
र्द्रा कु घा ङ छा प्रकीर्त्तिता ॥ के को ह हि पुनर्भं स्याद्धु हे हो डा च पुष्यभम् ॥ १० ॥ अश्ले

पा तु डि टू टे डो मामी मूमे मघा स्मृतम् ॥ मोटा टीटू तु पूर्वा ख्या मुफा दे दो पश्चि स्मृता ॥ २१॥ प्रोक्तः पूषणा ठो हस्तः पे पो ररितु चित्र का ॥ रूरे रोता तथा स्वातीति तूते तो वि-
शाखिका ॥ २२॥ अनुराधा ननी नूने ज्येष्ठा नोया यियुर्मता ॥ तथा येयो भभी मूलं पूर्वा षाढा भुधा फढा ॥ २३ ॥ भे भो जज्युत्तरा षाढा जूजे जो षा तथा भिजित् ॥ खि
खू खे खो श्रवो ज्ञेयः गगी गूगे धनिष्ठिका ॥ २४ ॥ गोसा सिसू शतता स्यंच पूर्वा-
सेसो ददी सता ॥ ऊभा दूथा ऊजा ज्ञेया दे दो चचिच रेवती ॥ २५ ॥ अथ चंद्रस्य शुभाशु-
भफलम् ॥ स्वजन्म राशि मारभ्य चंद्र राशि स्थितं फलम् ॥ चंद्रे जन्म स्थिते तुष्टिः
द्वितीये नो सुख भवेत् ॥ २६ ॥ तृतीये धन लाभ श्च चतुर्थे रोग संभवः ॥ पंचमे का-
र्य नाशश्च षष्ठे द्रव्या गमो महान् ॥ २७ ॥ सप्तमे भूप सन्मानं त्वष्टमे मरणं ध्रुवम्
॥ नवमे च भयं ज्ञेयं दशमे कार्य्य संपदः ॥ २८ ॥ एका दशो ऽर्थ लाभ श्च द्वादशे विवि
धापदः ॥ अथ शुक्ल पक्षे विशेषः ॥ द्वितीयः पंचम श्चन्द्रो नवमो ऽपीज्य वच्छुभः ॥ शुक्ल

पक्षे विपर्ययो ऽयं तुल्य मन्य त्तयो भयोः ॥ २० ॥ चन्द्रस्यैव बलः शुक्ले न तु तारा विधा
नता ॥ सति कांते बलो पेते स्वातं श्यंन च योषितः ॥ २१ ॥ कृष्ण पक्षेतु तारायाः बल
गात्रं सदा यतः ॥ स्नीरो च शोषिते कांते गार्हस्थं गेहिनी चरेत् ॥ २२ ॥ अथ तारा बल
म् ॥ जन्म भा दिन भं या वत्तारान्त्ये या न वोद्धते ॥ जन्म सं पद्वि पत्क्षे म पाप सिद्ध व-
धाः क्रमात् ॥ २३ ॥ मित्राति मित्र संज्ञं च नाम तुल्य फला स्मृताः ॥ द्वि श्च तुः षष्ठ
नवाष्टम्य स्तारा श्रेष्ठ तमा मताः ॥ २४ ॥ जन्माख्या मध्यमा ज्ञेया नेष्टा स्त्व न्याः
प्रकीर्तिताः ॥ अथावश्य के तारा णांत्याज्यां शाः ॥ तारा पूर्णा त्यज्ये दाद्या वर्त्त पंच त्रि सप्त-
काः ॥ २५ ॥ द्वितीये चैव तत्पादः तुर्य्य का वा स्तृतीय काः ॥ तृतीये तु शुभा स्सर्वाः
कार्ये त्यावश्य के स्मृताः ॥ २६ ॥ अथ दुष्ट तारा सुदानम् ॥ सप्तम्यां तार का यां च दद्या-
त्स्वर्णं तिला नपि ॥ गुडं तृतीय तारायां पंचम्यां लवणं तथा ॥ २७ ॥ दोषा पनुत्तये ता-
सां दद्याच्छाके त्रिजन्म सु ॥ अथ चन्द्रावस्था ॥ निशा करस्य या वस्था नर राशिस्तम-

िता ॥ नवा नत्या च राज्ञीया प्रवासाद्य के प्रोषिता ॥ २८ ॥ षष्ठिघ्नं गतभं भुक्तघटी
युक्तं मृगा हतम् ॥ प्राणाभि हतम्थ तोऽर्क शेषेऽवस्थाः क्रिया द्विधौः ॥ २९ ॥ अ-
श्यार्थः ॥ अश्विनी मारभ्य गतभानि षष्ट्या ६० गुणयित्वा निवर्त्तमान नक्षत्र भुक्त घटी युता
नि तानि पुनर्युगे मृगतुर्भिरादत्ता निश्शराभि द्वत पंच चत्वारि      शता भाज्या निय
लब्धमागतं गतावस्थास्ताः शेषं वर्त्तमानावस्था या तत्र लब्धांकस्यापि द्वादशाधि
के द्वादशभि र्भागे शेषं प्रवासाद्यवस्था चंद्रस्य गताः स्युः ताः ॥ अवस्था मेष राशेः
पुनः प्रवासादि संज्ञाः वृष राशे र्नष्टा संज्ञा स्वाँसि पुनादि द्वादश राशिषु मृतादि सं
ज्ञा नत्वा द्वितौ द्वादशावस्थाः क्रमेण भवंतीत्यर्थः ॥ २९ ॥ प्रवासोऽथ विनाशश्च
मरणं जय हास्य के ॥ रतिः क्रीडा तथा सुप्ता भुक्ता चाथ जरा भिधा ॥ कंपिता सुस्थिराव
र्णा द्वादशैता विधोस्मृताः ॥ ३० ॥ तासां माने सपादे का दश नाडी सितं भवेत् ॥
शेषाः स्तिः प्रवासाद्याः नामतुल्य फल प्रदाः ॥ ३१ ॥ मेष राशौ प्रवासाद्या नाप्रा

ग्रहपर्भ निधो ॥ गुरा त्रा मिथुने देवं काजा द्वादश राशिषु ॥ ३२ ॥ अथ कार्ये [illegible]
म ॥ उद्वाहे चोत्सवे जीवः सूर्यो भूपाल दर्शने ॥ संग्रामे धरणी पुत्रो विद्याभ्यासे बुधोप [illegible]
॥ ३३ ॥ यात्रा यां भार्गवः प्रोक्तो दीक्षा यांच शनैश्चरः ॥ चंद्रमाः सर्व कार्येषु प्रशस्तो
स्मृतो बुधैः ॥ ३४ ॥ अथ चंद्र बले विशेषः ॥ शुभ स्त्रंद्रोप्य सत् पापा त्सतनः पाप युक् तथा
॥ पाप मध्य गतः क्षीणो नीच गश्चाशु वर्गगः ॥ ३५ ॥ अशुभोऽपि शुभ श्चंद्रो गुरुणा
लोकितो युतः ॥ स्वर्शोच्चस्थ श्शुभां शोवा त्वाधि मित्रांशकेऽथवा ॥ ३६ ॥ अथ पापवस्तेरान
न ॥ नंदु लोयस्व तिथो शुक्रे वारे रत्नं सकांचनम् ॥ गासृक्षे कनकं योगे करणे धान्य मेवच ॥
३७ ॥ शस्त रोप्य युते चंद्रे ताराणां सैंधव तथा ॥ नाड्यां देस नृपो दद्या त्कार्येऽत्याव श्यके-
सति ॥ ३८ ॥ इति दिकुल संभूत सरयू कृत संग्रहे ॥ शिरो मणो समाख्ये या सप्तमी यं प्रभा
शुभा ॥ ४० ॥ इति श्री संग्रह शिरो मणौ तारा कथनं नाम सप्तमी प्रभा ॥ ७ ॥ अथ शुभा-
शुभ नक्षत्राणि ॥ स्त्री सेवनं पर्व सुपक्ष मध्ये पलंच षष्ठी श्रुच सर्व तैलम् ॥ क्षणं विनाशन

य चतुर्द्दशी सु क्षुर क्रिया स्याद् सकृत दासु ॥ १ ॥ व्यती पातेच संक्रांता वेका दश्यां चप र्वसु ॥ अर्क्क भौम दिने विस्यां नाभ्यं गंन च वैध्रतौ ॥ २ ॥ पर्वाणि ॥ चतुर्दश्यष्टमी कृस्ना ऽमा वास्या च पूर्णिमा ॥ पुण्यानि पंच पर्वाणि संक्रांति र्दिन पस्य च ॥ ३ ॥ अत्र तिथि स्तात्कालिकी ॥ स्नाने वाभ्यं जने चैव दंत धावन मैथुने ॥ तिथि स्तात्कालिकी ग्राह्या तथा मरण जन्म नोः ॥ ४ ॥ त्रयोदश्यां द्वितीयायां सप्तम्यां च विशेषतः ॥ प्रऌद्ध विद स्त्रियास्नानं नाच्चरेयुः कदाचन ॥ ५ ॥ कामडुगांत करविनद्धं द्ध - र्के दिने ध्रुच ॥ सद्धदाम लक स्नानं संपत्पुत्र विना शनम् ॥ ६ ॥ सप्तम्यष्टा नवमी सु देह श्री संतती रामल के नरस्य ॥ स्नानं निहं त्यं त्य दिने तु धत्ते तिलै श्रियं पुण्य करंसदैव ॥ ७ ॥ अथ दग्धयोगाः ॥ एकादशी चेन्दु वारे द्वादशी चार्क वासरे ॥ षष्टी र हस्पते वारे त्रतीया वुध वासरे ॥ ८ ॥ अष्टमी शुक्र वारे च नवमी शनि वासरे ॥ पंचमी भौम वारेच दग्ध योगाः प्रकीर्त्तिताः ॥ ९ ॥ अथ विषयोगः ॥ षष्ठी शशांके नवमी च

शुक्रे बुधे द्वितीया तपने चतुर्थी ॥ जीवेऽष्टमी सौरि कुजे न्हि सप्तमी योगा विषाख्याः
शुभ नाशनास्स्युः ॥ १० ॥ अथ हुताशन योगः ॥ सप्त षष्ठ्यादि तिथयः सोमवारादि
भिर्युताः ॥ अग्नि जिह्वा स्सप्त योगाः मंगले व्यति गर्हिताः ॥ ११ ॥ अथ यम घंटः ॥
मघा विशाखा आर्द्राच मूलं श्रवणंच कृत्तिका ॥ रोहिणी हस्त संयुक्ता यम घंटाः क्रमा
द्रवेः ॥ १२ ॥ एषामपवादः ॥ दिवा मृत्यु प्रदाः पाप दोषा स्त्वे तेन रात्रिषु ॥ शुभ
कार्ये प्रसूतोच सर्वदा परि वर्जयेत् ॥ १३ ॥ आवश्यक कृत्ये ॥ यम घंटे त्यजे दष्टौ
त्यौ द्वादश नाडिका ॥ अन्येषां पाप योगानां मध्यान्हा त्परत श्शुभम् ॥ १४ ॥
अथ चैत्रादि मासे तिथि शून्याः ॥ अष्टमीनवमी चैत्रे पक्षयो रुभयो रपि ॥ माधवे द्वादशी
त्याज्या पक्षयो रुभयोरपि ॥ १५ ॥ज्येष्ठे त्रयो दशी निंद्या शिते कृष्णे चतुर्दशी
॥ आषाढे कृष्ण पक्षस्य षष्ठी शुक्ले तु सप्तमी ॥ १६ ॥ द्वितीयाच तृतीयाच श्राव-
णे शित कृष्ण योः ॥ प्रथमा च द्वितीया च नभस्ये मासि निंदिते ॥ १७ ॥ दशम्ये

कादशी निंद्या मासी वे शुक्ल कृष्णयोः ॥ ऊर्ज्जे चतुर्दशी शुक्ला कृष्ण पक्षेतु पंचमी
॥ १८ ॥ सप्तमी चाष्टमी सौम्ये पक्षयो रुभयोरपि ॥ पौषे पक्ष द्वये चैव चतुर्थी पंचमी त-
था ॥ १९ ॥ माघेतु पंचमी षष्ठी शुक्ले कृष्णे यथा क्रमम् ॥ तृतीयाच चतुर्थीच्च फा-
ल्गुने सित कृष्णयोः ॥ २० ॥ तिथयो मास शून्याख्या वंश वित्त विनाशकाः ॥ आ-
सु श्राद्धं प्रकुर्वीत नैव सन्मंगलं क्वचित् ॥ २१ ॥ अथ नक्षत्र दोषः ॥ द्वितीयया चानु-
राधा श्चुत्तराच तृतीयया ॥ पंचमीच मघा युक्ता चित्रा स्वात्यो स्त्रयो दशी ॥ २२ ॥ प्र-
तिपद्यु त्तराषाढा नवम्यां कृत्तिका यदि ॥ सप्तम्यां हस्त मूले च षष्ठ्यां त्वाष्ट्रं भवे यदि
॥ २३ ॥ पूर्वाषाढ पदा ष्टम्यां एका दश्याच रोहिणी ॥ द्वादश्यांच यदाश्लेषा त्रयो-
दश्यां मघा यदि ॥ २४ ॥ शुभ कार्य्ये कृते चेत्स्या त्स्वरामा सान्मरणं ध्रुवम् ॥ अथ चै-
त्रादि मासे शून्य नक्षत्राणि ॥ अश्विनी रोहिणी चैत्रे शून्ये भे परि कीर्त्तिते ॥ चित्रा स्वाती
च वैशाखे ज्येष्ठे विश्वेज्य तारके ॥ २५ ॥ भग वासव वाषाढे श्रावणे हरि विश्वभे ॥

श्रि. ४२

॥ नभस्ये वारुणं त्वर्द्रमजपादश्व युग्यपि ॥ २६ ॥ कार्त्तिके पित्र्यब्रह्मर्क्षे सोम्ये चित्रा द्विदैवते ॥ पौषे दस्रकराद्रीः स्युर्माघे मूलंच विष्णुभम् ॥ २७ ॥ तपस्ये-शाक्रभरणी शून्यभान्याङ्गुरग्रजाः ॥ एषु यत्तु कृतं कर्म्म धनेस्सह विनश्यति ॥ २८ ॥ अथ चैत्रादि मासेषु शून्य राशयः ॥ घट मत्स्य वृषा युग्म मेष कन्या स वृश्चिकाः ॥ तुला चाप कुली राख्याः मृग सिंहाश्च राशयः ॥ २९ ॥ चैत्रादौ मास शून्याख्याः वंशवित्त विनाशनाः ॥ अथ विषमतिथिषु दग्ध लग्नानि ॥ मृग सिंहौ तृतीयायां प्रथमायां तुला मृगौ ॥ पञ्चम्यां बुधराशी द्वौ सप्तम्यां चाप चंद्रभे ॥ ३० ॥ नवम्यां सिंहकीटाख्यावेकादश्यां गुरोर्गृहे ॥ वृष मीनौ त्रयोदश्यां दग्ध सञ्ज्ञास्त्वमी गृहाः ॥ ॥ दग्ध सञ्ज्ञनियत्कर्म्म कृतं सर्वम्प्रणश्यति ॥ ३१ ॥ अथैतेषां दुष्ट योगानां आवश्यक कृत्ये परिहारमाह ॥ केन्द्रे चैव त्रिकोणेच शुभे सुपचयेऽपिवा ॥ एकोऽपि बलवाँश्चापि शून्यतिथ्युड्ड नाशकः ॥ ३२ ॥ तिथयो मास शून्याश्च शून्य लग्नानि यान्यपि

॥ मध्य देशे विवर्ज्यानि नदू व्याणी तरे युतु ॥ ३३ ॥ पंग्वंध काण लग्नानि मास
शून्या श्च राशयः ॥ गौड ˉ माल वयो स्त्याज्या अन्य देशे न गर्हिताः ॥ ३४ ॥ वर्जयेत्स
र्व कार्येषु हस्तार्क स्पंच मी तिथौ ॥ भौमा श्विनी च सप्तम्यां षष्ठ्यां चंद्रै द्र वं तथा॥
॥३५॥ बुधा नुराधा मष्टम्यां दशम्यां भृगुरेवतीम् ॥ नवम्यां गुरु पुष्यं चैका दश्यां श
नि रोहिणी म् ॥ ३६ ॥ गृह प्रवेशे यात्रा यां विवाहेच यथा क्रमम् ॥ भौमे ऽश्विनी
शनौ ब्राह्मं गुरौ पुष्यं विवर्ज येत् ॥ ३७ ॥ हस्ते रवौ प्रा प्र धेरण मृगो त्तमां गं भौमेः
श्विनी बुध दिने च तथा नुराधा ॥ पुष्ये गुरौ भृगु सुते ऽपिच पौत्तधिदंमंयरोहिण्ययार्कत
नये ऽमृत सिद्धि योगा : ॥ ३८ ॥ यदि विष्टिव्यती पातो दिनं वाप्य शुभं भवेत् ॥ ह
न्यते ऽमृत योगेन भास्करेण तमोयथा ३६ अथा नंदादि योगः ॥ आनंदः काल दंड श्च धू
म्राक्षो ऽथ प्रजापतिः ॥ सौम्यो ध्वांक्षो ध्वज श्चापि श्री वत्सो वज्र मुद्गरौ ॥ ४० ॥
छत्रं मित्रं क्रसे रौव मानसः पद्म लुंब को ॥ उत्पात मृत्यु काणा ख्याः सिद्धि श्चैव शु-

न.वि. भा स्तुतो ॥ ४१ ॥ मुशलंच गदाख्यश्च मातं गोरस सप्तरः ॥ स्थिरः प्रवर्द्ध मानश्च

४६ नाम तुल्य फला ऽश्रमी ॥ ४२ ॥ भानु वारे ऽश्विनक्षत्रात्साभिजित्कैस्त सर्वभैः ॥

भवंति क्रमशो योगाः ऽष्टा विंशति संख्यकाः ॥ ४३ ॥ मृगा दारभ्य रात्री प्रो क्ले-

पातः कुज वासरे ॥ हस्ता द्बुधे ऽनुराधायाः गुरु वारे तथैवच ॥ ४४ ॥ उत्तराषाढत

श्शुक्रे प्रात तारादितः शनौ ॥ अथैतेषु कियद्दुष्ट योगाः त्याज्यांशाः ॥ ध्वांक्षेऽश्यायुध मुद्गरेषु

घटिका स्त्याज्या स्तु पंचादितः पद्मलुंबकयो श्च तत्र चदिता धूम्रे सदे कापुनः ॥

देःकाणे मुशला ह्वये ऽपिच गदे संख्ये वति स्त श्वरे म्रत्यूत्पात करस्स सांदिन गता स्ताः

काल दंडे तथा ॥ ४५ ॥ अथ दोषापवाद भूतार वियोगाः ॥ सूर्य्याच्चतुर्थे दशमे च पञ्चे विश्व

र्क्षे के विंशति मे न वर्क्षे ॥ भवंति पञ्चानु स रक्ष योगाः कुयोग विध्वंस कराः प्रदिष्ठाः

॥ ४६ ॥ सिद्धियोगः ॥ ज्येष्ठा वार्ह्नि मघा विशाख बसवो मैत्रं य मास्य रवौ सोमे सैव वि-

शाख पुष्य मवना श्चित्रा त्व षाढा द्वयम् ॥ भौमे विश्व जलेश मित्र नसवः प्राश्मा द्र

४६

सर्पौ शिवः   शूली रेवति पूर्वयोनि भरणी वस्वश्वि मूला बुधे ॥ ४७ ॥ जीवे मूल मघार्द्र याम्य वरुणाः पूषा शशी रोहिणी   शुक्रे स्वाति भुजंग देवत मघा पुष्योत्तरा रोहिणी ॥ सौरा वर्य्यम मूल हस्त वरुण पादा द्वयं रेवती चित्रा विस्नु मघाश्व सर्व समये त्याज्या अयोगा इमे ॥ ४८ ॥ अथसिद्धियोगः ॥ सूर्य्येऽर्के मूलोत्तर पुष्य दास्तं चन्द्रे श्रुति ब्राह्म शशीज्य मैत्रम् ॥ भौमे ऽश्वहि र्बुध्न्य कृशानु सार्प्यं ज्ञे ब्राह्म मैत्रार्क कृशानु चांद्रम् ॥ ४९ ॥ जीवेन्त्य मैत्राश्व्य दिती ज्य धिष्ण्यं शुक्रेन्त्य मैत्राश्व्य दितिश्रवोभम् ॥ शनौ श्रुति ब्राह्म समीर भानि सर्वार्थ सिद्धौ कथितानि पूर्वैः ॥ ५० ॥ हस्ताग्नी या द्वाश्र वात्यौस्त भाच्च ब्राह्मा त्पुष्या द्यर्य मर्क्षाच्च तुर्भैः ॥ स्याडुत्पातो मृत्यु काणौ च सिद्धि र्वारेऽर्कादौ तत्फलं नामतुल्यम् ॥ ५१ ॥ कुयोगास्तिथि वारोत्थास्तिथि भोत्था भवारजाः ॥ हूण वंग खसेष्वेव वर्ज्यास्त्रितय जास्तथा ॥ ५२ ॥ अथवारनक्षत्रोत्पन्नसिद्धियोगः ॥ मूलं मर्के ध्रुव मिन्दे भौमे चोत्तर भाद्रपात् ॥ कृत्तिका बुधवारे

१ वि ७

८७

नु गुरु वारे पुनर्वसुः॥ मूला शुक्रे शनौ स्वाती सिद्धि योग उदाहृतः ॥ ५३ ॥ अथ तिथि
वारोत्था दुष्ट योगाः ॥ द्वादश्य र्के विधौ षष्ठी भौमे सप्ताष्टमी बुधे ॥ दशे शुक्रे शनौ रुद्रो गु
रौ नव हृता शनौ ॥ ५४ ॥ द्वादश्य र्के विधौ रुद्रो भौमे पंच बुधेऽग्नयः ॥ गुरौ ष
ष्ठ्यष्टमी शुक्रे दग्धा रव्यो नवमी शनौ ॥ ५५ ॥ चतुर्थ्य र्के विधौ षष्ठी द्वितीया च
ऽष्टमी गुरौ ॥ नव शुक्रे विशाखश्च सप्तमी कुज मंदयोः ॥ ५६ ॥ शनौ षष्ठी भृगौ
सप्ताष्टमी जीवे बुधे नव ॥ कुजे दश विधौ रुद्राः कर्क चो द्वादशी रवौ ॥ ५७ ॥ त्रांति
पत्न्नो रवौ सप्त संवर्तो योग ईरितः ॥ दग्धा दीन् तिथि वारोत्थान् त्यजेत् योगान्
शुभे सदा ॥ ५८ ॥ अथ नक्षत्रा द्विहितोऽपि त्याज्य स्तिथिः ॥ द्वितीया मनुराधायां मघायां
पंचमी तिथिम् ॥ त्यजेत्षष्ठीं च रोहिण्यां पूर्व भाद्र पदेऽष्टमीम् ॥ ५९ ॥ अथ मृत्यु योगाः॥
अनुराधा रवौ सोमे उत्तरा षाढ संभवम् ॥ बुधेऽश्विनी भृगो जीवे शुक्रे श्लेषा शनौ
करः ॥ ६० ॥ भौमे शत भिषा चार्य्यै र्मृत्यु योगोऽर्थ नाशकः ॥ अथ दग्धा तिथि योगः॥

भरण्य कें विधो चित्रा जीवे चोत्तर फाल्गुणी ॥ भौमे चैवोत्तरा पादा धनिष्ठा वुधवासरे ॥ ९२ ॥ शुक्रे ज्येष्ठां त्यसं मंदे त्यजे देत द्वि दग्ध भम् ॥ अथ त्रिविध गंडांतं ॥ नक्षत्र तिथि राशी नां गंडांतं त्रि विधं त्यजेत् ॥ ९३ ॥ नव पंच चतुर्थ्यां ते द्वेकार्द्ध घटिका मतम् ॥ तावन्मितं ततो ऽग्राणां आदा वपि परि त्यजेत् ॥ ९४ ॥ ज्येष्ठा मूल र्द्धयोः संधौ रेवत्य श्वि भयो स्तथा ॥ वृश्चिकाख्य धनुः संधौ लग्न स्यैक घटी मतम् ॥ ९५ ॥ अथार्द्धयामः ॥ अर्द्ध यामाः परित्याज्या वेद सप्त द्वि पंच माः ॥ अथ त्रिपद्य संख्याकाः क्रम शोर वि वासरात् ॥ ९६ ॥ अथ कुलिक कंटक काल वेला यम घंटा ख्याः त्याज्य मुहूर्ताः ॥ मन्वर्क दश नाग र्तु वेद नेत्र मिताः क्षणाः ॥ कुलिकाख्या रवे र्वार क्रमतः कंटका वुधात् ॥ ९७ ॥ गुरो स्तु काल वेला ख्या शुक्रात्ते यम घंटकाः ॥ त्यजे देतान् शुभे कार्य्ये निशी थे तु मुहूर्त कान् ॥ ९८ ॥ अथ दुष्ट क्षणः ॥ क्षणः चतुर्दशः सूर्ये नव द्वादश को विधौ ॥ सप्तमो निशि भौमेन्हि तुर्य्य श्चाथ वुधे ऽष्टमः ॥ ९९ ॥

षष्ठ द्वादश को जीवे चतुर्थ नवमे भृगौ ॥ शनौ चाद्य द्वितीयोच त्याज्या दुष्ट क्षण

अथ दुष्ट क्षण चक्रम्

| सू. | च | म | बु | बृ | शु | श |
|---|---|---|---|---|---|---|
| १४ | ९ | ७ | ८ | ६ | ४ | १ |
| + | १२ | ४ | + | १२ | ९ | २ |

दूसे ॥ ७० ॥ रवौ षट् ६ दश १० सप्त ७ वसु ८ मनु १४

दिवा कुलिका दीनां चक्रम्

| सू. | च. | म | बु | बृ | शु | श |
|---|---|---|---|---|---|---|
| १४ | १२ | १० | ८ | ६ | ४ | २ |
| ६ | ४ | २ | १४ | १२ | १० | ८ |
| ८ | ६ | ४ | २ | १४ | १२ | १० |
| १० | ८ | ६ | ४ | २ | १४ | १२ |

रात्रौ कुलिका दीनां चक्रम्

| र | चं | मं | बु | बृ | शु | श |
|---|---|---|---|---|---|---|
| १३ | ११ | ९ | ७ | ५ | ३ | १ |
| ५ | ३ | १ | १३ | ११ | ९ | ७ |
| ७ | ५ | ३ | १ | १३ | ११ | ९ |
| ९ | ७ | ५ | ३ | १ | १३ | ११ |

संख्य मुहूर्त काः ॥ चंद्रेऽब्धि ४ वसु ८ षट् ६ द्वि  श्व १३ मनु १४ स्वेदा ९ र्क १२ संमिताः ॥ ७१ ॥ भौमे द्वि-२ त्रि ३ चतुः ४ षष्ठ ६ दश १० संख्या क्षणाः स्मृताः ॥ बुधे वेदा ४ श्वि २ वस्वंके मनु १४ दिक् १० प्रमिताः क्षणाः ॥ ७२ ॥ जीवे भूपा १६ श्वि २ तिथ्यं १५ गर्ई मनु १४ सूर्य्या १२ सिता स्मृते ॥ शुक्रे पंचां-

१ ति
५१

५ क ९ षट् ६ वेद ४ दिग १० र्को १२ मनु १४ संमिताः ॥ ७३ ॥ मंदे भू१ नेत्र २ रुद्रा ११ ष्ट ८ दशा १० दित्य १२ मुहूर्त काः ॥ त्याज्या पंच दशांघ्रा श्चावुधे रुद्रा क्षणा द्गुने ॥ ७४ ॥ अथ देश भेदेन त्याज्य दोषा. ॥ विंध्य-हे माद्रि मध्येतु मघाधेयमघंटकः ॥ अंगांधे मत्स्य देशे वा दोष रुन्ने तरत्रसः ॥ काश्मीरे कुलिक स्त्याज्य स्त्व-र्द्ध याम स्तु सर्वतः ॥ ७५ ॥ अथ संक्रांतौ त्याज्य कालः ॥ अयने विषुवे त्याज्यं पूर्वं मध्य परं दिने ॥ शेष संक्रम णे पूर्वं पश्चा त्षोडश नाडिकाः ॥ ७६ ॥ अथ तिथि क्षय वृ-द्धि दोषः ॥ तिथीनां त्रितयं वार मेकं स्पृशति यत्र वै ॥ अ व मंत दिनं ज्ञेयं शुभ कर्म सुसं त्यजेत् ॥ ७७ ॥ वारा णां त्रितयं यत्र तिथिरे का स्पृशे द्यदा ॥ त्रिद्यु स्स्पृशे ति

रव्यादिवारे रात्रौ मुहूर्त्ता त्याज्या. ॥

| सू | च | म | बु | बृ | शु | श |
|---|---|---|---|---|---|---|
| ६ | ४ | २ | ४ | १६ | ५ | १ |
| १० | ८ | ३ | २ | २ | ९ | २ |
| ७ | ६ | ४ | ८ | १५ | ६ | ११ |
| ८ | १३ | ६ | ९ | ६ | ४ | ८ |
| १४ | १४ | १० | १४ | १४ | १० | १० |
| + | ९ | + | १० | १२ | १२ | १२ |
| + | १२ | + | + | + | १४ | + |

८

ख्या तान्न याह्यं मंगलादिषु ॥ ७८ ॥ अथ त्रिपुष्कर यमल योगो ॥ रवि रविज भौम वारे
५२ भद्रायां विषम पाद ऋक्षं चेत् ॥ त्रैपुष्कराख्य योगः त्रिगुणा फलो द्विगुणा नेजुगल
म्॥७९॥अस्यार्थः॥भद्रा तिथौ यदा रवि भौम शनि वारे कृत्तिका·पुनर्वसू·॥ विशाखा उत्तरा
फाल्गुणा पूर्व भाद्र पदा उत्तरा षाढ ॥ एतदृक्षं भवति तदा त्रिपुष्करः यदा पूर्वोक्तति
थौ वारे मृग शिरः चित्रा धनिष्ठा तदा द्विपुष्करः ॥ तत्फलम् ॥ तत्र वृद्धे मृते नष्टे शुभे वा
ऽप्य शुभे पिवा ॥ त्रिगुणं द्विगुणं सर्वं जायते क्रमशः फलम् ॥ ८० ॥ नारदः ॥ तद्यात्त
दोष शांत्यर्थं गोत्रयं मूल्य मेव वा ॥ द्विपुष्करे द्वयं दद्यान्न दोष स्त्वृक्ष मात्रतः ॥
८१ ॥ अथ रव्यादि वारे शुभ शुभाशुभ योगः ॥ रवौ हस्ते ऽश्विनी मूलं धनिष्ठा चोत्तरा
त्रयम् ॥ पुष्य स्तथा श्चमी चैव सिद्धि योगा इमे मताः ॥ ८२ ॥ विशाखा भरणी स्व
र्ये मघा ज्येष्ठा ऽनुराधिका ॥ सप्तमी द्वादशी तद्वद्धि रुद्रा च चतुर्दशी ॥ ८३ ॥ चं-
द्रे च श्रवणाः पुष्यो ऽनुराधा रोहिणी मृगः ॥ दशमी नवमी वाथ सिद्धि योग शुभा ५२

वहः ॥ ८४ ॥ पूर्वाषाढो त्तराषाढो स्वाती चित्रा विशाखयोः ॥ सोमे चैकादशी षष्ठी वर्जनीया त्रयोदशी ॥ ८५ ॥ भौमे श्लेषाश्विनी मूलं मृगशीर्षस्त्रयो दशी ॥ तृतीया चाष्टमी षष्ठी सिद्धिदा कीर्तिता बुधैः ॥ ८६ ॥ उत्तराषाढ भं चार्द्रा धनिष्ठा त्रितयं तथा ॥ द्वितीया दशमी भौमे वर्जनीया प्रयत्नतः ॥ ८७ ॥ बुधे पुष्योऽनुराधा च कृत्तिका रोहिणी मृगः ॥ द्वितीया सप्तमी चैव द्वादशी च शुभप्रदा ॥ ८८ ॥ धनिष्ठा भरणी मूलमश्विनी रेवती बुधे ॥ तृतीया प्रतिपद्यापि विरुद्धा नवमी स्मृता ॥ ८९ ॥ गुरो पुष्योऽनुराधा च विशाखाश्वि पुनर्वसू ॥ रेवती दशमी चैव पूर्णिमा शुभदा स्मृता ॥ ९० ॥ जीवे यक्ष्म मीनेष्टा चतुर्थी शततारका ॥ कृत्तिकादि चतुष्कं च तथा चोत्तरफाल्गुनी ॥ ९१ ॥ शुक्रे चित्राश्विनी पूर्वा रेवती च पुनर्वसू ॥ श्रवणः प्रतिपत्षष्ठी सिद्धा चैकादशी तथा ॥ ९२ ॥ भार्गवे रोहिणी ज्येष्ठा पुष्यो श्लेषा मघा तथा ॥ द्वितीया सप्तमी चैव विरुद्धा सर्वकर्मसु ॥ ९३ ॥ शनौ स्वाती श्रवं पूर्वाफाल्गुनी च त-

सं.श्री ५४

या मृगः ॥ चतुर्थी नवमी चापि तिथिः सिद्धा चतुर्दशी ॥ ६४ ॥ पूर्वा षाढो त्तरा षाढा चि-
त्रा हस्तो ऽ थ रेवती ॥ उत्तरा फाल्गुनी षष्ठी निषिद्धा सप्तमी भ्रमे ॥ ६५ ॥ द्विवेदि कुल सं
भूत सरयू कृत संग्रहे ॥ शिरो मणौ समाप्ते या ऽष्टमी ये प्रभा शुभा ॥ ६६ ॥ इति
श्री संग्रह शिरो मणौ शुभा शुभ कथनं नामाष्टमी प्रभा ॥ ८ ॥ अथ त्याज्य प्रकरणम् ॥
तिथि नक्षत्र वाराणां दुष्ट योगा न्यरस्समम् ॥ व्यती पातादि दुर्योगान् विष्टी दर्शा र्क संक्रमा-
न् ॥ १ ॥ जन्म क्षोतिथि मासांश्च तिथ्यर्द्ध मव मन्दिनम् ॥ गंडां तंत्रि विधं दुष्टं क्षीणेन्दुः
पाप कर्तरी ॥ २ ॥ पाप ग्रहो राखले वार या मार्द्ध कुलिकादि कान् ॥ जन्म राशि विलग्ना-
भ्या मष्टमं लग्न मेवच ॥ ३ ॥ दिन मेकं तु मासां ते ऋक्षां ते घटिका द्वयम् ॥ घटिकै
कंच तिथ्यंते लग्नांते घटिका र्द्धकम् ॥ ४ ॥ विषाख्य नाडिका भानां पात मेका र्गलं तथा
॥ दग्धा ह्न क्रांति साम्यंच लग्ने शं रिपु मृत्यु गम् ॥ ५ ॥ दिनार्द्धं चर जन्म र्क्षे संधौ तु-
पल विंशतिः ॥ रोगो स्य त्याग रिष्टानि सूत कं मातु रार्त वम् ॥ ६ ॥ जन्मे प्राप्त सनो

भंगं शुभे ष्वेतानि संत्यजेत् ॥ एमः ॥ सर्वस्मिन्विधु पापयुक्त नुलवा वर्द्धे निशान्हो
घटी त्र्यं पंवे कुन वांशकं ग्रहण तः पूर्वं दिनानां त्रयम् ॥ उत्पात ग्रहतो ऽह्न स्त्रं प्त्व शुभ
दो त्पाते प्त्व दुष्टं दिनं ष रामा संग्रह भिन्न भं त्यज शुभे योर्द्ध तयो त्यात भम् ॥ ७ ॥
अस्यार्थः ॥ सर्वस्मिन् इति सर्वस्मिन् शुभे कार्य्ये एतानि वे नि प्त्वयेन त्यज परिह-
रे त्यर्थः ॥ विधुना पापे न वा पापेः क्षीणें दूर्क मही सुतार्क तनये र्वा युक्तो युक्तो तनु ल-
वो लग्न लग्नपन वांशो त्याज्यो ॥ पूर्णः क्षीणो ऽपि वा चंद्रो लग्ने सर्वत्र गर्हितः ॥ इति
कस्यपोक्तेः ॥ पापेन्दू लग्न गो वांश गतो वर्ज्यो शुभे सदे लिच ॥ निशा न्हो रर्द्ध रात्र्य-
र्द्धे दिनार्द्धे च घटी त्र्यंशं विंशति पलानि दश पूर्वं दश पश्चाच्च परि हर ॥ उक्तंच ॥ मू-
र्तः कालो निवसति मह्य निशयांच दिन दले यस्मा द् श पूर्व परस्त्वस्मा द्वर्ज्यानि चप-
लानि ॥ कुन वांश कं पाप ग्रहन वांश के परि हर ॥ अथ ग्रहणा तः पूर्वं दिनानां त्रयं परि
हर ॥ उत्पात ग्रहतः उत्पाताः दिव्य भौमां तरिक्षाः ॥ यस्मिन् दिने भवन्ति ततो ऽह्न

शि

दूर्ध्व सप्त दिनानि वर्ज्यानि ॥ ग्रहो ग्रहणं तस्मा दपि सप्त दिनानि वर्ज्यानि ॥ उक्तंच ॥

१६

चंद्र सूर्यो परा गेषु त्र्यहं पूर्वं शुभे त्यजेत् ॥ स साहम शुभं पश्चात् स्फुतं ग्रहणे सूत कम् ॥ त्रि विधोत्पात तस्योर्द्ध सिद्धि का सूत्रु दर्शने ॥ सप्त रात्रं न कुर्वीत यात्रो द्वा हा दि मंगल मिति ॥ अंगिरा अपि ॥ सर्व ग्रासे तु सप्ताह मर्द्ध ग्रासे दिन त्रयम् ॥ त्रि द्वे कांगुल तो ग्रास्ये दिन मेकं विवर्जयेत् ॥ वशिष्ठः ॥ सर्व ग्रासे दिना न्य ष्टौ सर्व कार्य्ये विवर्जयेत् ॥ ष गानि त्रि भागोन मर्द्ध ग्रासे चतुर्दिनम् ॥ चतु र्थांशे त्रि रात्रं स्यात् ग्रहणे चंद्र सूर्य्य ॥ अत्र कार्य्य स्या वश्यक त्वे परि हारो ज्योति र्नि बंधे ॥ पंच दिना नि वशिष्ठ स्त्रि दि कौशिक स्त्वे कम् ॥ यवना चार्य्य स्य च शतं पंच मुहूर्त्तानि दूष यति राहुः ॥ वेधो नित्यने मित्ति कादि कृत्याति रिक्त विषयः ॥ गुरुः ॥ नित्यने मित्ति के का म्ये होम क्रिया सु च ॥ उपा कर्म्मणि चोत्सर्गे ग्रह वेधो न विद्यते ॥ इति शुभदो साते - दिन मिति ॥ शुभ दो त्साता वाराह संहिता याम् ॥ चंडा शनि मही कंप संध्यानि र्घात

शि
२

निश्वनाः ॥ परिवेष रजो धूम रक्तार्क स्तमनो दयाः ॥ दुर्भेध्या न्नरस स्नेह मधु पुष्प
फलोद्गमाः ॥ गो पक्षि मद वृद्धि श्च शुभा यमधु माधवे ॥ इत्यादयः ऋतु परत्वे नो-
क्ताः यद्दिने एते भवंति तद्दिन मेव त्यज ॥ अथ ग्रह भिन्नभं ग्रहे भौमादि भिर्भिन्नं भेदि-
तं तथा योर्द्द ग्रह योर्युद्धं यस्मिन्दिने नक्षत्रे युद्धं यातम् ॥ तथोत्पात भम् ॥ यस्मि-
न्नक्षे दिव्यां तरिक्ष भौमा स्त्रि विधोत्पाताः संभूताः ॥ एतानि ग्रह भिन्न योद्धृ उत्पात न
क्षत्राणि यत्नेन संत्यज ॥ भेद स्तारा स्वेद यो यत्र वास्या शिति दिवाह् दंष्ट्रा वने ॥ ना-
रदः ॥ ग्रहणो त्पात भं त्याज्यं मंगलेषु ऋतु त्रयम् ॥ इति ॥ ननु नक्षत्र संधौ जाय माने
ग्रहणे किं नक्षत्रं दूषये दित्यत आह ॥ मार्कंडेयः ॥ यस्मिन्विधुं राहु रिनं चाधि स्ते ग्रस्ता-
ति तत्त्याज्य मृतु त्रयं स्यात् ॥ पाणि ग्रहे पुंमरणं विधत्ते द्वयो र्भयोः स्त्रे दृष्ट मेव जलात् ॥
अन्यत्र ॥ पक्षां तरेण ग्रहण द्वयं स्या द्यदा तदा तद्ग्रहणे यमं भम् ॥ पक्षाद्वि शुद्धं भवति-
द्वितीयं पाणि ग्रहे शुध्यति भोग पक्षादिति ॥ ७ ॥ नेष्टं ग्रह र्क्ष सकलाई पाद ग्रासे क्रमात्

र्क राणेंदु सा सान् ॥ पूर्वं परस्त्वाशुभयोस्त्रि घस्त्रा ग्रस्तेऽस्तगे वाभ्युदितेऽर्द्धरवंडे ॥८॥
अस्यार्थः ॥ नेष्टामिति ग्रहर्क्षे ग्रहण नक्षत्रं क्रमात्संपूर्णार्द्धं चतुर्थांशग्रासे सति षट् त्र्येकना-
सान्नेष्टम् ॥ गुरुः ॥ सर्वग्रासे तु षण्मासान्त्रीन्मासांस्तु दले ग्रहे ॥ आपाद ग्रहणे धिष्ण्ये मा-
सैकम् विवर्जयेत् ॥ अथ क्रमात् ग्रस्तेऽस्तगे ग्रहणार्द्ध ग्रासे उभयोः प्राक् पश्चान्त्रु-
धस्रा नेष्टाः ॥ तथा ॥ अर्द्धरवंडे ग्रस्तास्त ग्रस्तोदययोर भावेऽपि ॥ अर्द्ध ग्रासे उभयोः
पश्चाच्च त्रि त्रि घस्त्रां नेष्टाः ॥ गुरुः ॥ ग्रस्तास्ते त्रिदिनं पूर्वं पश्चाद्ग्रस्तोदये तथा ॥ खं-
डे त्रि त्रि दिनं निषिद्धे ये सप्त सप्त च ॥ कश्यपः ॥ ग्रस्तोदये परो दोषो ग्रस्तास्तेऽर्वाक् ग्र-
योः ॥ मुनि शार्द्दे तू भयं तत् खंडी खंड व्यवस्थयो रिति ॥ ८ ॥ जन्मर्क्ष मास ति-
थयो व्यति पात भद्रा वैधृत्य मापितृ दिनानि तिथि क्षयर्द्धी ॥ न्यूनाधि मास कुलिक प्र-
हृ पात विष्कुंभ वज्र घटिका त्रय मेव वर्ज्यम् ॥ ९ ॥ जन्मर्क्षेति ॥ जन्म नक्षत्र ज-
न्म मास जन्म तिथयः शुभ कार्ये सु वर्ज्याः ॥ अयं निषेध आद्य गर्भस्यैव ॥ नारदः ॥

न जन्म मासे जन्मर्क्षे न जन्म दिवसेऽपिवा ॥ आद्य गर्भ सुत स्याथ दुहितुर्वा करग्र-
हः ॥ जन्म मासः स विज्ञेयो वर्जितः सर्व कर्मसु ॥ वस्तुतस्तु ॥ यत्र शुक्लादि चांद्र मासे
चैत्रादौ जन्मा भूत् ॥ स चांद्रो मासो जन्म मासः त्याज्यः ॥ इंद्राग्नी यत्र हूयेते मासा
दिः स प्रकीर्त्तितः ॥ अग्नी षोमौ स्मृतौ मध्ये समासः पितृ सोमकः हारीतोक्त मासलक्ष
णञ्च ॥ व्याती पाता द्य श्च वर्ज्याः ॥ पितृ दिन म्माता पित्रो र्मरण दिनम् ॥ श्राद्ध दिन मि-
त्यर्थः ॥ तिथि क्षयश्री तिथि क्षयो वृद्धि श्च तल्लक्षण माह वशिष्ठः ॥ स्युस्तिस्त्रस्तिथ
यो वारे एक स्मिन्नवमा तिथिः ॥ तिथि वार त्रये चैका त्रिद्युस्पृक् द्वेऽपि निंदिते ॥ न्यूनमा
सः ॥ अधिक मास श्च वर्ज्य ः संक्रमद्वय सहितः क्षय मासः ॥ असंक्रांतोऽधिक मासः ॥
कुलिकार्द्ध प्रहरौ ॥ पातो महा पातः विकुम्भयोग वज्र योग यो राद्यं घटिका त्रयं वर्ज्यं ॥
एवं प्रकारेण केचिद्द्वज्र योगेन व घटिका वर्ज्या इत्युक्तम् ॥ यथा ॥ विष्कुंभाद्य घटित्रयं
च नवकं व्याघातव ज्रौद्भवे ॥ इति धृत शूले तथा व्याघाते वज्रकेंका इति गणेश ज्योति

म विड्डत्ति रपि निरस्ता ॥ विष्कुंभवज्र योस्तिस्त्रः षट्क गंडाति गंडयोः व्याघा तेनव शूल्लेतु पं
६० च नाड्यो वि गर्हिताः ॥ इति कश्यपोक्तेः ॥ परि घस्यार्द्धं वर्ज्यम् मूल स्याद्याः पंच गंडांति गंड
यो राद्याः पट्‌पट्‌ चटिकाः व्याघाते चादिमाः नव घटिकाः वर्ज्याः ॥ ९ ॥ वेदांगाष्ट नवा
केन्द्र पक्षारंभ तिथो त्यजेत्‌ ॥ वस्त्रंक मनु तत्वा स्याशा नाडी पराः शुभाः ॥ १० ॥वाप्या
राम तडाग कूप भवना रंभ प्रतिष्ठा व्रतारंभोत्सर्ग वधू प्रवेशन महा दानानि सोमाष्टके
॥ गोदाना ग्रयण प्रपा प्रथम कोपा कर्म्म वेद व्रतं नीलो द्वाह मथाति पन्न शिशु संस्का
रान्सुरस्थापनम्‌ ॥ ११ ॥ वाप्या रामेति ॥ वापी दीर्घिका आराम उप वनम्‌ ॥ तडागः पुष्क
रिणी ॥ कूपः प्रसिद्धः एतेषा मारंभ प्रतिष्ठा ॥ आरंभं निर्म्माणं प्रतिष्ठा उत्सर्गः ॥ तत्र गृह प्र
तिष्ठा गृह प्रवेशो ज्ञेयः व्रताना मनंत व्रतादीना मारंभः ग्रहणम्‌ ॥ उत्सर्ग उत्थापनम्‌
महा दानानि तुला पुरुषा दीनि सोमः ॥ सोम यागः । अष्टका श्राद्धम्‌ । गोदानं केशांत संज्ञं
कर्म्म । आग्रयणं नवान्नेष्टिः । प्रपा जल शाला । प्रथम कोपा कर्म्म प्रथमारभ्यमाणं श्राव-

रणी कर्म्म वेद व्रतं महा नाम्न्यादि त्रयम् ॥ महा नाम्नी उपनिषद्व्रतम् ॥ वेद व्रतंच नीलो-
द्वाहः ॥ काम्य वृषोत्सर्गः ॥ अति पन्न शिशु संस्काराः अतिपन्नाः अतिक्रांताः जातकर्मा
द्यः शिशूनां संस्काराः देव स्थापनम् ॥ ११ ॥ दीक्षा मौंजि विवाह मुंडनमपूर्वन्देव तीर्थे क्ष
णं संन्या साग्नि परि ग्रहो नृपति संदर्शा भिषे कोगमनम् ॥ चातुर्म्मास्य समा व्रती श्रवणयो
र्वेधं परीक्षां त्यजेद्वृद्धत्वा स्त शिशुत्व इज्य सितयो र्न्यूना धि मासे तथा ॥ १२ ॥ अत्र मूलवच
नानि भ्रालातपः ॥ अस्तंगते गुरौ शुक्रे वाले वृद्धे मलि म्लुचे ॥ उद्यापन मुपारंभं व्रतानां नैव
कारयेत् ॥ अरसोञ्चपः ॥ वापी कूप तडाग याग गमनं क्षौरं प्रति ष्ठा व्रतं विद्या मंदिर कर्णवेध-
न महा दानं वनं सेवनम् ॥ तीर्थ स्नान विवाह देव भवनं मंत्रा दि देवे क्षणं दूरे गौव जि जीवि
शुः परि हरे दस्तं गते भार्गवे ॥ १४ ॥ उप नयनं गोदानं पाणि ग्रहणं प्रवेश गमनानि ॥ अ-
स्त मितेषु न कुर्यात्सुर गुरु भृगु पुत्र चंद्रेषु ॥ १५ ॥ अस्तमथादि फलमाह वादरायणः ॥ गु-
रो रस्ते पतिं हन्या च्छुक्रा स्ते चैव कन्यकाम् ॥ चन्द्रे नष्टे उभौ हन्या त्तस्मा दस्तं विवर्जयेत्

॥ १६ ॥ वाल भावे स्त्रियं हन्या वृद्ध भावे नरं तथा ॥ तस्मा द्वाल्ये च वार्द्धे च विवाहं नो व कारयेत् ॥ १७ ॥ अधि मासे वर्ज्यानि रवस्य परि शिष्ठे ॥ सोम यागादि कर्म्माणि नित्यान्यपि मलिम्लुचे ॥ तथैवा ग्रयणा धान चातुर्म्मा स्यादि कान्यपि ॥ १८ ॥ महालयाष्टका श्राद्धो पा कर्म्मा द्यपि कर्म्मयत् ॥ स्पष्ट मास विशेषाख्य विहितं वर्जये न्मले ॥ १९ ॥ गर्ग वृहस्पती ॥ अग्न्या धानं प्रति ष्ठांच यज्ञ दान व्रता नि च ॥ वेद व्रत वृषोत्सर्गं चूडा करणमेवच ॥ मांगल्य मभि षेकं च मल मासे विवर्ज्जयेत् ॥ मरीचिः ॥ २० ॥ गृह प्रवेश गोदान स्थाना श्रय महोत्सवम् ॥ न कुर्य्या न्मल मासे तु संसर्प्याह स्पतो तथा ॥ २१ ॥ वशिष्ठः ॥ वापी कूप तडागादि प्रतिष्ठा यज्ञ कर्म्म च ॥ न कुर्य्या न्मल मासे तु संसर्पा हस्पतो तथा ॥ २२ ॥ यदा क्षय मासो भवति तदा क्षय मास स्य पूर्वोत्तरा वधि मासौ भवतः तत्र पूर्वः संसर्पः द्वितीयो हस्पतिः ॥ गार्ग्यः ॥ वाले वा यदि वा वृद्धे शुक्रे वास्तं गते गुरौ ॥ मल मास इवै तानि वर्ज्जये द्देव दर्शनम् ॥ २३ ॥ अपूर्व देवतां दृष्ट्वा शुचः स्तुर्नर्द भार्गवे ॥

मल मासे त्व नाव्हत तीर्थ यात्रां विवर्ज्जयेत् ॥ २४ ॥ अनावृत्ता अपूर्व तीर्थ यात्रा ॥ अत्र नि-
यत कालानि सीमंत नाम करणा दीनि ॥ पूर्वा दस्तादि सत्वे ऽपि स्व स्वकाल एव कार्य्याणि
॥ २५॥ गुरुः ॥ मास अयुक्त कार्य्येषु मूढत्वं गुरु शुक्रयोः ॥ न दोष कुन्मले मासे गुर्वादि-
त्यादि कं तथा ॥ २६ ॥ अन्यत्रापि ॥ सीमंत यात कादीनि प्राश्नां तानि यानिवै ॥ न दोषो
मल मासस्य मौढ्यस्य गुरु शुक्रयोः ॥ २७ ॥ वशिष्ठः अतीत काला न्य खिलानि तानि
कार्य्याणि सौम्या यन गे दिने प्रे ॥ सिते गुरौ वाप्यति दृश्य माने तदुक्त पंचांग दिने व्य-
रवंडे ॥ देवी पुराणे ॥ सिंह संस्थे गुरौ यत्नात्सर्वा रं भा न्विवर्ज्जयेत् ॥ पुत्र भार्त्त कल त्राणि
हन्या च्छी घ्रं न संशयः ॥ २८ ॥ कार कौ भजते नाशं संतानं मृयते ऽचिरात् ॥ देवा राम
तडागानि अपोधान गृहाणि च ॥ ३० ॥ विवाह यज्ञोपनय चूडादि च न सिद्ध्यति ॥ य-
था सिंह स्थितो जीव स्त थैव मकर स्थितः ॥ ३१ ॥ अयमपि निषेधो नियत कालानां न
संग्रहः ॥ वशिष्ठः ॥ नीच राशि गतो जीवः प्रशस्त ः सर्व कर्मसु ॥ नीचे नीचां श क-

स्त्याज्यो यस्मा देशेषु नीचता ॥ ३२ ॥ विशेषो सांडव्ये मोक्तः ॥ मवास्थो यदा जीवो वर्जयेत्तं
चसां प्रकम् ॥ शेषे ष्वपि च भागेषु विवाह प्रशो भनो मतः ॥ ३३ ॥ तोडरा नंदः ॥ अति चारे
सप्त दिनं वक्रे द्वादश मेकच ॥ नीचस्थिते ऽपि वा शीघ्रे मास मेकं विवर्जयेत् ॥ ३४ ॥ ज्योति
र्निबंधे ॥ हरिनी चारि भागेऽपि व्रतो द्वाहादि मंगलम् ॥ ननिषिद्धं यदि स्वोच्चे स्वभे वा सं-
स्थितो गुरुः ॥ ३५ ॥ मघांत्यक्ता यदा गच्छेत्फाल्गुनी च बृहस्पतिः ॥ पुत्रिणी धनिनी-
कन्या सौभाग्यं सुख मश्नुते ॥ ३६ ॥ क्वचिद् पूर्व तीर्थ यात्रायां मौढ्यादि दोषो नास्ति ॥ गो
दा वर्यां गया यांच श्री शैले ग्रहण द्वये ॥ गुरा सुराणां गुर्वो श्च मौढ्य दोषो नविद्यते ॥ ३७
दक्षपुराणे त्रिस्थलीसेतो ॥ गयायां सर्व कालेषु पिंडं दद्या द्विधानतः ॥ अधि मासे जन्म दिने·
स्तेच गुरु शुक्रयोः ॥ ३८ ॥ नत्यक्तव्यं गया श्राद्धं सिंहस्थेच बृहस्पतौ ॥ अधि मासे सिं
ह गुरा वस्ते च गुरु शुक्रयोः ॥ ३९ ॥ तीर्थ यात्रा न कर्त्तव्या गयां गोदावरीं विना ॥ वास्त्यः व·
ऋतिचारणे सुरा वपिगुर्वादयस्त वहृज्यम् ॥ यात्रो द्वाह प्रति स्थांच गटह चूडा व्रता दिकम् ॥

विष्णुः पुरुषः ॥ ४७ ॥ जलसिन्धूयादिकमपि त्याज्यम् ॥ राजमार्तंडः ॥ यात्रां चूडां विवाहं श्रुति विवर विधिं श्रौत सद्म प्रवेशः प्राप्ता सोद्यान हर्म्यं सुर नर भवना रंभ विधि विधेनो॥मौंजीवंधं प्रतिष्ठां मणिक न करदा धारणं कुर्वते ये मृत्युः सिंहस्थिते ज्ये गुरु दिन कर्योरेक राशि स्थयोश्च ॥ ४८ ॥ सिंहस्थे गुरौ सत्यपि सिंहांशे स ज्यं शत्रयो दृष्टां शे॥२३।२० भोऽनंतरं सत्यं शमं शत्रयम् ॥ पंचमो नवांश लिंहांशः तत्र गुरौ सति विवाहो नेष्टः ॥ सिंह राशौ तु सिंहांशे यदा भवति वाक् पतिः ॥ सर्व देशेष्वयं त्याज्यो दंपत्यो निधन प्रदः ॥ इति राजमार्तंडः ॥ सिंहेपि भगदैवत्ये गुरौ पुत्र पती भवेत् ॥ अत्यंत शुभगा साध्वी धन धान्य समृद्धिदा ॥ ४९ ॥ अथ देशभेदात् लल्लः ॥ गोदावर्युत्तरे तीरे यावद्भागीरथी तटम् ॥ नेष्टस्तत्र विवाहादि सिंहस्थे ज्ये सदा बुधैः॥ ५० ॥ वशिष्ठः॥ भागीरथ्युत्तरे कूले गौतम्या दक्षिणे तथा ॥ विवाहो व्रत वंधो वा सिंहस्थे ज्ये न दुष्यति ॥ ५१ ॥ अत्र विवाह व्रत वंधान्यत मशुभ कर्म्माणि निषिद्धान्येव ज्योतिर्निबंधे ॥ संग.

लानीह कुर्वीत सिंहस्थो वाक्पतिर्यदा ॥ भानौ मेषगते सम्यगित्याहु र्यवनाचार्यः ॥
५२ ॥ कुत्रापि मकरस्थोऽपि न वर्ज्यः स्मृतः ॥ नर्म्मदा पूर्वभागेतु शोणस्योत्तर दक्षिणे ॥ गंड
क्याः पश्चिमे भागे मकरस्थो नदोषभाक् ॥ ५३ ॥ अन्यदपि ॥ मागधे गौड देशेच सिंधु देशे
च कोंकणे ॥ व्रतं चूडां विवाहंच वर्जयेन्मकरे गुरौ ॥ ५४ ॥ लुप्तवत्सरेऽपि शुभकृत्ये निषेधः ॥
गति चार गतो जीवस्तं राशिं नैति चेत्पुनः ॥ लुप्तः संवत्सरो ज्ञेयो गर्हितः सर्वकर्म्मसु ॥ ५५॥
गुरुः ॥ मेषे वृषे मृगे कुंभे यद्यतीचारगो गुरुः ॥ न तत्र काललोपः स्यादित्याह भगवान्य
मः ॥ ५६ ॥ दशमासोत्तरं न दोषः च्यवनः ॥ मासान्दशैकादश वा प्रभुज्य राशेर्यदा राशिमुपैति
जीवः ॥ भुक्तेन पूर्वं च पुनस्तथापि न लुप्तसंवत्सरमाहुरार्याः ॥ ५७ ॥ देशभेदेन परिहारः ॥ लु
प्तसंवत्सरो रेवा नर्म्मदा सुरनिम्नगा ॥ भागीरथी तयोर्मध्ये रंतरे ऽति जिघिद्रुदः ॥ ५८ ॥
उक्तंच ॥ लुप्ताब्दे दोषः ऽत्रि मतेन मध्ये सोमोद्भवाया सुरनिम्नगायाः ॥ इति नारदः ॥ सम
हस्थे गुरौ प्रयुक्ते तन्मासे तु प्रयत्नतः ॥ विवाहादि न कुर्वीत नर्म्मदा तीर उत्तरे ॥ ५९ ॥द्विवे

द्वि कुल संभूत सरयू कृत संग्रहे   गिरो मणौ समाप्तैषा नवमीयं प्रभा शुभा ॥ ६० ॥   इति श्री संग्र-
ह शिरो मणौ वर्ज्य कथनं नाम नवमी प्रभा ॥ ९ ॥ अथ लग्न प्रकरणम् ॥ मेषो वृषोऽथ मि
थुनं कर्कः सिंहोऽथ कन्यका ॥ तुला च वृश्चिको धन्वी मकरः कुंभ मीन कौ ॥ १॥ राशा
यस्तु क्रमा देते पुंस्त्रियो क्रूर सौम्य कौ ॥ ज्ञेयः चर स्थिर श्चैव द्वि स्व भावः क्रमात्पुनः ॥ २॥
पृष्ठोदया धनुर्मेषो मकरो वृष कर्कटौ ॥ उभयो वृष श्चान्मीन स्ततोऽन्ये मस्त को दयाः ॥ ३॥
मेषो वृषो धनुर्युग्मं नार्क न कौने प्रावलः ॥ दिवा बलास्तु तेभ्योऽन्ये स्व स्व काले बला धिकाः
॥ ४ ॥ अथ राशि स्वामिनः ॥ मेष वृश्चिक यो र्भौमिः बुधो मिथुन कन्ययोः ॥ तुला वृष भयोः शुक्-
रः कर्क दस्यतु चंद्रमाः ॥ ५॥ सिंहस्याधि पति स्सूर्य्य श्शनि र्मकर कुंभयोः ॥ स्यान्मीन धनु
षोर्जीव श्चैते राशी श्वरा मताः ॥ ६ ॥ अथ उच्चानि ॥ मेषो वृष स्तथा नक्रः कन्या कर्की झ-
ष स्तुला ॥ सूर्य्या दीनां क्रमा देते कथिता उच्च राशयः ॥ ७ ॥ परमोच्चांशकः सूर्य्यादि शो राम ग
जाश्विनः ॥ बाणा चंद्र शर श्शैल दृशः स्वाश्विमिताः क्रमात् ॥ ८ ॥ अथ नीचम् ॥ सूर्य्या

दीनां जगु नीचं सोच्च भाध स्व सप्तमम् ॥ राहोस्तु कन्यका गेहं मिथुन स्वोच्च भं स्मृतम् ॥
९ ॥ अथ मूल त्रिकोणम् ॥ सिंहो वृषभ मे स्वाख्यं कन्या धन्वि तुला घटाः ॥ रव्या दीनां क्रमान्मू-
ल त्रिकोण राशयः स्मृताः ॥ १० ॥ अथ मेषादि लग्न कृत्यानि ॥ आक रोधातु कर्म्माणि भूमि पा-
लाभि षेचनम् ॥ निरोध स्ताह् सं चैते मेष लग्ने प्रसिध्यति ॥ ११ ॥ क्षेत्र कूपा दिकं दानं कुमा-
री वरणं क्रवम्॥गृह प्रवेश उद्वाह सिद्धे वेत वृषो दये ॥ १२॥ कला विभूषा विज्ञानं यत्कार्य्यं नृप
भो वितम् ॥ तत्सर्वं मिथुने प्रोक्तं हो राध्या स्त्रा विचक्षणैः ॥ १३ ॥ वारि बंधन सोसंच पौष्टिकं
चर कर्म्मच ॥ वापी कूप तड़ा गा दीन् कर्कटे कथितं बुधैः ॥ १४ ॥ राज सेवा कृषिः पण्य पर
यो गोवणिक्पथः ॥ सिंहे सिध्यति तत्सर्वं मेष लग्ना दिचं चयत् ॥ १५ ॥ भूषणं शिल्प विद्या-
नं औषधं पौष्टिकं तथा ॥ चर स्थिर च यत्कृत्यं कन्या लग्ने प्रसिद्ध्यति ॥ १६ ॥ वाणिज्यं क-
र्षणं सेवा यात्रा भांड तुला श्रयम् ॥ तुला लग्ने समाख्याता मुनि भि स्तत्त्व वेदिभिः ॥ १७
॥ राज सेवा भिषे कौर्य साहसं दारुणं तथा ॥ उग्रं चौर्य्यं स्थिरं कर्म्म कर्त्तव्यं तत्वारी स्थपे ॥

१२

अथ नवमांश भागाः

नवमांशाः निजतो विज्ञेयाः

| संख्या | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | मेषाः | कर्काः | तुलाः | मकराः |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| अंशाः | ३ | ६ | १० | १३ | १६ | २० | २३ | २६ | ३० | १।१। | ४।८ | ७।३। | १०।२ |
| | २० | ४० | ०० | २० | ४० | ०० | २० | ४० | ०० | ५ | १२ | ११ | ६ |

द्वादशांशाः स्वराशितो ज्ञेयाः

| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ |
|---|---|---|---|---|---|---|---|---|---|---|---|
| २ | ५ | ७ | १० | १२ | १५ | ७ | २० | २२ | २५ | २७ | ३० |
| ३० | ० | ३० | ०० | ३० | ०० | ३० | ०० | ३० | ०० | ३० | ०० |

विषम राशौ त्रिंशांशाद्यमे सम राशौ त्रिंशांशाद्यमे

| स्वामि | मं | श | बृ | बु | शु | शु | बु | बृ | श | म | स्वामि |
|---|---|---|---|---|---|---|---|---|---|---|---|
| अंशाः | ५ | ५ | ८ | ७ | ५ | ५ | ७ | ८ | ५ | ५ | अंशाः |

ग्राव वसु वाणाश्च रांशा काः ५। ७। ८। ५। ५ ॥ ३१ ॥ भुक्र सौम्यांगिरो मंद भौमा राणांच यथा क्रमात् ॥ अथ जन्मादि भाव संज्ञा ॥

तनु १ धनं २ सहोत्थाख्यं ३ सुहृत् ४ सुनो ५ रि ६ योषितः ७ ॥ निधनं ८ धर्म ९ कर्मा १० य ११ व्यया १२ भावास्तनोः क्रमात् ॥ ३२ ॥ केंद्रं परं परं चापोक्लिमं लग्नात्तुनः पुनः ॥ नवमं पंच मस्थानं

७२

त्रिकोणं स्थान मित्यपि ॥ ३३ ॥ त्रि दशै का दशं षष्ठं प्रोक्तं चोप चया ह्वयम् ॥ या मि-
त्रं सप्त मं द्यूनं छिद्रं च मदना ह्वयम् ॥ ३४ ॥ रिष्फं तु द्वादशं ज्ञेयं दुश्चिक्यं स्यात्तृतीयकम्
॥ चतुर स्रं तुरी याख्य संख्यं रंध्र मथाष्टमम् ॥ ३५ ॥ अथ वर्गोत्तम नवांशः ॥ आद्य स्त्वरे नवांशा
स्सा त्स्थिरे राशौ तु पंचमाः ॥ नवमो द्विः स्व भावाख्ये शुभो वर्गोत्तम स्त्वयम् ॥ ३६ ॥ अ-
थ साधारण शुभ कार्ये लग्न ग्रह बलम् ॥ सर्वेषु शुभ कार्येषु नेष्टाः खेटाः व्यया ष्टगाः ॥ लग्ने
पापा रिपौ सौम्याः पापाः केंद्र त्रिकोण गाः ॥ ३७ ॥ सौम्याः केंद्र त्रिकोण स्थाः पापा
स्तु त्रिखडाय गाः ॥ ते सर्वे लाभगाः खेटाः श्रेष्ठा स्स्यु श्शुभ कर्मणि ॥ ३८ ॥ भावः
स्व पतिना सौम्य र्दृष्टो युक्तो बलाधिकः ॥ पूर्णं फलं निजं धत्ते व्यस्तं पापै र्युते क्षितः ॥ ३९
॥ लग्ने षड्वर्ग सं शुद्धे प्रोक्त स्थान स्थिते ग्रहे ॥ शुभ र्क्षतिथि वारेषु कार्याः सर्वाः शुभाः
क्रियाः ॥ ४० ॥ द्विवेदि कुल संभूत सरयू कृत संग्रहे ॥ शिरो मणौ समाप्तैषा दशमीयं प्र
भाशुभा ॥ ४१ ॥ इति श्री संग्रह शिरो मणौ लग्न कथनं नाम दशमी प्रभा ॥ १० ॥

अथ मुहूर्त्त प्रकरणम् ॥ अथ नूतन वस्त्रा लंकारादि धारणम् ॥ हस्तादि पंचके पुष्ये धनिष्ठा रेवती
द्वये ॥ त्र्युत्तरे च पुनर्वस्वोः रोहिण्यां च शुभे तिथौ ॥ १॥ बुधे शुक्रे ज्य वारेषु नूतनां वर धा
रणम् ॥ स्त्रीणां रक्त दंतादि प्रवालानां ध्रुति प्रशुभा ॥ २॥ प्रागुक्त धिष्ण्य वारेच स्वर्णा-
पा भरणा दिकम् ॥ रक्तं वासो बुधे ज्यर्व्यं भौम भास्कर योरपि ॥ ३॥ शुभगाया: विशेषः ॥ रो
हिणी गुरु पुनर्वसू त्तरे या विभर्ति नव वस्त्र भूषणम् ॥ सान योपि दुव लंभते पतिं स्नान सा-
धगति नाम रोयिषा ॥ ४ ॥ अथात्र वार फलम् ॥ जीर्णं मर्के विधु स्त्वार्द्र भौम शुक्रे के बुधो
धनम् ॥ गुरु ज्ञानं प्रिया वाप्ति र्भार्गवे मलिनं शनौ ॥ ५ ॥ कुर्वन्ते वासलत्वे ते नूतनो वर
धारणात् ॥ अथ नक्षत्र फलम् ॥ वस्त्र साश्वि न्या शिवन्यां भरण्यां नहि नाशनम् ॥ छाति कास्नि
भयं कुर्य्या द्रोहिण्यां सर्व संपदः ॥ ६ ॥ मृगे मूषक भीति स्स्या दार्द्रायां निधनं भवेत् ॥ पुन-
र्वसौ तथा पुष्ये धन धर्म्म महोत्सवाः ॥ ७ ॥ आश्लेषायां भवेच्छोको मघायां मरणं ध्रुवम्
॥ पूर्वो भयंतु पूर्वाया मुत्तरायां धनागमः ॥ ८ ॥ कर्म्मसिद्धि स्तु हस्त र्क्षे चित्रायामिष्ट सं-

पदः ॥ मित्र भोजन दा स्वाती विशाखा नंद दायिनी ॥ ९॥ मित्राप्तिरनुराधायां ज्येष्ठायां
वास सो हृतिः ॥ जलप्लुतिश्च मूलर्क्षे पूर्वाषाढा ति रोगदा ॥ १०॥ मिष्टान्न दोत्तरा षाढा
श्रवणे नयनांतकृत् ॥ धान्या गमो धनिष्ठायां विष भीति श्शताभिषे ॥ ११ ॥ पूर्वाभा
द्रे जला ङ्गीति रुत्तरायां धना गमः ॥ रत्ना वाप्ति स्तु रेवत्यां भवे दुस्त स्य धारणात् ॥ १२
॥ अथ वस्त्रा भरणादि धारणे स्त्रीणां विशेषः ॥ अश्विन्यांच धनिष्ठायां रेवत्यां कर पंचके ॥
सुवर्ण रत्न दंतादि वस्त्राणां धारणं स्त्रियः ॥ १३॥ अथ चूरी चक्रम् ॥ यावद्भास्कर भुक्ति
भानि दिव से धिष्ण्यानि संख्या तथा ॥ वन्हि ३ भूत ५ गुण ३ ब्धि ४ सप्त ७ नयनं २
पृथ्वी १ करे २ न्दुः १ क्रमात् ॥ ॥ सूर्या रो कवि सौम्य राहु रविजाः जीवःशशी के-
तवः ॥ क्रूरेऽसच्च शुभे शुभश्च कथितं चक्रे करे भूषणे ॥ सूर्यभात् चूरी चक्रम् ॥
॥ १४ ॥ अथ कज्जल दर्श कल्पम् ॥ चित्रा चतुष्टयेऽश्वि-
न्यां धनिष्ठा रेवती मृगे ॥ शुक्रे ऽर्केन्हि प्रातो स्त्रीणां दर्श

| ३ | ५ | ३ | ४ | ७ | २ | १ | २ | १ |
|---|---|---|---|---|---|---|---|---|
| सू | मं | शु | बु | रा | श | वृ | चं | के |

शि-
६

णां जनयोर्द्धृतिः ॥ २५ ॥ अथ नववस्त्र विभक्तो फलम् ॥ वाससो नवधा भागे चतुः कोणेषु देव-
ताः ॥ मध्य त्र्यंशे स्थितं रक्षो नराः पार्श्वे दृशांशयोः ॥ २६ ॥ दग्धे जीर्णे नवे वस्त्रे लि-
प्ते वा कर्दमादिभिः ॥ सर्वे प्रति व्वसत् चैव शय नाशन पादुके ॥ २७ ॥ कज्जल क-
र्दम गो मय लिप्ते वाससि दग्ध वति स्फुटिते च ॥ चिंत्य मिदं नवधा विहिते तन्निष्ट मनि-
ष्ठ फलं च सुधीभिः ॥ २८ ॥ शंख चक्रा वुज च्छत्र ध्वज तोरण सन्निभा ॥ श्री वत्स स-
र्वतो भद्र नंद्या वर्त्त ग्रहोपमा ॥ २९ ॥ वर्द्धमान स्वस्ति का भस्मग कूर्म्म रूपा कृतिः ॥
छेदा कृति दैत्य भागे ऽप्याशुरर्थ प्रदा नृणाम् ॥ २० ॥ खरोष्ट्रो लूक का कादि जंवू कश्च वृ-
को पमाः ॥ त्रिकोण सूर्प्या कृतयो देव भागेप्य शोभनाः ॥ २१ ॥ निंदितं वसनं दद्या द्वि-
जेभ्यः स्वर्ण संयुतम् ॥ आशिषो वाचनं कृत्वा त्वन्य द्वस्त्रं च धारयेत् ॥ २२ ॥ अथ मुहू-
र्त्तं विनापि वस्त्र धारणम् ॥ विप्रा ज्ञया तथो द्वाहे राज्ञा प्रीत्या र्पितं च यत् ॥ निंद्ये ऽपि धिष्ण्ये
वा रादौ वस्त्रं धार्य्यं जगुर्बुधाः ॥ २३ ॥ अथ वस्त्र विशेष विशेषः ॥ शुक्ल वस्त्रो क्त भे धार्य्यं र-

वौ शुक्रे गुरौ बुधे ॥ विशुक्रे कर्बुरं पीतं सभौमे रक्तमं वरम् ॥ २५॥ अथ कृष्णनीलम् ॥
पुनर्वसू धनिष्ठाख्ये ऽश्विभे हस्ताच्चतुष्टये ॥ पूर्वोत्तरे शनौ सूर्ये कृष्ण नीलं वरं शुभम्
॥ २६ ॥ अथ दुकूलम् ॥ जीवे ऽर्के ऽब्जे बुधे शुक्रे वस्त्रोक्ते र्क्षे श्रवान्विते ॥ स्थिरे गे सदुद्देर्युं-
क्ते यद्दुकूलस्य धारणम् ॥ २७ ॥ अथ कौशेयम् ॥ अश्विनी रेवती हस्ते रोहिण्यां श्रवणत्रये
॥ पूर्वोत्तरे पुनर्वस्वोः स्वातौ पुष्ये मघाभिधे ॥ २८॥ रवौ चंद्रे गुरौ धार्य्यं कौशेय वसनं जनैः
॥ अथ रोमजं वस्त्रम् ॥ नील वस्त्रोदिते श्विभे रेवती पुष्ययोरपि ॥ शुक्रे शनै स्वरे ऽर्के च धार
ये ह्रोम जं वरम् ॥ २९॥ अथ सतूलकं चुक धारणम् ॥ पुष्योत्तरानुरा धांत्ये धनिष्ठाश्वि कर त्रये॥
रोहिण्यां गुरु शुक्राब्जे देहे दुर्ग धृतिः शुभा ॥ ३०॥ अथ स्वर्ण रजत तंतु मय वस्त्र परिधानम्॥
सुवर्ण तंतु संमिश्रं धारणंच रवौ कुजे ॥ रजतं तद्वि शनै ऽब्जे वस्त्र धारणा मे शुभम् ॥ ३१
॥ अथ वस्त्र निर्म्माणम् ॥ रोहिणी रेवती चित्रा नुराधाभ्रुग भोत्तरे ॥ शनिं हित्वा विदध्यात्तु तंतु-
भिः पट साधनम् ॥ ३२॥ अथ कुसुंभादौ वस्त्र रंजनम् ॥ पुनर्वसू द्वये हस्ता संच के श्रवण द्व-

ये ॥ आश्विभे ऽर्क कवीज्या रेवास संरंजनं सुभम् ॥ ३३ ॥ अथ सूची कर्म ॥ स्वाश्विनानु राधाश्वि-पुष्यां तं रेवती करः ॥ ज्येष्ठा सद्दा सरा स्ताकौः शूची कर्म्मणि सस्मृताः ॥ ३४ ॥ अथ वस्त्रक्षालनम् ॥ पुनर्वसु द्वये ऽश्विन्यां धनिष्ठा हस्त पंचके ॥ हित्वा कौर्कि बुधान् रिक्तां षष्ठी श्राद्ध दिनं तथा ॥ ३५ ॥ व्रतं पर्वच वस्त्राणि क्षालयेद्रज का दिना ॥ ३५ ॥ अथोपानत्परि धानं चर्म्म कृत्यंच ॥ चित्रा पूर्वानुराधार्द्रा ज्येष्ठा श्लेषा मघा मृगे ॥ विशाखा कृत्तिका मूले रेवत्यां ज्ञार्कि सूर्य्ययोः ॥ ३६ ॥ उपानत्परिधानंच चर्म्म कर्म्माधि सस्यते ॥ अथ वितान तूलिकोपधानादि निर्म्माणम् ॥ कुर्य्या द्रस्त्रो दिते धिष्ण्ये तूलिका सुप धान कम् ॥ विताना धंच वभ्रीयान् ऊर्द्ध मूर्द्ध मुखोडुषु ॥ अथ वस्त्र मय गेह निर्म्माणम् ॥ श्रुति त्रये ऽश्विनी पुष्ये ऽनुराधा रोहिणी मृगे ॥ हस्त त्रये पुनर्वे ऽन्त्ये स्मृतरे पट वेश्म सत् ॥ ३९ ॥ अथ सुगंध भोगः ॥ श्रुति त्रये ऽश्विनी पुष्ये पूर्वा षाढा नुराधयोः ॥ हस्त त्रये पुनर्वे ऽन्त्ये स्वग स्रेन्द्र सुभे हनि ॥ ४० ॥ चंद नागरु कस्तूरी पुष्पाणां धारणं सुभम् ॥ अथ शय्या रंभः ॥

रि रोहिणी चोत्तरा ज्ञेया हस्त पुष्य पुनर्वसू ॥ अनुराधाश्विनी शस्ता खड्ग निर्म्माण कर्म्मणि
॥ ५२॥ शुभे योगे शुभे वारे विदध्यात् खड्ग कों नरः ॥ मृत्यू के राशौ ज्ञेया अथवा मा विश्व
देवतो ॥ ५३॥ पितृ पक्षे विशेषेण यत्नात्तां परि वर्जयेत् ॥ श्रावणे चैव पौषेच भाद्रे मा
स्य शुभे दूनि ॥ ५४॥ वर्जयेक्षीण मंदेच खड्ग निर्म्माण कर्म्मणि ॥ सूर्य्य क्षात्तु चतुष्कं च
देयं धिलंतु मस्तके ॥ ५५॥ कोण यो रष्ट नक्षत्रं आरव्याया मष्ट संख्यकम् ॥ खड्ग मध्ये त्रि
कं चैव वेद संख्यांच पादयोः ॥ ५६॥ दूत्यं खड्ग फलं चक्रे वार सेन च भाषितम् ॥ मस्तके
च शुभं ज्ञेयं कोण यो रष्ट मृत्युदम् ॥ ५७ ॥ आरव्या स्थले शुभं प्रोक्तं त्रिकं मध्ये सुख प्रद
म् ॥ पादेषु वेद नक्षत्रं हानि मृत्यु भय प्रदम् ॥ ५८॥ सूर्य्य भा दिन भं गरायं खड्ग चक्रे
विशेषतः ॥ अथ पादुकाधारणादि आरंभः ॥ मैत्रेन्दु पुष्य यम भादिति वह्नि चित्रा हस्तोत्तरा त्रय
हरीज्य विशाख भानि ॥ एते ष्वती व प्रय नाधान पादुकानां संभोग कार्य्य मुदितं मुनिभि -
रशुभान्हे ॥ ५९॥ अथ भूषा घटनम् ॥ त्रिपुष्करा दिधे योगे ह्युत्तरे रेवती द्वये॥ श्रुतित्रये मृगे

ये पुनर्वस्वऽनुराधयोः ॥ हस्त त्रयेऽथ रोहिण्यां भूषा कार्य्या शुभे ह्नि ॥ ५० ॥ अथ रत्न
युक् भूषा घट्टनम् ॥ कृत्तिकादि त्रये हस्त पंच के रेवती द्वये ॥ श्रुति त्रये पुनर्वस्वोः पुष्य भे चो-
त्तरा त्रये ॥ ५१ ॥ कुजेऽर्के रत्न युक् भूषा घट्टनं शुभ वासरे ॥ अथ रौप्य स्वर्ण वज्र मुक्ता भूषण
निर्म्माणम् ॥ रत्न युक् भूषणे कार्य्ये विशाखां कृत्तिकां विना ॥ ५२ ॥ शुक्रेऽब्जे भूषणं रौप्य
वज्रं मुक्ता मयं हि सत् ॥ अथ पात्र भोजनम् ॥ अथातः संप्रवक्ष्यामि यदुक्तं शक्ति यामले ॥ सू-
र्य्य भाच्चंद्र पर्य्यन्तं गणनीयं सदा बुधैः ॥ ५३ ॥ दिक्षु दिक्षु द्वयं न्यस्य मध्ये का दश योज-
येत् ॥ वर्तुला कार चक्रस्य भोक्तृ पात्रस्य निर्णयः ॥ ५४ ॥ बंधनं सौख्य हानिस्स्याल्ला-
भं सौख्यं च मृत्युदम् ॥ पुत्रा युश्शोक दश्रीश्च पूर्वादि क्रमतो भवेत् ॥ ५५ ॥ उक्तानष्टे-
न्दु षष्ठीं च विलोमस्थं विवर्जयेत् ॥ रोहिणी युगले हस्त त्रितये रेवती द्वये ॥ ५६ ॥ श्रव-
ण त्रितये पुष्ये पुनर्वस्वनुराधयोः ॥ उत्तरे बुध शुक्रेऽब्जे वारे चामृत योगके ॥ ५७ ॥
सौवर्ण रौप्य पात्रेषु भोजनादि शुभ प्रदम् ॥ अथ श्मश्रुकर्म्म ॥ श्रवण त्रितये हस्त त्रितये रे-

वती द्वये ॥ ज्येष्ठायां च मृगशीर्षे च पुनर्वसु द्वये तथा ॥ ५८ ॥ क्षुरकर्म्म बुधैः प्रोक्तं त्यक्त्वा भौ-
म शनिं रविम् ॥ अनुराधा मृगश्चैव कृत्तिका रोहिणी मघा ॥ ५९ ॥ अथ क्षुर कृत्ये वारफल
म् ॥ भानुर्मासं शनिः सप्त भौमोऽष्टौ नाशयेत्सुखम् ॥ वर्द्धयेद्धनः पंच मासान्सप्तनि
घ्रणपतिः ॥ ६० ॥ शुक्रस्त्वेकादश क्षेमं क्षौरे वाचां पति र्दश ॥ अथ क्षौरे त्याज्य तिथिः ॥ अ-
ष्टमी प्रति पत्षष्ठी रिक्ता पर्वाणि संत्यजेत् ॥ चतुर्दशीत्वमावास्या क्षौरे त्याज्यातु सर्वदा ॥
६१ ॥ निंध नक्षत्राणां दुष्टफलम् ॥ पंच कृत्वो मघायां यः षट् कृत्वः कृत्तिका स्वपि ॥ त्रिवारं
चानुराधायां रोहिण्या मष्ट वारकम् ॥ ६२ ॥ उत्तरा फाल्गुनी संज्ञे चतुर्थे क्षौरमाचरे
त् ॥ सवेध सास मानोऽपि यावद्वर्षं न जीवति ॥ ६३ ॥ अथ क्षौर निषेधेऽपि तदपवादः ॥ आ-
ज्ञया विप्र राज्ञो र्वा व्याधाने बंध मोक्षणे ॥ मृताशौचे च दीक्षायां मुंडनं शस्त मेव्वपि ॥
६४ ॥ मुंडनं चोपवासश्च सर्व तीर्थे ष्वयं विधिः ॥ वर्ज्जयित्वा कुरुक्षेत्रं नैमिषं पुष्करं गयाम्
॥ ६५ ॥ अथ राज्ञां श्मश्रुकर्म्म ॥ क्षौरं भस्योदये राज्ञः पंचमे पंचमे दिने ॥ श्मश्रुकर्म्म त

मारव्यातं निषिद्धा तारका न चेत् ॥ ६६ ॥ अथ नख दंत कर्त्तं ॥ ऋक्षे सु क्षौर कर्म्मोक्तं येषु
येषु मनीषिभिः ॥ तेषु तेषु च कर्त्तव्या नख दंतादि का क्रिया ॥ ६७ ॥ अथ क्षौर विधोनिषेधः
॥ भुक्ताभ्यक्तो व्रती यात्रा रणे द्योगी कृताह्निकः ॥ उत्कटा चरणो रात्रौ संध्य योरुभयो रपि
॥ ६८ ॥ भद्रे सु नवमे चाह्नि क्षुर कर्म्म न कारयेत् ॥ प्राक् व्रत स्नान को राजा योगी न्त्री
॥ ६८ ॥ सजीव त्पित्त कश्चैते मुंड्याः प्राक् कथिता अपि ॥ ७० ॥ क्षौरे शुभ वा-
ग भिर्णी पतिः ॥ ६८ ॥ सजीव त्पित्त कश्चैते मुंड्याः प्राक् कथिता अपि ॥ ७० ॥ क्षौरे शुभ वा-
रुयम् ॥ केशवं चानन्तसुरं पाटल पुत्र पुरी महि क्षत्रम् ॥ दिति मदितिं च स्मरतां क्षौर विधौ
भवति कल्याणम् ॥ ७१ ॥ अथ क्षौरे किंचिद्विशेषः ॥ गंगायां भास्कर क्षेत्रे माता पित्रो र्मृते ह-
नि ॥ आधाने सोम पाने च षट् सु क्षौरं विधीयते ॥ ७२ ॥ राज कार्य्य नियुक्तानां नटानां रू-
प जीविनाम् ॥ श्मश्रु रोम नख च्छेदे नास्ति काल विशोधनम् ॥ ७३ ॥ अथ विद्यारंभः ॥ मृ-
गादि पंचके मूले हस्तादि त्रितये ऽश्विभे ॥ श्रवण त्रय पूर्वा सु विद्या रंभः प्रशस्यते ॥ ७४
॥ रवौ शुक्रे बुधे जीवे वारे लग्न बले शुभे ॥ दशम्यादि त्रिके षष्ठी तृतीया पंचमी शुच ॥ ७५

॥ विद्या रंभा गुरौ शुक्रे बुधे सर्वार्थ सिद्धिदः ॥ सप्ते ऽर्कीजाड्य कृच्चंद्रो भौमार्की मृत्युदौ स्मृतौ ॥ ७६ ॥ अथ गणिता रंभः ॥ श्रुत द्वये ऽनुराधार्द्रे रोहिणी रेवती करे ॥ पुष्ये जीवे बुधे कुर्य्यात्प्रारंभं गणिता दिषु ॥ ७७ ॥ अथ व्याकरणा रंभः ॥ रोहिण्यां पंच के हस्ता त्पुनर्भे मृग भे ऽश्विभे ॥ पुष्ये शुक्रेज्य विद्वारे शब्द शास्त्रं पठेत्सुधीः ॥ ७८ ॥ अथ न्याय शास्त्राद्यारंभः ॥ उत्तरे रोहिणी पुष्ये पुनर्भे श्रवणे करे ॥ अश्विन्यां श्रुत भे स्वातौ न्याय शास्त्रादिकं पठेत् ॥ ७९ ॥ अथ धर्म्म शास्त्र पुराणा रंभः ॥ हस्तादि पंच के पुष्ये रेवती द्वितये मृगे ॥ श्रवत्रये शुभा रंभो धर्म्म शास्त्र पुराणयोः ॥ ८० ॥ अथ वैद्य विद्या गारुडी विद्या रंभः ॥ हस्त त्रये ऽनुराधायां पुनर्भे श्रवण त्रये ॥ मूले चैवाश्विनी पुष्ये ज्येष्ठा श्लेषार्द्र भे मृगे ॥ ८१ ॥ अथ जैन विद्या रम्भः ॥ श्रुतित्रये मघा पूर्वा नुराधा रेवती त्रये ॥ पुनर्भे स्वाति भे सूर्य्ये शुक्रे जैना गमं पठेत् ॥ ८२ ॥ अथ लिंगाग्र छेदन मुहूर्त्तम् ॥ नराश्व वृष भादीनां लिंगाग्र छेदनं स्मृतम् ॥ अर्कारे ज्यांत्यपुष्यार्क स्वातीन्दु श्रुति वासवैः ॥ ८३ ॥ लिंगाग्र छेदो नरस्यार्द्ध वर्गे त्वक्ता स्वमासो स्वम हीन धस्त्रे ॥

मु० चि० ८४

मारेज्या र्कौ पौस्न पुष्यार्क हस्ते श्रोत्रेन्दु श्रविष्ठा प्रदिष्टा ॥ ८४ ॥ अथ नष्ट तारीयः ॥ स्तुतीआ लेपे
ना रुसी विन्ध संख्या तथा लान्दशो ऽथ त्रयो विंश तिश्च ॥ तथैव चाष्टविंशत्तरी या निषिद्धा स-
ताया व नैरुक्षास्त्र विद्भिः प्रदिष्टा ॥ ८५ ॥ अथ पारसी विद्यारंभः ॥ ज्येष्ठाश्लेषा मघा पूर्वा रेव-
ती भरणी द्वये ॥ विशाखार्द्रोत्तरा षाढा शत भे पाप वासरे ॥ ८६ ॥ लग्ने स्थिरे च चन्द्रे-
न पारसी ना रवी पठेत् ॥ अथ लिप्यारंभः ॥ शुभे तिथौ शुभे वारे रेवती युगले तथा ॥ ८७ ॥
श्रवणे चानुराधायां तथैव चार्द्रादि सुत्रिषु ॥ हस्तादि त्रितये कुर्य्या ल्लिखनारंभनं सुधीः ॥
८८ ॥ अथ रत्न परीक्षा ॥ पुन र्भे प्रात हस्त र्क्षे श्रवे ज्येष्ठे परीक्षणम् ॥ रत्नानामश्विनी भूतं हित्वा
भौमं प्रत्ने श्वरम् ॥ ८९ ॥ अथ शिल्प कर्म्मारंभः ॥ हस्त त्रये श्रवात् त्र्यर्क्षे त्र्युत्तरे रोहिणी मृ-
गे ॥ रेवत्या मश्विनी पुष्ये पुनर्वस्व नुराधयोः ॥ ९० ॥ शस्ते विधौ शुभे वारे शिल्प विद्यां स-
मा चरेत् ॥ अथ राज दर्शनम् ॥ त्र्युत्तरे श्रवण द्वंद्वे मृगे पुष्या नुराधयोः ॥ ९१ ॥ रोहिण्यां रेव-
ती युग्मे चित्रा हस्ते शुभे हनि ॥ वलि न्यर्के ऽर्के वारे ऽपि राज दर्शन मीरितम् ॥ ९२ ॥ अथ-

राजसेवा ॥ हस्तद्वये ऽनुराधायां रेवती युगले ध्रुवे ॥ पुष्ये बुधे गुरौ शुक्रे सानियो रवि वासरे ॥ ९३ ॥ योनि राशिप यो मैत्र्यां स्वामी सेव्यो ऽनुजीविभिः ॥ अथ दास दासी संग्रहः ॥ उत्तरा सुच रोहिण्यां दास दास्यादि संग्रहः ॥ ९४ ॥ अथ क्षत्र चामर सिंहासनादि कृत्यम् ॥ चामर क्षत्र दोलादि दीर्घ सिंहासनादिकम् ॥ पट्टाभिषेक के सर्वं विदध्याच्छो भने हनि ॥ ९५ ॥ अथ मुद्राकृत्यम् ॥ मृदु भ्रुव क्षिप्र चरेषु भेषु योगे प्रशस्ते प्यानि चंद्र वर्ज्ये ॥ वारे तिथौ पूर्णा जयाख्ययेच्च मुद्रा प्रतिष्ठा शुभ दान राण्यम् ॥ ९६ ॥ गुर्वस्ते वा शितास्ते वा मुद्राणां घट्टनं क्वचित् ॥ क्रूर ग्रह स्पर्श लग्ने न कार्य्यं भूति मिच्छता ॥ ९७ ॥ अथाश्वारोहणम् गजानांच ॥ पुष्य श्रविष्ठाश्विनि सौम्य भेषु पौष्णा न लादित्य कराह्वयेषु ॥ सवारणा स्तैं शु बुधे स्मृतानि सवारिणि कार्य्याणि तुरंग मानाम् ॥ ९८ ॥ अथाश्वापेद्दणे चक्रम् ॥ अश्वाकारं लिखेच्चक्रं साभिजिद्भानि विन्यसेत् ॥ स्कंधे तु सूर्य्य भात्यंच पृष्ठे च दश भानिच ॥ ९९ ॥ पुच्छे द्वे स्या पये त्वाद्र्म्य तुः पादे चतुष्टयम् ॥ उदरे विन्य से त्पंच मुखे द्वे तुरगस्यच ॥ १०० ॥

॥ अर्थलाभो मुखे सम्यक् वाजी नश्यति चोदरे ॥ चरणे स्थैरणे भंगः पुच्छे पत्नी विनश्यति ॥ २ ॥ अर्थसिद्धिर्भवेत्पृष्ठे स्कंधे स्कंध पतिर्भवेत् ॥ अथ गज कृत्यम् ॥ हस्तत्रये सौम्य हरित्रये च पौष्ण द्वये पुष्य पुनर्वसौ च ॥ मैत्रे च सर्वाण्यपि कुंजराणां कर्म्माणि शस्तान्यखिलानि यानि ॥ २ ॥ अथ गिरि विकारो हृणं कृत्यं च ॥ उत्तरा रेवती युग्मे त्रिभे हस्ता त्रिभे श्रवात् ॥ पुनर्वस्वो स्तथा पुष्ये ऽनुराधा त्रितये मृगे ॥ ३ ॥ रोहिण्यां धिष्ण्यवायास्तु सल्लग्ने घट्टनं शुभम् ॥ शुभ वारे शुभे लग्ने शुभांशे शोभने दिने ॥ ४ ॥ अंकुशा करणं योग्यं शाने लग्ने शाने दिने ॥ अथ पल्याण निर्म्माणम् ॥ श्रवणे शत भे हस्ते पुष्ये मूले मृगे ऽश्विभे ॥ पुनर्वसौ गजाश्वोष्ट्र पल्याण करणं शुभम् ॥ ५ ॥ वर्ज्जयित्वा कुजं नरुणा मश्व कार्य्यं शुभावहम् ॥ अथाश्वस्य विशेष कृत्यम् ॥ चौलोक्त खुर कृत्यादि शिक्षा विद्योक्त भादिषु ग्रास घासादिकं त्वन्नाशनोक्त र्क्षे गज वाजिनाम् ॥ ६ ॥ अथ रथ कृत्यम् ॥ पुष्यो पुनर्वसू ज्येष्ठा नुराधा रेवती द्वये ॥ श्रवणादि त्रिभे हस्त त्रितये रोहिणी मृगे ॥ ७ ॥ सार्के सौम्य दिने सौम्य विलग्ने रथ कर्म्मसत्

॥ अथ संधिः शत्रूणां ॥ अनुराधा मघा पुष्ये तिष्य इंते तिला भिधे ॥ लग्ने शुद्धिर गे ऽष्टम्यां
द्वादश्यां संधि रिष्यते ॥ ८ ॥ अथ मद्यारंभः ॥ मूलार्द्रा शत भेज्येष्ठा पूर्वा श्लेषा मघा सुच
॥ भरण्यां क्रूर वारे च मद्य कर्म्मे रितं बुधैः ॥ ९ ॥ अथ मादक वस्तुभक्षणम् ॥ आर्द्रा श्लेषा म
घा पूर्वा ज्येष्ठा मूल शता भिधे ॥ भरण्यां सुदिने मंदे त्व फ़ीचा न्मादकं मधु ॥ १० ॥ अथ न-
वांग नाभोगः ॥ प्रथमाभि गम प्रशस्ता नव वध्वा शुभे ह्नि ॥ गर्भा धानोक्त नक्षत्रे शास्ते
ज्योत्स्ना करे निशि ॥ ११ ॥ अथ गीतनृत्यारंभः ॥ रेवत्या मनुराधायां धनिष्ठा द्वितये करे ॥
रोहिणी युगले पुष्ये त्र्युत्तरे गीत नर्तनम् ॥ १२ ॥ अथ नट क्रिया ॥ मृगा र्द्रा रोहिणी पुष्ये पुन
र्भे श्रवण त्रये ॥ चित्रा त्रयोत्तरा मूले कृत्य सन्नृत्य जीविनाम् ॥ १३ ॥ अथ वृक्षलतादि रोप-
णम् ॥ हस्त चित्रोत्तरा मूले ऽनुराधा रेवती द्वये ॥ विशाखा रोहिणी पुष्ये स्वाति सौम्ये मृग-
शीर्ष ॥ १४ ॥ सूर्य भाद्दिन पर्य्यंतं राम रामाद्रि युग्मभं ॥ राम भूवाण षट् युग्मं चक्रे पाद
परोपणे ॥ १५ ॥ असत्क्षुभ मस हानिं शुभं दुःखं रिपो भयं ॥ शुभं सौख्यं क्रमात् ज्ञेयं

फल मुक्तं विच क्षणैः ॥ १६ ॥ तिथि वार समा युक्तं सूर्य्य भा द्दिन भं युतम् ॥ नव भिश्च हरे
द्भागं शेषांके न फलं दिशेत् ॥ १७ ॥ एके घोरे चतुः केच त्रकेच फल मादिशेत् ॥ व-
सौ षष्ठ द्वये लाभं सप्त मे नव मे स्मृतिः ॥ १८ ॥ अथनौकाघट्टनम् ॥ अश्विकरेज्य सुधानिधि पू-
र्वामित्र धनाच्युतभे शुभ लग्ने ॥ तारक योग तिथीन्दु विशुद्धौ नौ गमनं शुभदं शुभवारे ॥
१९ ॥ अथसामान्यतः पशु कृत्यं रक्षाच ॥ त्यक्त्वा षष्ठी म मां रिक्तां रोहिणी मुत्तरा त्रयम् ॥ चित्रा-
स्वंश्रवणं भौमं पशूनां सर्व कर्म्मच ॥ २० ॥ प्रवेशनिर्गमौ चापि न त्याज्यं निजयो निभम्
॥ पूर्वा त्रये धनिष्ठेन्द्र पौष्णे सौम्य विशाखयोः ॥ अश्लेषा या मघा श्विन्यां यात्रा सिद्धि स्त्व-
तुः पदाम् ॥ २१ ॥ अथचरही चक्रम् ॥ व्यामं विस्तीर्ण संगुण्यं मभुना माक्षैर्युतम् ॥ अष्ट
भिस्तु हरे द्भागं शेषांके फल मादिशेत् ॥ २२ ॥ पशोर्हानिः पशो र्नाशः पशु लाभः पशु
क्षयः ॥ पशु रोगः पशो र्वृद्धिः पशु भेदः पशो र्वधः ॥ २३ ॥ अथोष्ट्र महिष्यादि कृत्यम् ॥ धनिष्ठा द्वि
नये पूर्वा यादौ तिर्य्यङ्मुखो डुषु ॥ अजा वि महि षोष्ट्राणां कृत्यं चाश्वतरी शुभा ॥ २४ ॥

॥ अथ वनचारिकृत्यम् ॥ ज्येष्ठा स्वात्यश्विनी पुष्ये पुनर्भे रोहिणी करे ॥ उत्तरासु शुभं कृत्यं शृं-
गिणां वनचारिणाम् ॥ २५ ॥ अथ पक्षीकृत्यम् ॥ शुभाहे सुखो तिर्य्यङ्मुखे चोर्द्ध्वमुखे च भे
॥ सारिका शुक मुख्यानां पक्षिणां कृत्य मुत्तमम् ॥ २६ ॥ अथ सर्ववस्तुविक्रयः ॥ विशाखा कृ-
त्तिका श्लेषा भरणी पूर्विका त्रयम् ॥ विक्रयः सतिषा वेषु कर्त्तव्यो न क्रय श्शुभः ॥ २७ ॥
अथ गृहक्षेत्र भूम्यादीनां क्रयविक्रयौ ॥ जीवे शुक्रे च नंदासु पूर्णायां मूलभे मृगे ॥ पूर्वाश्लेषा मघां
त्ये च विशाखाद्वितये तथा ॥ २८ ॥ पुनर्भे मुनिभिः प्रोक्तं क्रयं विक्रयणं भुवः ॥ अथ वाणिज्य
म् ॥ अनुराधोत्तरा पुष्ये रेवती रोहिणी मृगे ॥ हस्त चित्राश्विभे कुर्य्याद्वाणिज्यं दिवसे शुभे-
॥ २९ ॥ अथ निधिद्रव्यादिवृद्धि संग्रहो ॥ पुष्ये मृगे ऽनुराधायां श्रवणत्रितये श्विभे ॥ पुनर्भेऽन्त्ये-
विशाखायां निधे र्वृद्धिश्च संग्रहः ॥ ३० ॥ अथ द्रव्यादीनां गुप्त स्थाने स्थापनम् ॥ धनिष्ठोफा वि-
शाखाख्ये पूर्वाषाढाभिधे त्यभे ॥ रोहिण्यां च निधे र्भूमौ स्थापनं शुभमीरितम् ॥ ३१ ॥
अथ द्रव्यप्रयोगः ॥ श्रवणादि त्रिभे चित्रा चतुष्के रेवती द्वये ॥ पुनर्वसौ मृगे पुष्ये शुभो द्रव्यप्र-

नच ग्राह्यं ऋणं यस्मात्तद्वंशे
योगकः ॥ ३२॥ संक्रांतौ वृद्धि योगेतु हस्तर्क्षे रवि भौम योः ॥ ऋणा च्छेदं कुजे कुर्यात्सं-
सुस्थिरं भवेत् ॥ ३३॥ ऋणं भौमे न गृह्णीयान्न देयं बुध वासरे ॥ ऋणा च्छेदं कुजे कुर्यात्सं-
चयं सोम नन्दने ॥ ३४ ॥ अथ धान्य विक्रयः ॥ रोहिण्या सत्क्षयोः ऽन्त्यस्य धनिष्ठा सत भौत्तरे ॥ अ-
थ रस संग्रहः ॥ रस सयहणं श्रेष्ठं तोया रंभो दितो ऽष्टसु ॥ ३५॥ अथ वृद्ध्यर्थ धान्य प्रयोगः ॥ विशाखा
रोहिणी ज्येष्ठा पुनर्भौ ऽश्वि पात्र त्रये ॥ ऋत्तरे स्वाति पुष्ये तु धान्य वृद्धि प्रयु भे रिता ॥ ३६ ॥
अथ गृहाच्छादनम् ॥ हस्त त्रये धात्र युगे सराधा घस्रादि योगे गृह गोपनं च ॥ नंदां परित्यज्य कु-
हूंच ऋक्तां भौ मार्कजा दित्य दिनाश्च निंद्याः ३७ अथ हल प्रवाहः ॥ रवौ रौद्रादि पादस्थे भूमौ संजा
यते रजः ॥ तस्मा द्दिनं त्रयं तत्र बीजवापन कार येत्॥३८॥ ऋक्ताष्टमी विष्टिसुन ष्ट चंद्रे क्षीणेन्दु
रा र्कज वासरेषु ॥ दिन क्षये वानिशि संध्ययो र्वा कृता कृषी पूर्व धनानि हंति ॥ ३९ ॥ पुन
र्वसू द्वये मूले ऽऽत्तरे रोहिणी द्वये ॥ हस्त त्रये ऽनुराधायां रेवत्यां श्रवण त्रये ॥ ४० ॥ तिथौ
वारे शुभे ऽश्विन्यां हल प्रवहणं शुभम् ॥ अथ हलचक्रम् ॥ त्रिभि स्त्रिभि स्त्रिभिः पंच त्रि-

सं.सि.

६१

भिः पंच त्रिभिर्द्वयम् ॥ सूर्य्यभाद्दिनभं यावद्गानि खाङ्गी हले क्रमात् ॥ ४१॥ अथ बीजोप्तिः ॥
हस्ताश्विपुष्योत्तर रोहिणीषु चित्रानुराधा मृगरेवतीषु ॥ स्वातौ धनिष्ठा च मघा च मूले बी-
जोप्तिरुत्कृष्ट फला प्रदिष्टा ॥ ४२॥ शुभे वारे तिथौ श्रेष्ठा बीजोप्तिस्त्वथ राहुभात् ॥ अग्रा-
ग्नी त्रयं चैक त्रयं त्रिचतुष्टयम् ॥ ४३॥ अशुभं च शुभं ज्ञेयं दिन संस्फणि चन्द्रभे ॥ चन्द्रमुक्ते लग्ने
अथ शस्यारोपणम् ॥ हस्तत्रयोत्तरा मूले धनिष्ठा रोहिणी मृगे ॥ पुष्ये मृगेऽनुराधान्त्ये म-
घायां शुभ वासरे ॥ ४४॥ त्यक्त्वा ऋक्षं शनिं भौमं शस्यस्यांकुर रोपणम् ॥ अथ शस्यादेः
अथ धान्यच्छिदा ॥ पूर्वोत्तरा मघाश्लेषा ज्येष्ठार्द्रा श्रवणद्वये ॥ भरणी द्वितये मूले मृगे पुष्ये
कर त्रये ॥ ४५॥ धान्यच्छिदा शुभा ऋक्षे हित्वा भौम शनैश्चरौ ॥ अथ कणमर्दनम् ॥ अनु-
राधा श्रवे मूले रेवत्यां च मृगे त्रिभे ॥ ज्येष्ठायां चैव रोहिण्यां शुभं स्यात्कणमर्दनम् ॥
४६॥ अथ धान्यानयनं फलपुष्पोत्तारणं च ॥ रोपणोदित नक्षत्रे वासरे मान्दिरे कृषेः ॥ अन्नस्या-
नयनं पुष्प फला द्युत्तारणं च सत् ॥ ४७॥ अथान्नादिपाकक्रिया ॥ मूलं चित्रानुराधा सु विश ६१

थि खा कृत्तिका मृगे ॥ उत्तरा रोहिणी ज्येष्ठा रेवतीषु पचि क्रिया ॥ ४८ ॥ सत्यक्तांत्रु धरं त्वयनं
५१ पस्य रंध्र तिथिं शुभम् ॥ अथ नवान्नप्राशनम् ॥ हस्त चित्रा नुराधा त्ये रोहिणी श्रवण द्वये
॥ मृगाश्विन्युत्तरा सर्वे शुभे वारे तिथा वपि ॥ ४९ ॥ नवान्न स्य विधानं च भा शनं फ-
ल मूलयोः ॥ अथ नवान्न चक्रम् ॥ बुधर्क्षात्सुत्र ५ पुत्रे ५ भु ५ पुत्र ५ वेद ४ युगे ३ रत्नु १ क
म् ॥ सच्छुभं शुभ मर्घशं शुभं व्यर्थ शुभं क्रमात् ॥ ५० ॥ विना मंदं विषधटी व्यधुपो-
पर्कि भूमि जान् ॥ अथ कोष्ठादौ धान्य स्थितिः ॥ पुनर्भे द्वंग भोर्वे त्ये नुराधा श्रवण त्रये ॥
हस्त त्रये श्विनी पुष्ये रोहिण्या सुत्तरा त्रये ॥ ५१ ॥ गुरौ शुक्रे रवौ सोमे स्त्व कोष्ठादौ धान्य र
क्षणम् ॥ सूर्यर्क्षादग्नि वेदेषु वसु वेदाग्नि षु क्रमात् ॥ शुभा शुभं क्रमाज्ज्ञेयं कोष्ठादौ
धान्य रक्षणे ॥ ५२ ॥ अथ बीज संग्रहः ॥ हस्त त्रये पुनर्वस्वोः रोहिण्यां श्रवण द्वये ॥ स्थिरे लग्ने
शुभे वारे तिथौ द्वे बीज संग्रहः ॥ ५३ ॥ अथ तृण रज्जुभिर्धान्य बंधनम् ॥ स्वातौ मूले च हस्ते त्वे भा
द्रा पाद द्वये मृगे ॥ रोहिण्यां कृत्य कोष्ठान्तर्धान्य संरक्षणं शुभम् ॥ ५४ ॥ अथोखल मुशल चक्रम् ५२

३.णि
८३

॥ भूदिग ब्धिदिग क्षोणि शने भाद्विनभं क्रमात् ॥ अशुभंच शुभं ज्ञेयं क्रमादूषल सूषले ॥
५५॥ अथ चूर्णमर्दन चक्रम् ॥ शने र्भतो युग ४ व्य ४ष्ट ८ राम ३ वेद ४ त्रिभं क्रमात् ॥ असु
च्छुभं क्रमा चक्रे चक्रि कारव्ये मनो हरे ॥ ५६॥ अथ सूर्यी चक्रम् ॥ सूर्य भात्पंच ५ त्र्य ३ ष्टा ८
ब्धि ४ मुनि ७ भेषु शुभा शुभम् ॥ क्रमात्सूर्याभिधे चक्रे विज्ञेयं कोविदैः सदा ॥ ५७ ॥ अथ
चुल्ली चक्रम् ॥ सूर्य भात्संग ६ वेदा ४ष्ट ८ राम ३ शत्रु ६ शुभा शुभम् ॥ चुल्ली चक्रे क्रमात्
ज्ञेयं शुभा शुभं विचक्षणैः ॥ ५८ ॥ अथ मार्जनी चक्रम् ॥ सूर्य भाद्राम ३ रामा ३ ग ६ राम ३
तर्का ६ ग ६ र्भेषु च ॥ असत् शुभं क्रमात् ज्ञेयं मार्जनी संज्ञके शुभे ॥ ५९ ॥ हरि सूर्य चि
त्रादिति मैत्र पुष्ये मृगे रोहिणी दस्रे विरिंचे च भौमे ॥ त्यजे त्कुंभ मीने ऽप्य लौ लग्नगे हि
पवित्रं तु कुर्त्ते रवे र्व्या मत्रानि ॥ ६० ॥ अथ गोमय पिंड चक्रम् ॥ सूर्य क्षाद्रसमे रध स्य लग्ना
तैः पाको रसैः संयुतः पौर्वे शुभं स्थितैः शावस्य दहनं मध्ये युगे स्तार्पभीः ॥ शमाण्ण दि
ग्वेदभैः त्व शुद्धं स्यात्संग रोगभीः छाया दैः कारणं शुभंच गदितं काष्ठादि संस्था

८३

संध्यि २४

पने ॥ ६१॥ सूर्य्यभाद्र सतर्का ६ब्धि ४ नाग ८ वेदा ४ भि जित्सह ॥ शुभा शुभं क्रमात्
ज्ञेयं करीपादिषु संग्रहे ॥ ६२॥ अथ दीप चक्रम् ॥ सूर्य्य भाद्युग्म २ वस्व ८ ब्धि ४ दिक् १० त्रि-
कं ३ चा शुभं शुभम् ॥ दीप चक्रे क्रमात् ज्ञेयं फलं योग विचक्षणैः ॥ ६३॥ त्यक्त्वा
ऽरक्तां रविं भौमं लग्नं च घट मीन कम् ॥ अथ कलश चक्रम् ॥ सूर्य्य भात्पंच ५ रामा ३ द्रि
७ वसु ८ पंच ५ शुभाशुभम् ॥ फलं क्रमाद्बुधैर्ज्ञेयं चक्रे कलश संज्ञके ॥६४॥ अथ कांस्य पा
त्रं थाल्यादि चक्रम् ॥ चर मृदु लघु भे सल्लग्न के चैत्र पौषे क्षिति जर विजनंदा ऽ पेय नाडी वि
हाय ॥ प्रति समन व जातो ऽ न्न स्य प्रात्या शान सत् ध्रुव गण सहिते स्तैः कांस्य पात्रादि
भोज्यम् ॥ ६५॥ मुखे त्रीणि ३ शोकं रसा ६ कंठ पुष्टिः त्रयो ३ रोग कुक्षे धनं राम
वामे ॥ त्रये ३ पृष्ठ व्याधिः सुखं राम ३ मध्ये रसे ६ हानि भार्का यदा भुंजि पात्रम् ॥ ६६
॥ अथ रहंट कादि मुहूर्त्तम् ॥ अदिति क्षि प्र मृदु ध्रुव संज्ञ के भृगु ज वा क्य ति पूर्ण जया तिथौ ॥
शकट नाव सुखासन शिल्पकं भ्रमर कार्य्य रहंट कसिद्धिदम् ॥ ६७ ॥ अथ कोल्हू चक्रम्

शि॰ ३५

॥ जंत्र काष्ठ समुद्भवं सुललितं भान्वृक्षतः पंच भं मूले मूल विदारणं च सर भं मध्ये स्थि-
तन्त्र्यदृम् ॥ लिंगे पंच निहन्ति तैल गुड कौ दंते द्वयं स्वामि हृत् पंचे पंच भयं रिपो प्रचर स-
भं सौख्य प्रदं कर्त्तरी ॥ ६८ ॥ सूर्य्य भात्पंच पंचेषु राम युग्म शर त्रिकम् ॥ नक्षत्र्वशुभमञ

अथ कोल्हू चक्रम् ॥ साभित्

दुःखं क्लेशं शुभमतोऽशुभम् ॥ ६९ ॥ कोल्हू चक्रे साभिजिते

| ५ | ५ | ५ | ३ | २ | ५ | ३ |
|---|---|---|---|---|---|---|
| अ | शु | अ | अ | अ | शु | अ |

ज्ञेयमेवं विचक्षणैः ॥ अथ धर्मक्रिया ॥ रेवती द्वितये हस्त त्रित-
ये रोहिणी द्वये ॥ श्रवत्रयोत्तरा पुष्ये पुनर्वस्व नुराधयोः ॥ ७० ॥
ज्ञेज्य शुक्रेन्दु सूर्य्ये युक्त्र्ज्य षड्वर्ग शालिनि ॥ लग्ने जीव युते जीवे वलिष्ठे धर्म्म माचरेत्
॥ ७१ ॥ अथ शांतिकं पौष्टिकं कर्म्म ॥ पुनर्वसू द्वये स्वातौ त्र्युत्तरे श्रवण त्रये ॥ रेवती द्वितये ह-
स्तेऽनुराधा रोहिणी मघे ॥ ७२ ॥ शांतिकं पौष्टिकं कर्म्म पुण्याहे कीर्त्तितं बुधैः ॥ अथ होमादे
र्वेद्याहुति फलम् ॥ रवौ बुधे भृगौ मंदे चंद्रे भौमे गुरावगौ ॥ केतौ च सूर्य्य भात् ज्ञेयं प्रत्येकं
भत्रयं क्रमात् ॥ ७३ ॥ होमाहुतिः खले नेष्टा शुभदा शुभखेचरे ॥ अथ होमादौ वन्हिवा

सफलम् ॥ तिथि वार युति स्से का वेद् भत्ता व पोषका ॥ निवासोऽग्ने च्चौ भ्रि रूपे १ दिस प्राणवि-
ना प्रदः ॥ ७४ ॥ पाताले द्विक धे वेरा धन संचय नाशनः ॥ गुरा वेश्रा वक्रे वेरा भूसो वि-
पुल सौख्यदः ॥ ७५ ॥ संस्कारेषु विचारोऽस्य न कार्यो नापि वैलवे ॥ नित्य नैमित्ति के का-
र्य्येन चाव्दे मुनि भिः स्मृतः ॥ ७६ ॥ अर्क धंवज्ञा दष्ट मेज्ञाच्च वुधे मन्द स्मुक्रा दष्ट सेंऽ
गारकश्च ॥ राहुर्धर्मे जीवतः खेद सुते होमे नाशः सुत्र दारा धना नाम् ॥ अथ मंत्र दीक्षा ॥
रोहिण्यां श्युत्तरे मों जीवं धनो दित भांदिषु ॥ मंत्र दीक्षा शुभे चान्हि गृह्णोऽव्या गनो दिता
॥ ७८ ॥ अथ मंत्र यंत्रो पाधनादि ॥ कृत्ता हस्ता श्विनी कर्ण विशाखा स्तग भे हनि ॥ शुभे सू-
र्य्ये युते शस्तं मंत्र यंत्र ज्ञता दिकम् ॥ ७९ ॥ अथ वीर साधनम् ॥ मघाद्री भरणी मूले स्तगोंगे
सें वुधे घटे ॥ सुखे शुक्रेऽष्टमे शुद्धे सिद्धि वीराभिचारयोः ॥ ८० ॥ अथौषध करणं तत्सेवनं-
च ॥ हस्त त्रयेऽनुराधायां मूले पुष्ये श्रव त्रये ॥ स्तग भे रेवती युग्मे पुनर्वस्वो र्वि जन्म भे
॥ ८१ ॥ ज्ञेन्दु शुक्रेज्य सूर्य्याणां वासरे सति घावपि ॥ द्विस्व भावे शुभे लग्ने शुद्धे धूनि

मं शि

दैवी

अगोकोऽर्य्यःलग्ने घटे कुम्भे वुधयुक्त

५६६

न्ते व्यये ॥ ८२ ॥ भेषज्यं शुभदं प्रोक्तं योगे चा पुष्य दायि नि ॥ अथ रसोत्पादनम् ॥ विशाखा कृत्तिका मूले धनिष्ठाश्वि करे मृगे ॥ ज्येष्ठायां भाद्र भे सौम्ये वासरेषु रस क्रिया ॥ ८३ ॥ अथ रस सेवनम् ॥ हस्त त्रये ऽश्विनी पुष्ये ऽनुराधां त्ये श्रुति त्रये ॥ पुनर्भे मृग रेवत्यै ऽर्के भौमे ज्ये रस भक्षणम् ॥ ८४ ॥ अथ वात रोगादौ तैलोप सेवनम् ॥ हित्वा श्लेषा मघा मूलं विशाखार्द्रा भरणी द्वयम् ॥ मंदे ऽर्के ज्ञे स्थिति स्तैले तृतीयादि त्रिके तिथौ ॥ ८५ ॥ अथ रक्त विमोक्षणं विरेचक वमनौ ॥ हस्त त्रये ऽश्विनी पुष्ये शत भे रोहिणी द्वये ॥ श्रवणे चानुराधायां ज्येष्ठायां रक्त मोक्षणम् ॥ ८६ ॥ गुरु भौमार्क वारेषु कार्य्यं शुभ तिथौ तथा ॥ विरेको वमनं शुक्रे चंद्रे चैवोक्त भादिषु ॥ ८७ ॥ अथ तप्त लोह दाहः ॥ शत चित्राश्विनी मूले विशाखा कृत्तिकार्द्र भे ॥ ज्येष्ठाश्लेषा कुजे ऽर्के ऽगारे लोहाग्नि भेषजम् ॥ ८८ ॥ अथ रोगोत्पत्तौ नक्षत्र वशात्कष्ट दिन संख्या ॥ स्याश्विनी कृत्तिका मूले ज्वरार्तौ नव वासराः ॥ रोहिण्या मुत्तरा भाद्रे पुनर्वस्वो श्च पुष्य भे ॥ ८९ ॥ फल्गुन्यां वासराः सप्त मघायां विंशति स्तथा ॥ शत भं

ले प्रेत दोषो वै मन स्यं हिमज्वरः ॥ कन्यायां खेट जो दोषो व्यथा क्रोधोऽरुचिर्भवेत् ॥ १९८ ॥ तुलायां क्षेत्रपालस्य दोष स्संतति पीडनम् ॥ नाग दोषोऽलिभेदा लो देहेऽस्मिन्बुद्धि नाशनम् ॥ दोषो धनुषि देहो त्थः शोको दध्ये रुजा ज्वरः ॥ मकरे चंडिका दोषो देह भंगो ज्वरोऽग्निजः ॥ २०० ॥ मलिन प्रेत दोषश्च देह पीडा घटे भवेत् ॥ दोषो मीनेतु योगिन्याः ज्वरे पानस विभ्रमः ॥ १ ॥ तल्लग्ने तनु चन्द्रे वा ज्ञेयं फल मुदाहृतम् ॥ लग्नेऽष्टमे व्यये सूर्ये क्षेत्र पालस्य दूषणम् ॥ २ ॥ आकाश देव्या चन्द्रे तु लग्ने षष्ठेऽष्टमे व्यये ॥ द्वादशे दशमे भौमे शाकिन्या दूषणं मतम् ॥ ३ ॥ वनदेवी भवो दोष स्सप्तमे द्वादशे बुधे ॥ पा मित्रे द्वादशे जीवे देव दोषो निगद्यते ॥ ४ ॥ लग्ने वा सप्तमे शुक्रे दोषो वा यदेवतोद्भवः ॥ शनै सप्तमे व्यये चास्ते दोषस्त्या दास्य वातजः ॥ ५ ॥ वा मित्रे द्वादशे राहो कुगाति र्ज्ञाति दूषणम् ॥ व्यये धर्मे तृतीयेच षष्ठे पाप ग्रहो यदा ॥ ६ ॥ हलोगरे जले शस्त्रे तस्य दोषः कुलोद्भवः ॥ शनौ जले कुजे शस्त्रे गरे सूर्ये स्ववंशजः ॥ ७ ॥ राहो

च विकृतो नष्टो शांति पूजा द्विजार्चनैः ॥ दशम स्थे बुधे मार्ग दोषः प्रेत भवो गुरो ॥ ८ ॥ शुक्रे दोष स्तु देवोत्थः पापेन्दुः शाकिनी भवः ॥ स्वगोत्रे गोत्रजो दोषः पर क्षेत्रे परोद्भवः ॥ ९ ॥ शत्रु क्षेत्रे शत्रु दोषो मित्रे स्वजन संभवः ॥ अथ रव्यादि वारे दोषः ॥ कु दृष्टि संभव स्सूर्य्ये पितृ दोषो निशा करे ॥ मंगले शाकिनी दोषो व्योम देवी भवो बुधे ॥ १० ॥ गोत्र देवी भवोर्जीवे जल देव्या स्तु भार्गवे ॥ प्रेत पीडा शनौ सर्वं शान्त्या शान्ति मुपैति तत् ॥ ११ ॥ साध्या दोष स्त्व क्षीण र्क्षे स्वोच्चे स्वोच्च वलान्विते ॥ असाध्या विवले नीचे स्थितं शत्रु गृहं गते ॥ १२ ॥ साध्या सौम्य गृहे दोषा वलिभिः केंद्र संस्थितैः ॥ असाध्याः खेचरैः पापैः केन्द्रगैर्वल शालिभिः ॥ १३ ॥ यद्दोषः पूजनं तस्य कुर्य्यात्तद्दोष शांतये ॥ जल देव्या जले व्योम देव्या व्योम्नि जलं त्यजेत् ॥ १४ ॥ शाकिनी डाकिनी भूत दोष तस्करणे तथा ॥ तदुद्देशेन दृग्दोष चत्वरे धारये द्बलिम् ॥ १५ ॥ गोत्र देव्यु द्भवे दोषे कुल देवी प्रपूजयेत् ॥ पितृ दोषेतु कर्त्तव्यो नारायण वले र्विधिः ॥ १६ ॥ प्रेत श्राद्धं त्रि पिंडा ख्यं विप्रो स्तर्प-

णा मेवच ॥ अथ रोगज्ञानायापरः क्रमः ॥ आत्मना मासरं चैव दूत स्यैव तु रोगिणः ॥ एकी कृत्वा त्रिगुणितं नवभि र्भाग माहरेत् ॥ १७ ॥ शेषे षड्वे ९८४ भू १ भूतः द्विके सप्त तथै श्वरः ॥ त्र्यष्टमे पितर श्चैव वारुणे के गृहजा भवेत् ॥ १८ ॥ अथ सर्प दंशे नेष्टम् ॥ विशाखा कृत्तिका मूले रेवत्या र्द्रा मघासुच ॥ ऋक्षे श्लेषा भिधानेच सर्व दंष्टो न जीवति ॥ १९ ॥ अथ रोग विमुक्त स्नानम् ॥ मघा पुनर्वसू स्वाती रोहिणी चूत्तरत्रये ॥ आश्लेषायांच रेवत्यां भार्गवे चंद्र वासरे ॥ २० ॥ नस्ना याद्रोग निर्म्मुक्तः शुभे चंद्रे तथैवच ॥ ऋक्षायां रवि भौमार्कि वासरे चर लग्नगे ॥ २१ ॥ दुष्ट चंद्रे तथा विष्ट्यां पाता दौ दूषिते हनि ॥ रोग मुक्तो नरः स्नाया द्दानं कुर्य्या दनं तरं ॥ २२ ॥ अथ रक्त मोक्षणं स्नानंच ॥ पुष्ये हस्ते तथाश्विन्यां श्रवणे रोहिणी द्वये ॥ चित्रा द्वयेऽनुराधाख्ये ज्येष्ठायां गुरु वासरे ॥ २३ ॥ भौमेऽर्के रक्त मोक्षं स्यात् रोगयुक्ते स्नान माचरेत् ॥ अथ रोग मुक्तस्य वहिर्गमनम् ॥ सद्वारे गमनोक्त र्क्षे सतिथौ शोभने दिने ॥ सल्लग्ने रोग मुक्तस्य वहिर्न्निगमनं शुभम् ॥ २४ ॥ अथ होलिकोत्सव स्ना-

नम्॥ राजा पुरोऽपि स च्छंदे शोभने ऽर्के शुभे तिथौ ॥ होलिका नंतरं खाया न्निमंदार दिने शजा २५॥ अथ मल्लक्रिया ॥ ज्येष्ठार्द्रा भरणी पूर्वा मूला श्लेषा मघा मिधे ॥ जया पूर्णा सुसहार सांकिशी षोडियेंग के ॥ २६॥ सत्त्वेंदैः केन्द्रगैः स्सार्कैः मल्ल क्रीडा शुभा वहा ॥ अथ सर्प ग्रहणम् ॥ भरण्या र्द्रा मघा श्लेषा पूर्वा ज्येष्ठाख्य मूल के ॥ क्रूरेऽन्हि केन्द्रगैः पापैः हित्वा काल महि ग्रहः ॥ २७॥ अथ नराश्व पशूनां दमनम् ॥ दानिका रोहिणी पुष्ये स्वाती हस्ते श्रव द्वये ॥ मृगे ऽर्के रवि शुक्रे तं प्रशस्तं गो नर वाजिनाम् ॥ २८॥ अथ सेतुबंधः ॥ उत्तरा रोहिणी स्वाती मृगे ऽर्के मंगले गुरौ ॥ सेतूनां बंधनं प्रशस्तं शुभे लग्ने शुभे क्षिते ॥ २९॥ अथ लवण कृत्यम् ॥ लवणा रंभ कृत्येतु भरणी रोहिणी श्रवे ॥ शनैश्चरे दिवा श्रेष्ठो जन्म राशेश्चाने वले ॥ ३०॥ अथ जिन चार्वाक्या खंड क्रिया ॥ ज्या श्विनी मृगे स्वाती पुनर्भे श्रवण त्रये ॥ जया पूर्णा सु शुक्रे ऽके बुधे हानि चरोद्ये ॥ ३१॥ चार्वाकि जिन पा खण्ड मण्डली करणं शुभम् ॥ अथ शैलूषनट कृत्यम् ॥ चित्रार्द्रा रोहिणी पुष्ये उत्तरे श्रवण त्रये ॥ शुभाहे ऽर्के च शैलूषनट कृत्यं समीरितम् ॥ ३२॥ अथ तैलिक यंत्र कृत्यम् ॥ धनिष्ठाश्विकर चित्रानुराधा पुष्य भे तथा ॥ ज्येष्ठायां च

पुनर्वस्लो रेवत्यां शुभवासरे ॥ ३३ ॥ तैल यंत्रक्रिया शस्ता हित्वा न्नरक्ता कुजावा५ ॥ ...
भकार कृत्यम् ॥ पुनर्वसू द्वये हस्त त्रयें त्यैरो हिणी म्गे ॥ ३४ ॥ अनुराधा म्रवो ज्येस्ठा स सूर्ये
सौम्य वासरे ॥ लग्ने च रौद्रे शोज्ञा कुंभ कार क्रिया बुधैः ॥ ३५ ॥ अथ काष्ठ शिल्प कृत्यम् ॥
हस्त वद्वे ऽश्विनी पुष्ये रेवत्यां श्रवण त्रये ॥ पुनं भें रोहिणी युग्मे सूत्र धारि क्रियोत्तमा ॥ ३६
॥ अथ स्वर्ण कार कृत्यम् ॥ श्रव त्रये ऽश्विनी पुष्ये म्रो हस्त चतुष्टये ॥ कृत्तिकायां पुनर्वस्वोः शु
भे लग्ने तिथ्या वपि ॥ ३७ ॥ हेम कार क्रिया शस्ता हित्वा बुध शने श्चरौ ॥ अथ चर्मकार कृत्यम्
॥ शुक्रार्क शनि वारेषु चर्म कार क्रिया शुभा ॥ वसु पूर्वा हिदे वाश्वि पोस्णा कैन्द्रव वासरे
॥ ३८ ॥ अथ लोहाश्ममणीनां कृत्यानि ॥ स्वातौ ज्येष्ठा द्वये मूले चित्राद्रा भरणी त्रये ॥ मणि लो-
हाश्मनां कृत्यं शपि चान्हि स्थि रोदये ॥ ३९ ॥ अथ नापितक्रिया ॥ ज्येष्ठा हस्त त्रये कर्णात्रि
तये ऽश्वि मृगो ऽन्त्य भे ॥ पुनर्वसू द्वये हित्वा न्नरक्ता षष्ठ चर्त्नी तिथिः ॥ ४० ॥ स सूरे ना
पितानां चक्षु रादि सकला क्रिया ॥ अथाभीरजन कृत्यम् ॥ विशाखायां पुनर्भे ऽन्त्ये ज्येष्ठा

सं.शि.
२०४

हस्ताश्विनी मृगे ॥ पूभा करणे त्रये पुष्ये [illegible] क्तेवलच क्रिया ॥ ४१ ॥ अथचौरक्ट-
त्यम् ॥ विशाखा कृत्तिका पूर्वा मूलार्द्रा भरणी मघे ॥ अश्लेषा ज्येष्ठयो र्मंद भौम यो श्शकु-
नेवले ॥ ४२ ॥ लग्ने वा दशमे भौमे चौर्य्यं स द्रव्यलब्धये ॥ अथ प्रेतदाहः ॥ प्रत्यक्ष शव
संस्कारे दिनं नैव विशोधयेत् ॥ अशौच विनि वृत्तौ चेत्पुनः संक्रियते मृतः ॥ ४३ ॥ सं-
शोध्येव दिनं ग्राह्य मूर्द्ध्वं संवत्सराद्यदि ॥ प्रेत कार्य्याणि कुर्वीत श्रेष्ठं तत्रोत्तरायणम् ॥
४४ ॥ कृष्ण पक्ष श्च तत्रापि वर्जयेत्तु दिनत्रयम् ॥ चतुर्थाष्टमगे चंद्रे द्वादशे च विवर्ज-
येत् ॥ ४५ ॥ प्रेत कृत्यं व्यतीपाते वै धृतौ परिघे तथा ॥ करणे विष्टि संज्ञे च शूले श्वर दि-
ने तथा ॥ ४६ ॥ त्रयोदश्यां विशेषेण जन्म तारा त्रये तथा ॥ जन्मदशे कोन विंशति ज-
न्मतारा त्रय न्त्विदम् ॥ ४७ ॥ नक्षत्रेतु न कुर्वीत यस्मिन् जातो भवेन्नरः ॥ न प्रोष्ठपद
योः कार्य्यं तथा ग्नेयेच भारत ॥ ४८ ॥ दारुणेषु च सर्वेषु प्रत्यारिंच विवर्ज्जयेत् ॥
भरण्यार्द्रा मघा श्लेषा मूलं त्रिचरणानिच ॥ ४९ ॥ प्रेत कृत्येषु दुष्टानि धनिष्ठाद्यंचपंचकं

मू ॥ फाल्गुनी द्वितये रोहिण्यनुराधा पुनर्वसू ॥ ५० ॥ आषाढे द्वे विशाखा च भानि
दि चरणानि च ॥ एतानि किंचिद्दुष्टानि संभवे सति वर्जयेत् ॥ ५१ ॥ चतुर्दशी तिथि-
नंदा भद्रां शुक्रार वासरौ ॥ सितेज्य योरस्त मित द्वात्रिंश भ निषमो ध्रि भम् ॥ ५२ ॥ मु-
लं पक्षं च संत्यज्य पुनर्दहन मुत्तमम् ॥ वसंतराद्धतः पंच नक्षत्रे तु द्विजन्मसु ॥ ५३
॥ पौष्ण वेसर्पयो श्चैव दहनात्कुल नाशनम् ॥ गुरु भार्गवयोर्मध्ये पौष मासे मलि-
म्लुचे ॥ ५४ ॥ नातीतः पित्र मे धस्या द्व या गोदावरी विना ॥ अथ लग्नादि तिथ्यंतानाव-
लावलं त्वा नार्थं गुणाः ॥ सहस्र गुणा भूलग्नं चंद्रः शत गुणो वली ॥ तारा षष्टि गुणो योगो द्वा
त्रिंशद्गुणा भाग्भवेत् ॥ ५५ ॥ तद्दहं करण विंद्या द्वार स्त्वष्ट गुणाः स्मृताः ॥ द्विवेदि कुल
संभूत सरव्यू कुल संग्रहे ॥ शिरो मणौ समाप्तैषैका दशीयं प्रभा शुभा ॥ ५६ ॥ इति श्री
संग्रह शिरो मणो मुहूर्त्त कथनं नामैका दशी प्रभा ॥ ११ ॥ अथ संक्रांति प्रकरणम् ॥ सं-
क्रान्तिर्नव वाहूलं चोष्ठी दीर्घं नाशिका ॥ षष्टियोजन विस्तीर्णा संक्रांतिस्तु स्त्रिया कृतिः

॥ १ ॥ संक्रांति भौमि वारे स्याद्रो राख्या भरणी मघे ॥ पूर्वात्रये च नक्षत्रे शूद्राणां सुखदा स्मृता ॥ २ ॥ सोम वारेऽभिजि स्युष्येऽश्विनी हस्तेषु भास्वतः ॥ संक्रांतिः कथिता ध्वांक्षी विप्राणां सौख्य प्रदायिनी ॥ ३ ॥ श्रवणादि त्रिभे स्वातौ पुनर्वसोः कुजे हनि ॥ या भवेत्तु चोराणां सौख्य दात्री महोदरी ॥ ४ ॥ बुधा हेया च रेवत्यां मृगे चित्रा नुराधयोः ॥ सा तु मंदा किनी नाम्ना नृपाणां सौख्य वर्द्धिनी ॥ ५ ॥ बृहस्पतौ यदा जाता रोहिण्यां चोत्तरात्रये ॥ तदा मंदाभिधा ज्ञेया विप्राणां हित कारिणी ॥ ६ ॥ भृगो वारे विशाखायां कृत्तिकायां च या भवेत् ॥ सा तु मिश्रेति विख्याता पशूनां प्रीति दायिनी ॥ ७ ॥ शनौ मूले तथार्द्रायाम श्लेषा ज्येष्ठयोरपि ॥ या भवे द्राक्षसी सा स्यात् अंत्य जानां सुखावहा ॥ ८ ॥ आद्यऽह्नि त्र्यंश के राज्ञो द्वितीये हंति वै द्विजान् ॥ तृतीये वैश्यकान्मध्ये संक्रांतिः शूद्र वर्णकान् ॥ ९ ॥ प्रति याम क्रमा द्धंति पिशाचान् राक्षसान्नटान् ॥ पशु पाल गणं हंति प्रभाते सर्व लिंगिनः ॥ १० ॥ अथ संक्रांतरम् ॥ वृश्चिके वृष मे सिंहे कुंभे

वि० विष्णुपदा स्मृता ॥ षडशीति मुखा मीने कन्या मिथुन धन्विषु ॥ ११ ॥ प्रोक्तं याम्यायनाक-
१०७ र्कः मकरे चोत्तरायणम् ॥ विषु वाख्या तुला मेषे संक्रांति स्समुदाहृता ॥ १२ ॥ अथ क्रूर सौ-
म्यपरत्वेन फलमाह ॥ रवि रविज भौम वारे संक्रांतौ दिन करस्य तन्मासि ॥ पित्त कफानिल
जामयनर पत्ति कलह स्त्ववृष्टि श्च ॥ १३ ॥ बुध गुरु सित चंद्रा हे सांति संक्रांता व-
नांमय न्नृणां ॥ क्षिति पति निकर क्षेमं सस्य विवृद्धि विंध स्मिरणो पीडा ॥ १४ ॥ यस्य
जन्मर्क्ष मासाद्य रवि संक्रमणं भवेत् ॥ तन्मासा भ्यंतरे तस्य रोग क्लेश धन क्षयाः ॥
१५ ॥ अज कन्या झष कर्किणि संक्रांतौ यदि न चेद्दर्षम् ॥ आमय मरणं भू भृद्युद्धमन
र्घ्यंत्व वृष्टिश्च ॥ १६ ॥ वृष वृश्चिक तुला मकरे वृष्टिस्स्यात्संक्रम विषये ॥ विस्फोटा-
मय तस्कर पीडा वृष्टिः कृशानु भयम् ॥ १७ ॥ अथारिष्ट संक्रमे शांतिः ॥ तगर त्वगो रुह.
पत्रै रजनी सिद्धार्थ लोध्र संयुक्तैः ॥ स्नानं जन्मर्क्ष रवि संक्रांतौ नृणां शुभदम् ॥ १८
॥ अथ पुण्य समयः ॥ प्रागूर्ध्व दृश पूर्वतो षडवनिं स्तद्वत्परः पूर्वत स्त्रिंश त्षोडश पूर्वतो ऽथ १०७

परतैः स्वर्वाः परा स्त्वु दर्शे ॥ पूर्वाः षोडश चोत्तरा स्तु भुवः पश्चा त्तवेदाः पुनः पूर्वाः षोडश चोत्तराः पुन रंशो पुराग्यास्तु मेषा दितः ॥ १९ ॥ अस्यार्थः ॥ मेषे प्रागूर्द्ध्व दश घटिकाः पुण्य कालः १ वृषे पूर्वाः षोडश २ मिथुने पराः षोडश ३ कर्के पूर्वास्त्रिंशत् ४ सिंहे पूर्वाः षोडश ५ कन्या यां पराः षोडश ६ तुलायां प्रागूर्द्ध्व दश ७ वृश्चिके पूर्वाः षोडश ८ धनुषि पराः षोडश ९ मकरे चत्वारिं शत्पराः १० कुंभे पूर्वाः षोडश ११ मीने पराः षोडश । १२ पुण्याः षोडश नाड्य स्तु पराः पूर्वा स्तु संक्रमात् ॥ त्रिंशत्कर्कटके पूर्वाश्चत्वारिं शत्परा मृगे ॥ २० ॥ मध्यान्हा दुत्तरं पुण्यं प्राङ्नि शी थात्तु संक्रमे ॥ निशीथा दूर्द्ध्वका लेतु मध्यान्हा त्प्राक् परे हनि ॥ २१ ॥ चेन्नि शीथे द्वयं पुण्यं पर पूर्व विभागयोः ॥ अयनयो र्विशेषः ॥ सूर्य्या स्तमन संध्यायां यदि सौम्या यनं भवेत् ॥ तदोदया दहः पुण्यं पूर्वाह्ने पूर्वतो यदि ॥ २२ ॥ अथ संध्या लक्षणम् ॥ स्पष्टार्का स्तमना त्संध्या घटिका त्रय संमिता ॥ तथै वार्द्ध दयान्प्रात घटिका त्रय संमिता ॥ २३ ॥ अस्ता दूर्द्ध्वं च मकरे रात्रौ च संक्रमं रवेः ॥

तदोत्तर दिने पुण्यं मध्यान्हात्प्राक् प्रकीर्त्तितम् ॥ २४ ॥ यदा सूर्योदयात्पूर्वः कर्क संक्रमणो रविः ॥ तदा पूर्व दिने पुण्यं तदूर्द्ध नत्परे हनि ॥ २५ ॥ आद्यो विसु पदे यामे मध्येतु विपुवाभिधे ॥ षडशीतिमुखे सौम्ये ऽयने पुण्ये तदुत्तरम् ॥ २६ ॥ अथ रात्रौ स्नान दान निषेधे ऽपि विशेषः ॥ रात्रौ स्नानं न कुर्वीत दानं चैव विशेषतः ॥ नैमित्तिकं तु कुर्वीत स्नानं दानं च रात्रिषु ॥ २७ ॥ सुत जनने संक्रांता नृप रागे सूर्य्य चंद्र यो र्नित्यम् ॥ रात्रा वपि कर्त्तव्यं स्नानं दानं विशेषतो न्हृणाम् ॥ २८ ॥ अथ संक्रांति मुहूर्त्तास्तत्फलं च ॥ पुनर्वसू विशाखा च रोहिणी चोत्तरा त्रुती ज्येष्ठा जघन्य भं ॥ सुभिक्षं तत्र संक्रांतौ बाण वेद मुहूर्त्तकाः ॥ २९ ॥ भरण्यार्द्रा शता श्लेषा स्वात्यानि संक्रांता वर्द्ध साम्यता ॥ संक्रांतौ तत्र दुर्भिक्षं मुहूर्त्ता बाण भूमिताः ॥ ३० ॥ शेष भानि समा ॥ मुहूर्त्ता स्त्रिंशति प्रोक्ता फलं चंद्रो द्वये ऽपि तत् ॥ ३१ ॥

| अथ कर्के मेघ विंशोपकाः | | | | | | |
|---|---|---|---|---|---|---|
| सू | चं | मं | बु | बृ | शु | श |
| २० | २० | ५ | १२ | १८ | १८ | ५ |

अथ कर्के मेघ विंशोपकाः ॥ अर्कादि वारे संक्रांतौ कर्के स्याद्विंशोपकाः ॥ दिशो न खा गजाः सूर्य्याः रत्ये ऽक्षं रस सायकाः ॥ ३२ ॥

नेष्ट स्सुप्तो रवि र्नागे ते तिले च चतुः पदे ॥ किंस्तुघ्ने कौलवे तिष्ठन् शकुनौ संक्रमित स्थुभः ॥ ३३ ॥ गरादि पंचके मध्य श्चोप विष्टा ऽर्घ वधरो ॥ अथ संक्रांते वाहनानि ॥ सिंहो व्याघ्रो वराहश्च खरेभ महिषो हयः ॥ श्वाजोगोः कुक्कुटो वाहाः संक्रांतेः क्रमशो ववात् ॥ ३४ ॥ अथ वस्त्राणि ॥ श्वेतं पीतं हरित्पांडु रक्तं श्यामं च मेचकम् ॥ चित्रं कंवल दिङ्मे घतन्निभं क्रमतो ऽवरम् ॥ ३५ ॥ अथ शस्त्राणि ॥ भुशुंडीच गदा खड्गो दंडः कोदंड तोमरे ॥ कुंतः पाशो ऽकुशो ऽस्त्रं च वाण श्चैवायुधं क्रमात् ॥ ३६ ॥ अथ भक्ष्याणि ॥ अन्नं च पायसं भैक्षं पक्वान्नंच पयो दधि ॥ चित्रान्नं गुड मध्वाज्यं शर्करा भक्षणं क्रमात् ॥ ३७ ॥ अथ विलेपनानि ॥ कस्तूरी कुंकुमं चैव चंदनं श्च रोचना ॥ यावको तु मदो वापि हरिद्रां जन को ऽगरुः ॥ कर्पूर श्चेति विज्ञेयं संक्रांते श्च विलेपनम् ॥ ३८ ॥ अथ जातयः ॥ देवो भूतो रगः पक्षी पशु रेणो द्विजः क्रमात् ॥ क्षत्रियो वैश्य शूद्रो च संकरो जातयस्त्विमाः ॥ ३९ ॥ अथ पुष्पाणि ॥ पुन्नाग जाति वकुलं केतकी विल्व मर्कजम् ॥ दूर्वाजम-

ल्लिका पुष्पं पाट लाच जपा क्रमात् ॥ ४० ॥ अथाभरणानि ॥ नूपुरं किंकिणी मुक्ता विद्रुमं कंकणं मणिम् ॥ गुंजा वराटिकानीलं वज्रं भूषा गरुत्मकम् ॥ ४१ ॥ अथमाला ॥ प्रवाल मुक्ता रजतं मणिस्तथा गोमेद नीलं च सुवर्णशोसम् ॥ कांश्यं तथा ताम्रक लोहकंच विभर्त्ति सावे गलके सुशोभितम् ॥ ४२ ॥ अथवयांसि ॥ वाला कुमारिका रंडा मध्या प्रौढा प्रगल्भिका ॥ वृद्धा वंध्याति वंध्या स्यात् सूता योगिनी वयः ॥ ४३ ॥ योगिनी स्थित कायान संक्रांते राग मो मतः ॥ चंद्रस्य दिशि दृष्टिं स्यात् गमनं वार दिक् स्मृतम् ॥ ४४ ॥ अथदृष्टि ॥ चंद्रे गुरौ दृष्टि विदिक् कृशानौ सूर्ये शिते नैर्ऋति कोणगा दृक् ॥ धात्री सुते स्वय वने निरुक्ता वुधे शनौ रुद्र दिशी सणं भवेत् ॥ ४५ ॥ अथगमनम् ॥ मंदे चंद्रे गमस्सौम्ये वुधे भोमे च वारुणे ॥ रवौ शुक्रे गमो यास्ये गुरौ प्राग्गमनं स्मृतम् ॥ ४६ ॥ मुखसंक्रांतेः ॥ रवौ संक्रमणे पूर्वे मुखं जीवे तु चोत्तरे ॥ प्रत्यङ् मुखं शनौ सोमे शेषे दक्षिणतो मुखम् ॥ ४७ ॥ ववे पूर्व मुखं प्रोक्तं वाल वे यम दिङ्मुखम् । कौलवे पश्चिम मु-

नाड्यो राम गुणा रवे ३३ स्य विधोः षट् दोः पले र्युक्तं द्वयम् २२६ भौमस्याब्धि पले र्युता नव ५४ विदो युक्ता पलैस्त्वाग्निभिः षट् नाड्यो ६३०ऽष्ट गजा ८८ गुरोरथ भृगोर्नन्दाः पलैरष्टभिः ५८ पुण्याः स्युः खनृपाः १६० शनैरुभयतोऽस्य स्पृश्योः संक्रमे ॥ ५६ ॥ अथाधिमास क्षयमासौ ॥ असंक्रान्ति रमो तोयो मासश्चेत्सोऽधि मासकः ॥ परमासा द्वयो ज्ञेयः प्राय श्चैत्रादि सप्त सु ॥ ५७ ॥ द्विसंक्रांतौ क्षया ख्य स्यात्कश्चित्कार्त्तिक त्रये ॥ युग्माख्य स्तु तत्राब्दे ह्यधि मास द्वयं भवेत् ॥ ५८ ॥ मलमास द्विते च योग हीनः सर्व कर्म्म सु ॥ अथ तारादि बलाद्यन्येषां बलम् ॥ तारया बलतश्चंद्रः बलं सूर्य्यस्य चंद्रतः ॥ सूर्य्यतस्सर्व खेटानां बलं ज्ञेयं शुभाशुभम् ॥ ५९ ॥ द्विवेदि कुल संभूत सरयू कृत संग्रहे ॥ शिरोमणौ समाप्ते वा द्वादशीयं प्रभा शुभा ॥ ६० ॥ इति श्री संग्रह शिरोमणौ संक्रांति कथनं नाम द्वादशी प्रभा ॥ १२ ॥ अथ गोचर प्रकरणम् ॥

गर्गोः प्रत्येकं स्थान फलानि आदौ रवेः ॥ मसौ हानिर्द्वर्यो गो दैन्यं सौख्यगु

त्तं विपद्दुजः ॥ पापं वैरं सुखं हानी राहु केत्वोः फलं त्विदम् ॥ २० ॥ अथ शुभ फलदा ग्रहाः


॥ शुभा एका दशे सर्वे त्रिषष्ठ दश गो रविः ॥ षट् त्रिं शस्थो धरा पुत्रो राहु केतु शनै श्चराः ॥ २१ ॥ दश सप्त त्रिषष्ठाद्य संस्थिताश्चंद्रमाः शुभः ॥ शुक्ल पक्षे तु नवमो द्वितीयः पंचमोऽपि च ॥ २२ ॥ द्विगष्टाष्टि च चतुस्सं स्थो गोचरे शुभदो बुधः ॥ वृहस्पति- श्शुभः प्रोक्तो द्वि पंच नव सप्त गः ॥ २३ ॥ एक द्वि त्रि चतुः पंच नवाष्ट व्यय गो भृगुः ॥ अथ ग्रहाणां क्रम वेधः तत्रादौ रविः ॥ षष्ठं द्वादश गो विध्ये द्दशमं तूर्य्य गो ग्रहं ॥ तृतीय नवमं सूर्य्य लाभस्थं पंचम स्तथा ॥ २४ ॥ द्वितीय स्सप्त म श्चंद्रः पंचमं पंचम स्तथा ॥ षष्ठं द्वादश गो विध्ये दष्ट मो लाभ संस्थितम् ॥ २५ ॥ अथ भौम शनि केतूनाम् ॥ तृतीयं द्वादशं ष- ष्ठं नवमोऽष्य ष लाभगम् ॥ विध्ये त्पंच मगो भौमं राहु केतु शनै श्चरम् ॥ २६ ॥ अथ बुधस्य ॥ द्वितीयं पंचमं तुर्य्यं तृतीयो नवमो रिगम् ॥ आद्येऽष्टमं बुधं त्व स्थ मष्टमोंति म आयगम् ॥ २७ ॥ अथ गुरोः ॥ द्वितीयं गुरु रंत्यस्थः पंचमं तुर्य्य गोऽष्टमम् ॥ लाभ

न्म राशोस्तु विज्ञेयो वेध्य वेध कौ ॥ २२ ॥ अथाष्ट वर्गानु सारेण ग्रह फलम् ॥ स्वाष्ट वर्गे यथा
खेटो ऽधिकारे खग राशिगः ॥ तदा गोचर दुष्टे ऽपि श्रेष्ठो नाल्प करे खगः ॥ २३ ॥ अ-
थ ग्रहाणां निः फल त्वम् ॥ सत्फलो वीक्षितः पापैः सौम्यै दृष्टो ऽप्य सत्फलम् ॥ ता वुभौ नि:
फलौ ज्ञेयो गोचरे जात के ऽपिच ॥ २४ ॥ सत् क्षेत्र गतः खेटो नीच गोप्य स्तगो ऽपि-
वा ॥ निः फल स्सो ऽपि विज्ञेयः शत्रु दृष्टो ऽपि ता दृशः ॥ २५ ॥ अथ ग्रहाणां राशि भोग
मानम् ॥ मासं शुक्रो बुधः सूर्यः सार्द्ध मासं महीसुतः ॥ गुरु र्व्दं त म स्सार्द्ध शनि स्सार्द्धो
व्दक द्वयम् ॥ २६ ॥ अथ शने र्विचारः ॥ क्रक्षे यत्र भानि स्थितो भवति तद्भ्क्रे सदा योज-
येत् वाहो दक्षिणे के ततोभ चतुरः षट् पाद्यो र्विन्यसेत् ॥ पंचो रस्य थ लुब्धं त्र
आन्यथ करे वामे ऽथ शीर्षे त्रयं शुम्मे लोचन यो र्द्वयं गुद गतं जन्म र्क्ष भोक्त फलम् ॥
२७ ॥ मुखे हानि र्जयो वाहो भ्रम श्चां घ्रो धनं हृदि ॥ सुखं वा मस्तके राज्यं नेत्रे सौख्यं म-
ति र्गुदे ॥ २८ ॥ मुखाच्च रति गुह्येच गुह्या द्याति लोचनम् ॥ लोचना न्मस्तकं याति म-

स्त का द्वास ह स्त कम् ॥ २९ ॥ वाम हस्त: ऽ, हस्ते ह्वया चरण द्वयम् ॥ पङ्क्त्यां दक्षि-
ण हस्तं च ऽानि चक्रे विचार येत् ॥ ३० ॥ एक मासोत्तरं वर्षं दिनानां दशकं तथा ॥
प्रत्येक मृक्ष माऽऽक्रम्य ऽानि र्गच्छति सर्वतः ॥ ३१ ॥ सार्द्ध वर्ष द्वयं राशि मेकं सकल
संमतम् ॥ त्रिंश द्वर्षा एय भि व्याप्य राशि चक्रे भवे च्छनिः ॥ ३२ ॥ एवं सौरे गतिं ज्ञा-
त्वा फलं ब्रूया द्विच क्षणः ॥ अभीष्ट फल लाभाय विना शायाशुभ स्यच ॥ ३३ ॥
यने रिदं फलं मोक्तं स्वर शास्त्रा दि संमतम् ॥ रिष्फ १२ रुप १ धन २ भेषु भा स्करिः सं-
स्थितो भवति यस्य जन्म भात् ॥ लोचनो दर पदेषु संस्थितिः कथ्य ते रवि ज लोक जे
जैनैः ॥ ३४ ॥ स्थान मेषु पुन रुच्यते वुधैः सार्द्ध भूधर समा सुभा स्करि : ॥ तत्र चक्र
मन वद्य मुच्यते भानुजा कृति पदं मुनीरितम् ॥ ३५ ॥ आनने दिन शतं प्रकीर्तितस्
१०० हानि रत्र वहुधा प्रजायते: दक्षिणे तु भुज के चतु रशतं वास राशि विजयो रणा-
गने ॥ ३६ ॥ षट् शतं चरण युग्म के पुनः भ्रांति रत्र सततं दिवां तरे ॥ जाठरेषु शत

५०० संख्य के भवेल्लाभ स्व धन धान्य यो स्सदा ॥ ३७॥ दक्षिणो नरं भुजे चतुः शा-
तं दुःखदं शिर सित च्छत त्रयम् ॥ राज्य दं भवति नेत्र यो र्द्वयोः द्विः शतंच सुखदं
प्रकीर्त्तितम् ॥ ३८ ॥ गुह्य गतं दनु त च्छत द्वयं दुःखदं मुनि वरैः प्रकीर्त्तितम् ॥ चक्र-
मे तद् व लोक्य कीर्त्तये त्सार्द्ध भूधर शतोद्भवं फलम् ॥ ३९ ॥ अथ चरणादि विचारः ॥ ज-
न्मां १ ग ६ रुद्रे ११ षु सुवर्ण पादं द्वि २ पंच नंदे रज तस्य पादम् ॥ त्रि सप्त दिक् ताम्र पदं
वदंति वेदा ष्ट सार्के ष्वि ह लोह पादम् ॥ ४० ॥ लोहे वित्त विना शस्यात् सर्व सौख्यं च कां
चने ॥ ताम्रे च सम ता ज्ञेया सौभाग्यं राज ते भवेत् ॥ ४१ ॥ अथ शनिवाहनम् ॥ यामले-
मन्द क्षा च्छ शि १ वेद ४ तर्क ६ विशिखा ५ ाब्ध ४ न्ध ३ ष्ट ८ पक्ष २ क्रमा च्छा गो १
ष्वो २ भवनो गजो हि महिषो ऽश्वो वृषो वायसः ॥ हानिं वैर भयं भ्रमो धन त्र्यो मा
नाल्य को भूपतेः सौख्यं रोग चयो नरस्य वसतो मंदस्य वाहा श्रमी ॥ ४२॥ सपा-
द द्वि दिनं चंद्रः मायः खेट भ भोग कः ॥ अथ ग्रहाणां फल समयः ॥ राशे रादौ कुजः सू-

र्य्यो मध्ये शुक्र चन्द्र स्मृती ॥ अंत्ये चंद्रः शनि र्गेहे फलदः सर्वदा बुधः ॥ ४४ ॥ सूर्यः पंच दिना स्त्वं शीत रश्मि र्वदी नयात् ॥ भौमोप लाब्द का दर्वाक् शुक्र ज्ञौ सप्त वासरात् ॥ ४५ ॥ गुरुर्म्मास द्वय श्चैव षण्मासा सानु शनैश्चरः ॥ राहुर्म्मा सत्रया दस्य राशे स्तु फलदः स्मृतः ॥ ४६ ॥ राशिन क्षत्र संधि स्याः फलदा भवमे ष्ययोः ॥ राशिनक्षत्रयो खेटाः पूर्वयो स्तो द्विलो मतः ॥ ४७ ॥ अथ जन्म राशितो ग्रहाणांफलम् ॥ ग्रहाणां जन्म भा च्छे द्रं दशे का दश चंद्र त्रिगः ॥ मध्यमं पंच सप्ता ष्टिनवम स्थानं संस्थितम् ॥ ४८ ॥ नेष्टमं त्याष्ट तुर्य स्थं जन्मर्क्षे तु मृति र्भवेत् ॥ जपात् सुवर्ण गो दानात् शांते श्चादर्शना च्छुभम् ॥ ४९ ॥ अथ विषमस्थे ग्रहे विवर्ज्यानि ॥ आखेटः काल चर्य्यां च दूर देश गते नृपैः ॥ द्विज गजा रोहे गमनं पर मन्दिरे ॥ ५० ॥ न कार्य्यं साहसं कर्म्म विषमे सु ग्रहे शुच ॥ दुष्ट वा ग्रहाणान्दानानि ॥ येखेटाः खेचरे दुष्टाः दशायां स्याष्ट वर्गके ॥ जप दानादि नाते स्युः प्रशस्ता स्नान तोऽपिवा ॥ ५१ ॥ माणिक्यं धेनु गोधूम हेमं ताम्रं गुडो वृजम् ॥ चंदनं चांवरं

रक्तं देयं भास्वान्मुदे नृपैः ॥ ५२ ॥ मुक्ता रौप्यं सितं वस्त्रं शंखं वंशस्थतंदुलान् ॥ कर्पू-
रं गोयुगं दद्याद्दन कुंभं विधोर्मुदे ॥ ५३ ॥ प्रवालं हेम गोधूमान् रक्तं वासोऽरुणां वृषम्
॥ करवीरं गुडं ताम्रं मसूरा भौम तुष्टये ॥ ५४ ॥ कांस्यं नीलां वरं हेम गज दंतं गरुत्मकं
॥ मुद्गाज्यं सर्वपुष्पं च दद्यात्प्रीत्यै बुधस्यच ॥ ५५ ॥ हरिद्राश्वः शितो हेम पीतं धान्यं
तथां वरम् ॥ लवणं पुष्प राग श्च देयो वाचस्पते र्मुदे ॥ ५६ ॥ धेनुश्चित्रां वरं चाज्यश्वे
ताश्वो हेम तंदुलाः ॥ सुगंधं रजतं वस्त्रं देयं सुप्रीतये भृगोः ॥ ५७ ॥ तिलास्तैलं तथा
मास्वानिन्द्रनीला सितां वरम् ॥ कृष्णां गां महिषीं लोहं स्वर्सन्दद्याच्छ ने र्मुदे ॥ ५८ ॥
गोमेद तुरगं खड्गं नील वस्त्रं च कांचनम् ॥ स्वर्णं तेलं तिलान्दद्यात्सैंहि केय मुदे नृपः
॥ ५९ ॥ कस्तूरी कमलं वस्त्रं च्छागो वैडूर्य कांचने ॥ तिलास्तैलं मही पालैः प्रदेयं के-
तु तुष्टये ॥ ६० ॥ अथ ग्रह दुःख हरमौषधी स्नानम् ॥ एलाय ष्टि मधू सीरला च पुष्पाज्ज कुंकु-
मैः ॥ स्नानं मन शिलादेव दारु भारवि तुष्टये ॥ ६१ ॥ पंच गव्ये गवानां तु शंखस्फटि

क शुक्तिभिः ॥ कुमुदैर्म्मिश्रितैः स्नानं चंद्र दोषापनुत्तये ॥ ६२ ॥ हिंग्वलू विल्व फलिनी मांसी वकुल चंदनैः ॥ रक्त पुष्पै र्वला मिश्रैः स्नानं भौमार्त्ति नुत्तये ॥ ६३ ॥ गोमयाक्षत मुक्ताभी रोचना मधु हेम भिः ॥ फल मूलैर्युतं स्नानं वोधनार्त्ति विनाशनम् ॥ ६४ ॥ मालती कुसुम श्वेत सर्प पक्षौ त्र संयुतैः ॥ पल्लवै र्मदयं त्याश्च स्नाया त्गुरु मुदे नृपः ॥ ६५ ॥ एला मन शिला मूल फलं कुंकुम वारिभिः ॥ स्नानं शुक्र कृतां वाधां नाशयेत्येव भू भुजाम् ॥ ६६ ॥ वला लाजा ञ्जनैः कृष्ण तिलै र्लोध घनै रपि ॥ शत पुष्यान्वितैस्नाया न्मंद वाधापनुत्तये ॥ ६७ ॥ अथ ग्रहाणां दोष शांतये सामान्यौषधी स्नानम् ॥ लाजा कुष्ट वला भिश्व प्रियंगु घन सर्षपैः ॥ देव दारु हरि द्राभिः पुंखा लोध्रे ण संयुतैः ॥ ६८ ॥ वारिभिः स्नान मुक्तं हि प्रोक्तं दान पुरस्सरम् ॥ एतत्सामान्यत स्सर्व ग्रह पीडा प्रशान्तये ॥ ६९ ॥ अथ ग्रह प्रीतये रत्नादि धारणम् ॥ शुक्रे न्दो रजतं चैव विद्रुमं भानु भौमयोः ॥ बुधस्य हेम शने र्लोहं गुरो र्मुक्ता फलं नरः ॥ ७० ॥ प्रीतये धारयेद्रागे लाजा वर्त्तन्त तो न्ययोः ॥ अथन-

व ग्रह मुद्रिका ॥ माणिक्यं तरणे र्मध्ये मान्यां वज्रं भृगो र्विधोः ॥ आग्नेय्यां मौक्तिकं याम्ये प्र
वालं मंगलस्य च ॥७१॥ गो मेदं राक्षसो राहोः पश्चिमं नीलकं शनेः ॥ वायौ वैडूर्य
कं केतो उदीच्यां पुष्पकं गुरोः ॥७२॥ गारुत्मकं तथे शान्यां सोम पुत्रस्य तुष्टये ॥
मुद्रिकायां नरे धार्य्य मथवा पृथ गेव हि ॥७३॥ अथ ग्रह पीडो पशमनो पायः ॥ पालना द्गु
रु वाक्यानां देव ब्राह्मण वंदनात् ॥ नो कुर्वंति ग्रहाःपीडां दुष्ट स्थान स्थिता अपि ॥
७४ ॥ द्वि वेदि कुल संभूत सरयू कृत संग्रहे ॥ शिरोमणौ समाप्तेयं प्रभेयंच त्रयोदशी
॥ ७५॥ इति श्री संग्रह शिरो मणौ गोचर कथनं नाम त्रयोदशी प्रभा ॥ १३॥ अथ
संस्कार प्रकरणम् ॥ अथ संस्कार प्रकरणे आदौ रजो दर्शनम् ॥ वैशाखे फाल्गुणे माघे मार्गशीर्षे श्र
वणाश्विने ॥ पक्षे शुक्ले शुभा हेच साह्नि लग्ने तथा दिवा ॥ १॥ श्रुति त्रये ऽनुराधायां रेवती
द्वितये मृगे ॥ हस्त त्रये च रोहिण्यां पुष्य भे चोत्तरे सुच ॥ २॥ सित वस्त्रे शुभं स्त्रीणां
प्रथमं ऋतु दर्शनम् ॥ मध्यं ज्येष्ठे पुनर्वस्वो मूले चान्यत्र निंदितः ॥ ३॥ अष्टम्यां द्वा

दर्शे दृष्ले ऋता दर्शे ऽथ संक्रमे ॥ भद्रा निद्रा व्यतीपाते ग्रहणे रुजि वैधृतौ ॥४॥ पर
तास्तु ग्रहं संध्या कुदेशे दृष्ल वाससि ॥ प्राग्जो दर्शनं नेष्टं शांत्या तु शुभदं भवेत् ॥५॥
प्रागुक्ता विलयं यांति रजो दर्शन संभवाः ॥ सर्वे दोषास्तु सत्सपे स्तिलेज्य युत वीक्षिते
॥ ६ ॥ अथ ऋतुमती स्नानम् ॥ पुनर्वसु स्तथा चित्रा ज्येष्ठा पुष्या भिधे ऽथच ॥ स्नाया दृतुमती
नारी शुभे वारे शुभे तिथौ ॥७ ॥ रोहिणी द्वितये स्वातौ हस्ते वै रेवती द्वये ॥ स्नानात् युवती ग-
र्भं विधत्ते शीघ्र मे वहि ॥ ८ ॥ अथ गर्भाधानम् ॥ जन्मर्क्ष भरणी मूलं नक्षत्रं रेवती मघां ॥
पूर्वाहिंच व्यतीपातं वैधृतिं परिघादिकम् ॥ पित्रो श्राद्ध दिनं संध्यां दिवा षष्ठी च पर्वच ॥
आर्त्त वाह चतुष्कं च विष्टी ऋक्षार्क संक्रमान् ॥ १० ॥ तथैव क्रूर वारांश्च गर्भाधाने विव-
र्जयेत् ॥ स्वातौ हस्ते ऽनुराधायां रोहिण्यां श्रवण त्रये ॥ ११॥ त्र्युत्तरे मृग शीर्षे च शुभा
हे शुभ राशिषु ॥ गर्भा धानं प्रशस्तं स्यात् चंद्रे शस्ते शुमांसके ॥ १२ ॥ कारिकायाम् ॥ पुंन
क्ष त्राणि चैतानि तिष्यो हस्त पुनर्वसू ॥ अभिजिच्छोष्ट या चैव अनुराधाश्वि युक् तथा ॥

॥ २३ ॥ केन्द्र कोण स्थिते सौम्ये पापेच त्रिषडायगे ॥ पुं लग्ने पुन्नवांशेन्च तथा पुंग्रह वी-

क्षिते ॥ २४ ॥ चित्रा पुनर्वसू पुष्य माश्विभं मध्य मं स्मृतम् ॥ नियेके शेष धिष्णानि संत्या-
ज्या न्य शुभानिच ॥ २५ ॥ अथ जन्म भं सीमंते निषेद्धं ॥ वशिष्ठः ॥ बालान्न भुक्तो व्रत बंधनेच
राजा भिषेके खलु जन्म धिष्ण्यम् ॥ शुभं त्व निष्टं सततं विवाह सीमंत यात्रा दिषु मंगलेषु ॥
२६ ॥ मास अधुक्त कार्य्येषु मूढत्वं गुरु शुक्रयोः ॥ न दोष कुन्मले मासे गुर्वादि त्यादिकं त-
था ॥ २७ ॥ अथ पुंस वन सीमंतो न्नयने ॥ द्वितीये वा तृतीये वा मासि पुंस वनं स्मृतम् ॥ मासे
षष्ठे ऽष्टमे वापि गर्भ सीमंत कं विदुः ॥ २८ ॥ पुनर्वसू द्वये मूले श्रवणे मृग हस्तयोः ॥
गुरु भौमार्क वारेषु प्रोक्तं पुंस वना दि कम् ॥ २९ ॥ रेवत्यां त्र्युत्तरे ऽप्ये के शुक्रे चंद्रे बुधे
जगुः ॥ मासे शे सबले चंद्रे लग्ने पुंसांस के शुभे ॥ ३० ॥ सौम्ये ऽकेंन्दु त्रिकोण स्थे पा-
पे लाभे त्रिषट्क के ॥ अथ मासे श्वरः ॥ मासे श्वरा भृगु भौमि गुरु सूर्य्येन्दु सूर्य्यजाः ॥ बुधो-
लग्न पति श्चन्द्रः सूर्य्य श्चै ते यथा क्रमम् ॥ ३१ ॥ अथ संस्कारे विशेषः ॥ विवाहे गर्भ संस्का

रे चंद्र शुद्धि स्त्रिया नापि ॥ भूषां वरादि कार्येषु भर्तुरेवेंदवं बलम् ॥ २२ ॥ गर्भाधा-
नादि संस्कारे तथान्न प्राशने शिशोः ॥ न तत्र गुरु शुक्रा स्तमन्न मासादि दूषणम् ॥
२३ ॥ अथ विलु पूजा ॥ सीमंतोर्द्धं शिते पक्षे रोहिण्यां श्रवणे तथा ॥ द्वादशे सप्तमे पक्षे
त्र्यर्चा गर्भ पुष्टये ॥ २४ ॥ अथ सूति का गृह प्रवेशः ॥ श्रुति त्रयोत्तरा हस्त त्रये पुष्यानु
राधयोः ॥ पुनर्भे रोहिणी युग्मे रेवती द्वितये तथा ॥ २५ ॥ शुभाहे प्रशवोचुक्ता सूति
का मंदिरं विशेत् ॥ अथ जात कर्म्म ॥ जात कर्म्म क्रियां कुर्य्या सुत्रायुः श्री विवृद्धये ॥ य-
ह दोष विनाशाय सूत का शुभ वाच्छिदे ॥ २६ ॥ कुमार गृह नाशाय पुंसां सत्व वि-
वृद्धये ॥ एकादशेन्हि विप्राणां क्षत्रियाणां त्रयोदशे ॥ वैश्यानां षोडशे नाम मासा
शूद्र जन्मनः ॥ २७ ॥ चैत्रादि मास नामानि वैकुंठोऽथ जनार्दनः ॥ उपेन्द्रो य-
ज्ञ पुरुषो वासुदेव स्त्रिविक्रमः ॥ २८ ॥ योगीश: पुंडरी काक्षः कृष्णो नंतोऽच्युत -
तथा ॥ चक्र धारीति चैतानि क्रमाद्रा कुर्मनी षिणः ॥ २९ ॥ मार्ग शीर्षे विशाला

क्षी पौषे लक्ष्मीश्च देवता ॥ माघेतु रुक्मिणी प्रोक्ता फाल्गुने धात्रिनामिका ॥ ३० ॥
चैत्रे मासि रमा देवी वैशाखे मोहिनी तथा ॥ पद्माक्षी ज्येष्ठ मासेतु आषाढे कमलेति
च ॥ ३१ ॥ कांति मती श्रावणेच भाद्रेतु अपराजिता ॥ पद्मावती आश्विनेतु राधा देवी
तु कार्तिके ॥ ३२ ॥ मित्रा दित्य मघोत्तराश्रुत भिषक् स्वाती धनिष्ठा च्युत प्राजेशाश्विश्व
शांक पौष्ण दिन कृत्पुष्ये तुरगेतु स्थिरे ॥ छिद्रां पंच दशीं विहाय नवमीं षष्ठे ऽ
ष्टमे भार्गव ज्ञाचार्य्यामृत पाद भाग दिवसे नामानि कुर्य्युश्शिशोः ॥ ३३ ॥ अ-
मा संक्रांति विष्ट्यांतु प्राप्त काले ऽपिना चरेत् ॥ शर्म्मांतं ब्राह्मणस्याद्वर्म्मांतं क्षत्रियस्य
तु वैश्यस्य धन संयुतं शूद्रस्य प्रेष्य संयुतम् ॥ ३४ ॥ मास नाम गुरोर्न्नाम दद्याद्बालस्य
वै पिता ॥ देवालय गजाश्वानां दस्याणां वापि कूपयोः ॥ ३५ ॥ सर्वापणानां पण्यानां चि
त्रार्थं योषितां नृणां ॥ ३६ ॥ काव्यानाञ्च कवीनाञ्च पण्यादीनां च सर्वसः ॥ राज
प्रसाद वस्तूनां नाम कर्म्म विशिष्यते ॥ ३७ ॥ नदक्षरादि कं नाम यस्मिन्धिष्ण्ये द्दर

सरस्त्र ॥ ये ओंकाड़ञणा वर्णनां मासे संतिते नहि ॥ नेत्रु वन्हि तत्र ज्ञेया गजडा स्तै यथा क्रमम् ॥ ३८ ॥ अथ जननसमयेदुष्टकालः ॥ तत्राद्यव भुक्त मूलम् ॥ जेष्ठांत्ये घटिका युग्मं मूलादौ घटिका द्वयम् ॥ अभुक्त मूलमेत त्स्यादित्येवं नारदो ब्रवीत् ॥ ४२ ॥ वशिष्ठो लौ त- योरंत्याघयो रेक हिनाडिकम् ॥ अंगिरा घटिका मेकां अन्ये पंचाष्ट तत्रसु ॥ ४३ ॥ जातं शिशुं त्यजेत्ता नो न पश्ये दष्ट हायनम् ॥ अथ मूलजनने पाद फलम् ॥ आद्ये पिता नाशमुपैति मूल पादे द्वितीये जननी तृतीये ॥ धनं चतुर्थेऽस्य शुभोऽथ शांत्या सर्वत्र सत्स्या दहि भे विलोमम् ॥ ४४ ॥ दिवा जातस्तु नितरं रात्रौ तु जननीं तथा ॥ आत्मानं संध्ययो हंति नास्ति गंडो निराश्रयः ॥ ४५ ॥ मूलादि पादो यदि रात्रि भागे तदात्मनो नास्ति पितु र्विनाशम् ॥ द्वितीय पादो दिन गो यदि स्यान्न मातु रन्यो ऽपि नदास्ति दोषः ॥ ४६ ॥ माघा षाढा- श्विने भाद्र पद मूलं वसेद्दिवि ॥ कार्तिके श्रावणे चैत्रे पौषे मासे तु भूतले ॥ ४७ ॥ वैशा खे फाल्गुणे ज्येष्ठे मार्गे पाताल वर्जितम् ॥ भूतले वर्त्त माने तत् ज्ञेयो दोषोऽन्यथा नहि

४८॥ अथ मूलवृक्षम्॥ मूलं स्तंभं त्वचा शाखा पत्रं पुष्पं फलं शिखा ॥ मुनयोऽष्टौ दिशो रुद्रा सूर्य्याः पंचाब्धयोऽग्नयः ॥ ४९ ॥ मूलेतु मूल नाशःस्यात् स्तंभे वंश विनाशनम् ॥ त्वचि मातु र्भवेत्क्लेशः शाखायां मातुलस्य च ॥ ५० ॥ पत्रे राज्यं विजानीया त्पुष्पे मंत्रि पदं स्मृतम् ॥ फलेच विपुला लक्ष्मीः शिखाया मल्पजीवितम् ॥ ५१॥ मूलस्य घटिका न्यासो मूर्द्धि पंच नृपो भवेत् ॥ मुखे सप्त मृतिः पित्रोः स्कंधे वेदा महाबलः ॥ ५२ ॥ वाह्वो रष्टौ बली पाण्यो स्तिस्रो हत्यान्वितो भवेत् ॥ हृदि खेटा भूप मंत्री नाभौ द्वौ ब्रह्म वित् भवेत् ॥ ५३॥ गुह्ये दशगति कामी स्याज्जानुनोः षरम हा मातिः ॥ पादयोः षट् स्मृतिस्तस्य प्रोक्ता वा न्कमला शनः ॥ ५४॥ अथ कन्या जननेंग विभागः ॥ चतस्रो नाडिकाः शीर्षे कुर्वीन्ति पश्नाशनम् ॥ मुखे षड्धन हानिःस्यात्कंठे पंच धनागमः ॥ ५५ ॥ कौटिल्यं हृदये पंच वाह्वो र्वित्ता गमं ततः ॥ वेदाः पाण्यो र्दयां धर्म्म वेदा गुह्येति कामिनी ॥ ५६॥ ज्येष्ठमातुल नाशश्च जंघयोर्युग नाडिका ॥ ज्येष्ठ भ्रातृ विनाशश्च चतस्रो जानु युग्मके

५७ ॥ पादयो दश नाड्यश्च तत्र वैधव्य मादिशेत् ॥ इति मूल प्रसूतायाः मुनिभिः फल मीरितम् ॥ ५८ ॥ अथाश्लेषा फलम् पुत्रकन्ययोः ॥ मूर्द्धि पंच सु राज्यासि मुखे सप्त पितृ क्षयः ॥ नेत्रे द्वे जननी नाशो ग्रीवायां स्त्रीषु लंपटः ॥ ५९ ॥ स्कंधे वेदा गुरौ भक्तिः हस्ते ऽष्टौ चवली भवेत् ॥ हृदये का दश भिक्षा त्म घाती संजायते नरः ॥ ६० ॥ त्री वा नाभौ भ्रमः षड्गि गुरे न वतपो धनः ॥ पादे पंच धनं हंति सार्प्यां देत्फलं क्रमात् ॥ ६१ ॥ अथाश्लेषा वृक्षः ॥ फलं पुष्पं दलं शाखां त्वग्लता स्कंध एवच ॥ सार्प्य वल्यां वृक्षांक स्व रवि श्वार्क सागराः ॥ ६२ ॥ नाडिका स्त्वद्भवे बाले फल ज्ञेयं यथा क्रमम् ॥ श्रीः श्री राज भयं हानि र्म्मा त पित्रात्म संक्षयः ॥ ६३ ॥ अथ ज्येष्ठापाद फलम् ॥ आद्ये पादे ऽग्रजं हंति ज्येष्ठाया मनुजं द्विके ॥ तृतीये जननीं हंति स्वात्मानं च तुरीयके ॥ ६४ ॥ पुनः ज्येष्ठा द्ये जननी माता द्वितीये जननी पिता ॥ तृतीये जननी भ्राता स्वयं माता चतुर्थके ॥ ६५ ॥ आत्मानं पंचमे हंति षष्ठे गोत्र क्षयो भवेत् ॥ सप्तमे चोभय कुलं ज्येष्ठ भ्रातर मष्ट

मे ॥ ६६ ॥ नवमे स्वसुरं हंति सर्वं हंति दशमांशकः ॥ निर्ऋत्यभोद्भूत सुत स्सुता वाद्वि
शादवस्य स्वसुरं नि हंति ॥ तदंत्यपादे जनितो निहंति तस्योत्क्रमे णाहि भवेत्कलत्रम्
॥ ६७ ॥ सुरेशजाता राजानिता यथा ग्रजं हि दैवताराज निता च देवरम् ॥ पुरंदरर्क्षे जनि-
तः सुत स्तथा स्वस्रा ग्रजं हंति न पुत्रिका यदि ॥ ६८ ॥ मूल जा स्वसुरं हंति व्याल
जा च तदंगजाम् ॥ माहेन्द्र जा ग्रजं हंति देवरं तु द्विदैव जा ॥ ६९ ॥ धवाग्रजं हंति
सुरेन्द्रजाता तथैव पत्न्या भगिनी पुमांश्च ॥ द्विदैव जा देवर माशु हन्याद्भार्यानुजामाशु
निहंति सूनुः ॥ ७० ॥ पत्न्यग्रजाम ग्रजं वा हंति ज्येष्ठा स्रुतः पुमान् ॥ तथा भार्या स्वसा
रं वा श्यालकं वा द्विदैवजः ॥ ७१ ॥ कन्यका देवरं हंति विशाखांत्य समुद्भवा ॥ आ
द्यपाद त्रये नैव भाव्य भेतु पुमान्भवेत् ॥ ७२ ॥ न हन्या देवरं कन्या तुला मिश्र द्विदै
व जा ॥ तदृक्षांतोद्भवा वर्ज्या दुष्टा वृश्चिक पुच्छ वत् ॥ ७३ ॥ चित्रार्द्धे पुष्य मध्ये
द्विपादे पूर्वाषाढा धिष्ण्य पादे तृतीये ॥ जातः पुत्र स्त्वोत्तरार्द्धे विधत्ते माता पित्रोर्भ्रातरं

५७ ॥ पादयो र्दृष्टा नाड्यश्च तत्र वैधव्य मादिशेत् ॥ इति मूल प्रसूताया:मुनिभिः फल
मीरितम् ॥ ५८ ॥ अथाश्लेषा फलम् पुत्रकन्ययोः ॥ मूर्द्धि पंच सु राज्याप्ति मुखे सप्त पितृ क्षयः
॥ नेत्रे द्वे जननी नाशो ग्रीवायां स्त्रीषु लंपटः ॥ ५९ ॥ स्कंधे वेदा गुरौ भक्तिः हस्ते ऽष्टौ चव
ली भवेत् ॥ हृदये का दश भिश्वात्म घाती संजायते नरः ॥ ६० ॥ स्त्री वाञ्नाभौ भ्रमः प-
ड्गि गुदे न वतयो धनः ॥ पादे पंच धनं हंति सार्प्या देत्फलं क्रमात् ॥ ६१ ॥ अथाश्लेषा
वृक्षः ॥ फलं पुष्पं दलं शाखा त्वग्लता स्कंध एवच ॥ सार्प्य वल्यां दशा क्षांक स्व रवि भ्वा-
र्क सागराः॥ ६२ ॥ नाडिका लब्ध वे वाले फल ज्ञेयं यथा क्रमम् ॥ श्रीः श्री राज भयं हा-
नि र्म्मांत्र पित्रात्म संक्षयः ॥ ६३ ॥ अथ ज्येष्ठापाद फलम् ॥ आद्ये पादे ऽग्रजं हंति ज्येष्ठा
या मनुजं द्विके ॥ तृतीये जननीं हंति स्वात्मानं च तुरीय के ॥ ६४ ॥ पुनः ज्येष्ठा द्वे
जननी माता द्वितीये जननी पिता ॥ तृतीये जननी भ्राता स्वयं माता च तुर्य के ॥ ६५
॥ आत्मानं पंचमे हंति षष्ठे गोत्र क्षयो भवेत् ॥ सप्तमे चोभय कुलं ज्येष्ठ भ्रातर मष्ट

मे ॥ ६६ ॥ नवमे स्वसुरं हंति सर्वं हंति दशांशकः ॥ निर्ऋत्यभोद्भूत सुत स्सुता वाद्धि
माद्यवश्य स्वसुरं निहंति ॥ तदंत्यपादे जनितो निहंति तस्योत्क्रमेणाद्दि भवेत्कलत्रम्
॥ ६७ ॥ सुरेभता राजनिता धवाग्रजं द्विदैवताराजनिता च देवरम् ॥ पुरंदरर्क्षे जनि-
तः सुत स्तथा स्वस्या ग्रजं हंति न पुत्रिका यदि ॥ ६८ ॥ मूलजा स्वसुरं हंति व्याल
जा च तदंगनाम् ॥ माहेन्द्रजा ग्रजं हंति देवरंतु द्विदैवजा ॥ ६९ ॥ धवाग्रजं हंति
सुरेन्द्रजाता तथैव पत्न्या भगिनी पुमांश्च ॥ द्विदैवजा देवरमाशु हंन्याद्भार्यानुजामाशु
निहंति सूनुः ॥ ७० ॥ पत्न्यग्रजाम ग्रजं वा हंति ज्येष्ठर्क्षतः पुमान् ॥ तथा भार्यास्वसा
रं वा व्यालकं वा द्विदैवजः ॥ ७१ ॥ कन्यका देवरं हंति विशाखांत्यसमुद्भवा ॥ आ
द्य पादत्रये नैव माघ भेतु पुमान्भवेत् ॥ ७२ ॥ न हन्या देवरं कंन्या तुला मिश्र द्विदै
वजा ॥ तदृक्षांतोद्भवा वर्ज्या दुष्टा वृश्चिक पुच्छवत् ॥ ७३ ॥ चित्राद्यर्द्धे पुष्य मध्ये
द्विपादे पूर्वाषाढा धिस्न पादे तृतीये ॥ जातः पुत्र श्चोत्तरार्द्धे विधत्ते माता पित्रोर्भ्रातरं

वालनाशनम् ॥ ७४॥ द्विमासं चोत्तरा दोषः पुष्ये चैव त्रिमासिकः ॥ पूर्वापाढाष्टमे
मासि चित्रा पाएमासिकं फलम् ॥ ७५॥ नवमासं तथा श्लेषा मूले चाष्टक वर्षकं
॥ ज्येष्ठा पंच दशे मासि वर्जित स्पुत्र दर्शनम् ॥७६ ॥ व्यतीपातें ग हानि स्स्यात्परि
घे मृत्यु मा दिशेत् ॥ वैधृतौ पितृ हानि स्स्यान्न छेन्दा वंधतां व्रजेत् ॥ ७७ ॥ मूले
समूल नाशस्स्या त्कुल नाशो धृतौ भवेत् ॥ विकृतांगे च हीने च संध्ययो रुभयो
रपि ॥ ७८ ॥ पर्वण्यपि प्रसूतो च सर्वा रिष्ट भय प्रदः ॥ तद् त्स दन्त जातश्च पाद
जा तस्तथै वच ॥ ७९॥ तस्माच्छांतिं प्रकुर्वीत ग्रहाणां क्रूर चेतसाम् ॥ पूर्णानन्दा
ख्ययो स्तिथ्यो स्संधिर्नाडी द्वयं तथा ॥ ८० ॥ गंडांतं मृत्युदं जन्म यात्रो द्वाद्व्रता
दिषु ॥ कुलीर सिंहयोः कीट चापयोर्मीन मेषयोः ॥ ८१ ॥ गंडांत मंतरालं स्याद्घ
टिकार्द्धं मृति प्रदम् ॥ तिथि गंडम् ॥ कृष्णां चतुर्दशी षोढा कुर्य्या दाद्यो शुभं स्मृतम् ॥ द्वि
तीये पितरं हंति तृतीये हान्ती मातरं ॥ ८२ ॥ चतुर्थे मातुलं हंति पंचमे वंश नाशनं ॥

षष्ठेच धन नाशःस्या दात्मनो वंश नाशनम् ॥ ८३॥ अथैतेषांदानं ॥ तिथि गंडेच्य नक्षत्रे नक्ष
त्रे धेनु रुच्यते ॥ कांचनं लग्न गंडेतु गंड दोषोविन श्यति ॥ ८४॥ उत्तरे तिल पात्रं स्या सु
ष्मे गोदान मुच्यते ॥ अजा प्रदानं त्वाष्ट्रे स्यान्पूर्वा षाढे तु कांचनम् ॥ ८५॥ उत्तरा तिष्य
चित्रासु पूर्वाषाढोद्भवस्य च ॥ कुर्य्याच्छांतिं प्रयत्नेन नक्षत्रा कारजां पुनः ॥ ८६॥ य-
द्येकस्मिन् धिष्ण्ये जायंते दुहितरोऽथवा पुत्राः॥ पितुरंत कराह्येते यद्यपरेश्रीतिरतुला
स्यात् ॥ ८७॥ एकस्मिन्नेव नक्षत्रे भ्रात्रोर्वापितृ पुत्रयोः ॥ प्रसूतिश्च तयोर्मृत्यु र्भवे-
देकस्य निश्चितम् ॥ ८८॥ ग्रहणे चंद्र सूर्य्यस्य प्रसूतिर्य्यदि जायते ॥ व्याधिः पीडा तथा
स्त्रीणां आदौ तु ऋतु दर्शनात् ॥ ८९॥ अकाल प्रसवा नार्य्यः कालातीत प्रजास्तथा ॥
विकृत प्रसवा श्चैव युग्म प्रसवकास्तथा ॥ ९०॥ अमानुषा अमुंडाश्च अजातव्यंजना
स्तथा ॥ हीनांगा अधिकांगाश्च जायंते यदि वास्त्रिय ः॥ ९१ ॥ पशवःपक्षिणश्चैव तथै-
वच सरीसृपाः ॥ विनाशस्तस्य देशस्य कुलस्य च विनिर्दिशेत् ॥ ९२॥ निर्वासयेत्तां

नगरा त्तत स्थां तिं समा चरेत् ॥ अथ त्रिक दोषः ॥ सुतत्रये सुता चे त्स्या त्तत्रये वासुतो
यदि ॥ माता पित्रोः कुलस्यापि तदानिष्टं महद्भवेत् ॥ ८३ ॥ एतेदुष्टकालाः ॥ गंडांतःप
रिघः शूलं व्यती पातो ऽथ वैधृतिः ॥ मूला श्लेषाद्य र्य्य ना ज्येष्ठा जन्म चंद्रो ऽर्के संक्रम
म् ॥ ८४ ॥ गंड योगो मृति भंद्रा व्याघा तो दग्ध वासराः ॥ कुला चतुर्दशी पात स्त
त्स्सो दर जन्म भम् ॥ ८५ ॥ तथाव मदिनं नेष्टं जन्म काले शि शोःस्त्रियः ॥ तद्दोष
परि हारा य शांतिं कुर्य्याद्य था विधि ॥ ८६ ॥ अथ जन्म समये द्वादश भाव फलम् अथ तनुस्था
नस्य ॥ लग्न स्थितो दिन करः कुरुतेंग पीडां पृथ्वी सुतोवितनुते रुधिर प्रकोपं ॥ छायासु
तः प्रकुरुते बहु दुःख भाजं जीवेन्दु भार्गव बुधाः सुख कांति दाः स्युः ॥ ८७ ॥ अथ
धन स्थानस्य ॥ दुःखा वहा धन विना शकराः प्रदिष्टा वित्ते स्थि तारवि शनैश्चर भूमि पुत्राः
॥ चंद्रो बुधः सुर गुरु भृगु नंद नो वाना ना विधं धन च यं कुरुते धनस्थः ॥ ८८ ॥ अथसह
जस्थानस्य ॥ भानुः करोति विरुजं रजनी करोपि कीर्त्या युतं क्षिति सुतः प्रचुर प्रकोपम्

॥ त्ररद्धिं वुध स्सुधि षणो सुविनीत वेषं स्त्रीणां प्रियं गुरु कवी रविज स्तृतीये ॥ ९९ ॥


अथ सुहृत्स्थानस्य ॥ आदित्य भौम शनयः सुख वर्जितां गं कुर्वन्ति जन्मनि नरं सुचिरं चतु-र्थे ॥ सोमो वुधः सुर गुरु र्भृगु नन्दनो वा सौख्या न्वितं च नृप कर्म्म रतं प्रधानम् ॥
॥ १०० ॥ अथ सुत स्थानस्य ॥ पुत्रे रविः प्रचुर कोप युतं वुधश्च स्वल्या त्मजं प्रणिधरा तनु जाव पुत्रं ॥ शुक्रेन्दु देव गुरवः सुत धाम संस्थाः कुर्वन्ति पुत्र वहुलं सुखिनं सुरूपम्
॥ १ ॥ अथ रिपुस्थानस्य ॥ मार्तंड भूमि तनु जो स्त शत्रु पक्षं पंगु नरं रिपु गृहे ष्यति पूज नीयं ॥ काव्येन्दु जो मति विहीन मनल्प रोगं जीवः करोति विकलं मरणं प्रशांक ः ॥
॥ २ ॥ अथजाया स्थानस्य ॥ तिग्मां शु भौम रविजाः किल सप्त मस्था जायां कु कर्म्मनि रतां तनु संत तिं च ॥ जीवेन्दु भार्गव वुधा वक्र पुत्र युक्तां रूपा न्वितां जन मनो हर रूप शीलां ॥ ३ ॥ अथ मृत्यु स्थानस्य ॥ सर्वे ग्रहा दिन कर प्रमुखा नितांतं मृत्यु स्थि ता नि तनुते किल दुष्ट वुद्धिम् ॥ शस्त्रा भिघात परिपीडित गा त्रय ष्टिं सौख्ये र्विहीन म-

तिरोगगणे रूपे तम् ॥ ४ ॥ अथ धर्म्मस्थानस्य ॥ धर्म्मस्थिता रवि शनैश्चर भूमिपुत्राः कु-
र्वन्ति धर्म्म रहितं विगतिं कुशील ॥ चन्द्रो बुधो भृगु सुत : सुरराज मंत्री धर्म्म क्रिया
सुनिरतं कुरुते मनुष्यम् ॥ ५ ॥ अथ कर्म्मस्थानस्य ॥ आदित्य भौम शनयः किल क-
र्म्मसंस्थाः कुर्युर्नरं वहु कुकर्म्म रतं कुपुत्रम् ॥ चंद्रः सुकीर्त्ति मुशना वहु वित्त युक्तं रू-
पान्वितं बुध गुरू शुभ कर्म्म भाजम् ॥ ६ ॥ अथ लाभ स्थानस्य ॥ लाभस्थितो दिन क-
रो नृप लाभ युक्तं तारा पति र्वहु धनं क्षिति जः क्षिती शम् ॥ सौम्यो विवेक सुभगं च ध-
नायुषां ज्यः शुक्रः करोति स गुणं रविजः सुकीर्त्तिम् ॥ ७ ॥ अथ व्यय स्थानस्य ॥ सूर्य्यः क-
रोति पुरुषं व्यय गो विशीलं काणं शशी क्षिति सुतो वहु पाप भाजं ॥ चंद्रांगजो गत-
धनं धिषणः कृशांगं शुक्रो वहु व्यय करं रविजः सुतीव्रम् ॥ ८ ॥ राहु केतु फलं सर्वं म-
न्द वत्कथित म्बुधैः ॥ अथ मृत्युयोगः ॥ चंद्राष्ट मं च धरणी सुत सप्त मं च राहु र्नवं च शनि
जन्म गुरुस्तृतीये ॥ अर्कस्तु पंच भृगु षष्ठ बुधश्च तुर्थे जातो न जीवति नरः प्रव दन्ति सं-

तः ॥ ९ ॥ अथ स्त्रीहंतायोगः ॥ षष्ठेच भवने भौमो राहुःसप्तम संभवः ॥ अष्टमेच यदा सौरि स्तस्य भार्य्या नजीवति ॥ १० ॥ अथ पराक्रमयोगः ॥ मूर्त्तौ शुक्रो बुधो यस्य केंद्रे चैव वृहस्पतिः ॥ दशमों गार को यस्य सज्ञेयः कुल दीपक : ॥ ११॥ अथ दुर्वल योगः ॥ नैव शुक्रो वुधो नैव नास्ति केन्द्रे वृहस्पति : ॥ दशमों गार को नैव सजातः किं करिष्यति ॥ १२॥ अथ जाति भ्रंश कारक योगः ॥ धन स्थाने यदा सौरिः सैंहि के यो धरात्मजः ॥ शुक्रो गुरुः सप्तमे च त्वष्ट मौरवि चंद्र को ॥ १३ ॥ ब्रह्म पुत्र पदे वापि वेश्यासुच सदा रतिः ॥ प्राप्ते विंशति मे वर्षे म्लेच्छो भवति नान्यथा ॥ १४ ॥ अथ मातृ पितृ नाशक योगः ॥ षष्ठे च द्वादशे राशौ यदा पाप ग्रहो भवेत् ॥ तदा मातृ भयं विद्या च्चतुर्थे दशमे पितुः ॥ १५ ॥ अथ मृत्यु कारक योगः ॥ अर्को राहु कुजः सौरि र्लग्ने तिष्ठति पंचमे ॥ पितरं मातरं हंति भ्रातरं स्वं शिशुक्रमात् ॥ १६ ॥ लग्न स्थाने यदा सौरिः षष्ठे भवति चंद्रमाः ॥ कुजस्तु सप्तमे स्थाने पिता तस्य नजीवति ॥ १७ ॥ पाता लस्थो यदा राहु श्चेंदुः षष्ठाष्ट मे पिच ॥ पाप

॥ २७॥ गुरुः कर्केच नक्रेच मीन कन्ये सितस्य च ॥ मंदस्तु लायां मेषेच कन्या राहु ग्रहस्यच ॥ २८ ॥ राहु र्युग्मे तु चापेच तमो वत्से तु जं फलम् ॥ प्रोक्तं ग्रहाणा मुच्चत्वं नीचत्वंच क्रमाद्बुधैः ॥ २९॥ अथजन्मलग्न फलम् ॥ मेषे दैन्य मुपैति गर्वित वृषे नाना मति र्मन्मथे क्रूरः कर्कट के धृतीच वनपे कन्या च माया न्विता ॥ सत्यं चैव तुलेत्व लो मलि नता पापा न्वितं वै धनुर्मूर्खत्वं मकरे घटे च तुरता मीने त्व धीरा मतिः ॥ ३० ॥

अथ ग्रहाणा मुच्च त्वनीच त्वज्ञा नार्थ चक्रम्

| ग्रह | सूर्य | चंद्र | भौम | बुध | गुरु | शुक्र | शनि | राहु | केतु |
|---|---|---|---|---|---|---|---|---|---|
| उच्च | मेष | वृष | मकर | कन्या | कर्क | मीन | तुला | मिथुन | तुला |
| नीच | तुला | वृश्चिक | कर्क | मीन | मकर | कन्या | मेष | धन | मेष |

अथ स्त्रीजातकम् ॥ अथतनुस्थानस्य ॥ मूर्तौ करोति विधवां दिन कृत्कुजश्च राहु र्विनष्ट तनयां रविजो दरिद्रां ॥ शुक्रः शशांक तनयश्च गुरुश्च साध्वी मायुः क्षयं च कुरुते त्र च सर्वरीशः ॥ ३१॥ अथ धन स्थानस्य ॥ कुर्वंति भास्कर शनैश्चर राहु भौमा दारिद्र्य दुःख मतुलं नियतं द्वितीये ॥ वित्ते श्वरीम विधवा गुरु शुक्र सौम्या नारीं प्रसूत तनयां

कुरुते शशांकः ॥ ३३॥ अथ सहज स्थानस्य ॥ सूर्येंदु भौम गुरु शुक्र बुधा स्तृतीये कुर्युः
स्त्रियं वद्धु सुतां धन भागिनीं च ॥ सत्यं दिवाकर सुतः कुरुते धनाढ्यां लक्ष्मीं ददाति
नियतं किल सैंहिकेयः ॥ ३४॥ अथ सुहृत्स्थानस्य ॥ स्वल्पं पयो भवति सूर्य सुते चतुर्थे सौभा
ग्य सुषमा किरणः कुरुते शशीच ॥ राहुर्विनिष्ट तनयां क्षिति जो ल्पजीवां सौख्यान्वितां
भृगु सुरेज्य बुधाश्च कुर्युः ॥ ३५॥ अथ सुतस्थानस्य ॥ नष्टात्मजां रवि कुजौ खलु पंचमस्थौ
चंद्रात्मजो वद्धु सुतां गुरु भार्गवौ च ॥ राहुर्ददाति मरणं रविजस्तु रोगं कन्या प्रसूति नि
रतां कुरुते शशांकः ॥ ३६॥ अथ रिपुस्थानस्य ॥ षष्ठ स्थिताः शनि दिवाकर राहु भौम जी-
वास्तथा वद्धु सुतां धन भागिनीं च ॥ चंद्रः करोति विधवा मुशना दरिद्रां वेश्यां शशांक
तनयः कलह प्रियांच ॥ ३७ ॥ अथ जाया स्थानस्य ॥ सौरा रजीव बुध राहु रवीन्दु शुक्रा दद्युः
प्रसह्य मरणं खलु सप्त मस्थाः ॥ वैधव्य बंधन मयं क्षय वित्तनाशं व्याधि प्रवास मरणं
नियतं क्रमेण ॥ ३८॥ अथ मृत्युस्थानस्य ॥ स्थाने ष्टमे गुरु बुधौ नयते वियोगं मृत्युं

भृगु सुतश्च तथैव राहुः ॥ सूर्य्यः करोति विधवां धनिनीं कुजश्च सूर्य्यात्मजो वहु सुतां प
ति वल्लभांच ॥ ३९ ॥ अथ धर्म्मस्थानस्य ॥ धर्म्म स्थिता भृगु दिवा कर भूमि पुत्र जीवाः सु
धर्म्म निरतां शशिजः सुभोगां ॥ राहुश्च सूर्य्य तनयश्च करोति वंध्यां नारी प्रसूत तनयां -
कुरुते शशांकः ॥ ४० ॥ अथ कर्म्मस्थानस्य ॥ राहु र्नभस्थ लगतो विधवां करोति पापे परां
दिन करश्च शने श्चरश्च ॥ मृत्युं कुजो र्थ रहितां कुटिलां च चंद्रः शेषा ग्रहा धन वती वहु
वल्लभांच ॥ ४१ ॥ अथ आयुस्थानस्य ॥ आये रवि र्वहु सुतां धनिनीं शशांकः पुत्रान्वितां क्षि
तिसुतो रविजो धनाढ्यां ॥ आयुष्मती सुर गुरु र्भृगुजः सुपुत्री राहुः करोति सुभगां सुखि
नीं वुधश्च ॥ ४२ ॥ अथ व्ययस्थानस्य ॥ अंत्ये धन व्यय वती दिन कृद् रिद्रां वंध्यां कुजः प
र रतां कुटिलां च राहुः ॥ साध्वी सिते ज्य शशिजा वहु पुत्र पौत्र युक्तां विधुः प्रकुरुते व्यय
गोदिनां धां ॥ ४३ ॥ अथ अष्टोत्तरी दशा क्रमम् ॥ आर्द्रा पुनर्वसुः पुष्य,आश्लेषा तुरवे र्दशा ॥
मघा पूर्वोत्तरा चैव चंद्रस्य च दशा तथा ॥ ४४ ॥ हस्तो विशाखा चित्रा च स्वाती भौम दशास्तु

ता ॥ ज्येष्ठा नुराधा मूले च सौम्य स्या च दशा वुधैः ॥ ४५॥ अभिजि च्छ्रवणः पूषा अपा
चैव शने र्दशा ॥ धनिष्ठा शत तारां च पूर्वा भाद्र पदा गुरोः ॥ ४६ ॥ उभा पूषा श्विनी का
ल राहो श्चैव दशा स्मृता ॥ कृत्तिका रोहिणी चोक्ता मृगः शुक्र दशा वुधैः ४७ एषां भानां क्र
मे णैव ज्ञेया : सूर्य्यादि का दशाः ॥ क्रूरजा अशुभा प्रोक्ता शुभा स्या त्सौम्य खेटजा ॥ ४८
॥ अथ महा दशा वर्ष संख्या ॥ सूर्यस्य षड्वर्षाणि इंदोः पंच दशै व च ॥ भौमस्य वसु वर्षाणि
ऋषि चंद्र वुधस्यच ॥ ४९ ॥ मंदस्य दश वर्षाणि गुरो श्चै को न विंशतिः ॥ राहो र्द्वादशा व
र्षाणि शुक्र स्यैको न विंशतिः ॥ ५० ॥ अथांतर्दशा क्रमः ॥ महा दशा स्व स्व दशा द्विभा-
भक्ताः स्ववाह्न शशिभिः समाप्ताः ॥ अंतर्दशा स्यु र्गगने च रागात देक भावो हि महा
दशा स्यात् ॥ ५१ ॥ अथ विंशोत्तरी दशा क्रमम् ॥ नयनो न ज नो भैनिक हृत् क्रमशो केन्दु
जा गुरु रयः ॥ शनि चंद्रज केतु भार्गवाः परि शेषात्तु दशाधि पा स्ततः ॥ ५२॥ अस्तु
दिग्गिरयो धृति र्नृपाति धृति मेघ हया न खाः समाः ॥ क्रमतो हिमता अथादिमा जनि

१३

| रवि आर्द्रा पु पु श्लेषा | | | | | | चंद्रस्य मघा पूर्वाफा उत्तरा फा | | | | | | भौमस्य हस्त चित्रा स्वाति विशा | | | | | | बुधस्य अनुराधा ज्येष्ठा मूल | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ग्रहाः | वर्ष | मास | दिन | घटी | फल | ग्रह | वर्ष | मास | दिन | घटी | फल | ग्रह | वर्ष | मास | दिन | घटी | फल | ग्रह | वर्ष | मास | दिन | घटी | फल |
| सूर्य | ० | ४ | १० | ० | अशुभ | चंद्र | २ | १ | ० | ० | शुभ | भौम | ० | ७ | ३ | २० | अशुभ | बुध | २ | ८ | ३ | २० | शुभ |
| चंद्र | ० | १० | ० | ० | शुभ | भौम | १ | १ | १० | ० | अशुभ | बुध | १ | ३ | ३ | २० | शुभ | शनि | १ | ६ | २६ | ४० | अशुभ |
| भौम | ० | ५ | १० | ० | अशुभ | बुध | २ | ४ | १० | ० | शुभ | शनि | ० | ८ | २६ | ४० | अशुभ | गुरु | २ | ११ | २६ | ४० | शुभ |
| [illegible] | ० | ११ | २० | ० | शुभ | शनि | १ | ४ | २० | ० | अशुभ | शुक्र | १ | ४ | २६ | ४० | शुभ | राहु | १ | १० | २१ | ० | अशुभ |
| शनि | ० | ६ | २० | ० | अशुभ | गुरु | २ | ७ | २० | ० | शुभ | राहु | ० | १० | २० | ० | अशुभ | शुक्र | ३ | ३ | २० | ० | शुभ |
| गुरु | १ | ० | २० | ० | शुभ | राहु | १ | ८ | ० | ० | अशुभ | शुक्र | १ | ६ | २० | ० | शुभ | रवि | ० | ११ | १७ | ० | अशुभ |
| राहु | ० | ८ | ० | ० | अशुभ | शुक्र | २ | ११ | ० | ० | शुभ | रवि | ० | ५ | १० | ० | अशुभ | चंद्र | २ | ४ | १० | ० | शुभ |
| शुक्र | १ | २ | ० | ० | शुभ | रवि | ० | १० | ० | ० | अशुभ | चंद्र | २ | १ | १० | ० | शुभ | भौम | २ | ३ | ३ | २० | अशुभ |
| संख्या | ६ | ० | ० | ० | ० | संख्या | २५ | ० | ० | ० | ० | संख्या | ८ | ० | ० | ० | ० | संख्या | १७ | ० | ० | ० | ० |

| शनेः पूर्वाषाढ उत्तराषाढ अभिश्रव | | | | | | गुरोः धनिष्ठा शतभिषा पूर्वाभाद्रपद | | | | | | राहोः उत्तरभाद्रपद अश्विनी भरणी | | | | | | शुक्रस्य कृत्तिका रोहिणी मृगशिर | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ग्रह | वर्ष | मास | दिन | घटी | फल | ग्रह | वर्ष | मास | दिन | घटी | फल | ग्रह | वर्ष | मास | दिन | घटी | फल | ग्रह | वर्ष | मास | दिन | घटी | फल |
| शनि | ० | ११ | ३ | २० | अशुभ | गुरु | २ | ४ | ३ | २० | शुभ | राहु | १ | ४ | ० | ० | अशुभ | शुक्र | ४ | १ | ० | ० | शुभ |
| गुरु | १ | ८ | ३ | ० | शुभ | राहु | २ | १ | १० | ० | अशुभ | शुक्र | ३ | ४ | ० | ० | शुभ | रवि | १ | २ | ० | ० | अशुभ |
| राहु | १ | १ | १० | ० | अशुभ | शुक्र | ३ | ८ | २० | ० | शुभ | रवि | ० | ८ | ० | ० | अशुभ | चंद्र | २ | ११ | ० | ० | शुभ |
| शुक्र | १ | ११ | १० | ० | शुभ | रवि | १ | ० | २० | ० | अशुभ | चंद्र | १ | ८ | ० | ० | शुभ | भौम | १ | ६ | २० | ० | अशुभ |
| रवि | ० | ६ | २० | ० | अशुभ | चंद्र | २ | ७ | २० | ० | शुभ | भौम | ० | १० | २० | ० | अशुभ | बुध | ३ | ३ | २० | ० | शुभ |
| चंद्र | १ | ४ | २० | ० | शुभ | भौम | १ | ४ | २६ | ४० | अशुभ | बुध | १ | १० | २० | ० | शुभ | शनि | १ | ११ | १० | ० | अशुभ |
| भौम | ० | ८ | २६ | ४० | अशुभ | बुध | २ | ११ | २६ | ४० | शुभ | शनि | १ | १ | १० | ० | अशुभ | गुरु | ३ | ८ | १० | ० | शुभ |
| बुध | १ | ६ | २६ | ४० | शुभ | शनि | १ | ८ | ३ | २० | अशुभ | गुरु | २ | १ | १० | ० | शुभ | राहु | ३ | ४ | ० | ० | अशुभ |
| संख्या १९ | | ० | ० | ० | ० | संख्या | १९ | ० | ० | ० | ० | संख्या | १२ | ० | ० | ० | ० | संख्या २१ | | ० | ० | ० | ० |

भस्या घटिका स्समाहृताः ॥ ५२॥ भभोगेन भक्ताःफलं भक्त पाक स्तद्गुना दृशा सा भवे

 द्भोग्य संज्ञा ॥ अथ विंशोत्तरी क्रम कोष्ठकः ॥ कृत्तिकादि क्रमे गौव ज्ञेया विंशोत्तरी दृशा ॥ अंत

| सूर्य्यस्य मंदवर्षे ६ कृत्ति उत्तरफा॰ उ षा | | | | चंद्रस्य मंदवर्ष रोहि हस्त श्रवण १० | | | | भौमस्य मंदवर्ष ७ मृगशिर चित्रा॰ धनिष्ठा | | | | राहो॰ मंदवर्षे १८ आर्द्रा स्वाति शतभिष | | | | गुरोः मंदवर्षम् १६ पुन॰ विशा॰ पूर्वा भा॰ | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| नाम | वर्ष | मास | दिवस | नाम | वर्ष | मास | दिन | नाम | वर्ष | मास | दिन | नाम | वर्ष | मास | दिन | नाम | वर्ष | मास | दिन |
| रवि | ० | ३ | १८ | चंद्र | ० | १० | ० | भौम | ० | ४ | २७ | राहु | २ | ४ | १२ | गुरु | २ | १ | १८ |
| चंद्र | ० | ६ | ६ | भौम | ० | ७ | ० | राहु | १ | ० | १८ | गुरु | २ | ४ | २४ | शनि | २ | ६ | १२ |
| भौम | ० | ४ | ६ | राहु | १ | ६ | ० | गुरु | ० | ११ | ६ | शनि | २ | १० | ६ | बुध | २ | ३ | ६ |
| राहु | ० | १० | २४ | गुरु | १ | ४ | ० | शनि | १ | १ | ६ | बुध | २ | ६ | १८ | केतु | ० | ११ | ६ |
| गुरु | ० | ९ | १८ | शनि | १ | ७० | ० | बुध | ० | ११ | २७ | केतु | १ | ० | १८ | शुक्र | २ | ८ | ० |
| शनि | ० | ११ | १२ | बुध | ० | ५ | ० | केतु | ० | ४ | २७ | शुक्र | ३ | ० | ० | रवि | ० | ९ | १८ |
| बुध | ० | १० | ६ | केतु | १ | ७ | ० | शुक्र | १ | ९ | ० | रवि | ० | १० | २४ | चंद्र | १ | ४ | ० |
| केतु | १ | ४ | ६ | शुक्र | १ | ८ | ० | रवि | ० | ४ | ६ | चंद्र | १ | ६ | ० | भौम | ० | ११ | ६ |
| शुक्र | १ | ० | ० | रवि | ० | ६ | ० | चंद्र | ० | ७ | ० | भौम | १ | १ | १८ | राहु | २ | ४ | १४ |

दशा युता वर्षमास वासर वर्त्तिताः ॥ ५३ ॥ अथ रवि दशा फलम् ॥ देशांतरं च निज बंध वियोग दुःखं उद्वेग रोग भय चोर भवा च पीडा ॥ पूर्व स्थितस्य निरिलस्य धनस्य नाशो भानोर्दशा जननकाले दशा भवंति ॥ ५४ ॥ अथ चंद्रस्य

| शनेः मंदवर्षान् १९ उ.भा. पुष्य. अनुराधा. | | | | |
|---|---|---|---|---|
| नाम | वर्ष | मास | दिन | घटी |
| शनि | ३ | ० | ३ | ० |
| बुध | २ | ८ | १ | ० |
| केतु | १ | १ | ९ | ० |
| शुक्र | ३ | २ | ० | ० |
| रवि | ० | ११ | १२ | ० |
| चंद्र | १ | ७ | ० | ० |
| भौम | १ | १ | ९ | ० |
| राहु | २ | १० | ६ | ० |
| गुरु | २ | ६ | १२ | २४ |

| बुधस्य मंदवर्ष १७ अश्लेषा ज्येष्ठा रेवती | | | | |
|---|---|---|---|---|
| नाम | वर्ष | मास | दिन | घटी |
| बुध | २ | ४ | २७ | ० |
| केतु | ० | ११ | २७ | ० |
| शुक्र | २ | १० | ० | ० |
| सूर्य | ० | १० | ६ | ० |
| चंद्र | १ | ५ | ० | ० |
| भौम | ० | ११ | २७ | ० |
| राहु | २ | ६ | १८ | ० |
| गुरु | २ | ३ | ६ | ० |
| शनि | २ | ८ | ९ | २७ |

| केतोः मंदवर्ष ७ मघा मूल. अश्विनी. | | | |
|---|---|---|---|
| नाम | वर्ष | मास | दिन |
| केतु | ० | ४ | २७ |
| शुक्र | १ | २ | ० |
| सूर्य | ० | ४ | ६ |
| चंद्र | ० | ७ | ० |
| भौम | ० | ४ | २७ |
| राहु | १ | ० | १८ |
| गुरु | ० | ११ | ६ |
| शनि | १ | १ | ९ |
| बुध | ० | ११ | २७ |

| शुक्रस्य मंदवर्ष २० पू.फा. पूर्वाषाढ. भरणी. | | | |
|---|---|---|---|
| नाम | वर्ष | मास | दिन |
| शुक्र | ३ | ४ | ० |
| सूर्य | १ | ० | ० |
| चंद्र | १ | ८ | ० |
| भौम | १ | २ | ० |
| राहु | ३ | ० | ० |
| गुरु | २ | ८ | ० |
| शनि | ३ | २ | ० |
| बुध | २ | १० | ० |
| केतु | १ | २ | ० |

गतर्दशा फलम् ॥ हेमादि भूति वर वाहन यान लाभः शत्रु प्रताप वल वृद्धि परं पराच्च ॥ वस्त्रा
न्नदान शयना सन भोजनानि नूनं सदा शशि दशा गमने भवंति ॥ ५५ ॥ अथ भौमस्य
अंतर्दशा फलम् ॥ भूपाल चौर भय वन्हि कृता च पीड़ा सर्वाङ्गि रोग भय दुःख सुदुःखि
ता च ॥ चिंता ज्वरश्च वहु कष्ट दरिद्र युक्त स्स्या त्सर्वदा कुज दशा जनने भवंति ॥ ५६ ॥
अथ राहोः अंत र्दशा फलम् ॥ दीनो नरो भवति बुद्धि विहीन चिंता सर्वाङ्गि रोग भय दुःख सुदुःखि
ता च ॥ पापानि वंधु वहु कष्ट दरिद्र युक्तं राहो र्दशा जनन काल दशा भवंति ॥ ५७ ॥
अथ गुरोः अंत र्दशा फलम् ॥ राज्याधि कार परि वर्धित चित्त वृत्तिं धर्माधि कार परि पालन
सिद्ध वुद्धिं ॥ सद्गि गृहेपि धन धान्य समृद्धि ता च स्याद्देवता गुरु दशा गमने भवंति ॥
५८ ॥ अथ शनेः अंतर्दशा फलम् ॥ मिथ्या पवाद वध वंधन मर्थ हानि मित्रे च वंधु वचने कुन्
युद्ध वुद्धिः ॥ सिद्धं च कार्य्य मपि यत्र सदा विनष्टं स्या त्सर्वदा शनि दशा गमने भवंति ॥
५९ ॥ वुधस्य अंत र्दशा फलम् ॥ दिव्यांग नाम दन संगम केलि सौख्यं नाना विलास मभिराम

मनोभिरामैः ॥ हेमादि रत्न विभवागम कोश ध्यानं स्यात्सर्वदा बुध दशागमने भवंति ॥ ६० ॥ अथ केतोः अंतर्दशा फलम् ॥ भार्या वियोगजनितं च शरीर दुःखं द्रव्यस्य हानि रति कष्ट परं परान्च ॥ रोगाश्च बंधु कलहश्च विदेशता च केतो दशा जनन काल दशा भवंति ॥ ६१ ॥ अथ शुक्रस्य अंत दशा फलम् ॥ आराम वृद्धि परि सर्व शरीर वृद्धिं प्रवेनात पत्र धन धान्य समा कुलंच ॥ आयुः शरीर सुत पौत्र सुखं नराणां द्रव्यं च भार्गव दशागमने भवंति ॥ ६२ ॥ अथ योगिनी दशा क्रमम् ॥ स्वर्क्षपिना कि नयनैः संयोज्यं वसु भिर्भजेत् ॥ योगिन्यष्टौ समाख्याता शून्य पातेन संकटा ॥ ६३ ॥ अथ योगिनीनां नामानि ॥ मंगला पिंगला धान्या भ्रामरी भद्रिका पिच ॥ उल्का सिद्धा संकटान्च योगिन्यष्टो दशाः स्मृताः ॥ ६४ ॥ अथ वर्ष संख्या ॥ एक द्वित्रीणि वेदाश्च पंच षट् सप्त सानिच ॥ अष्ट वर्षाणि हि भवे मंगलाद्यास्तनु क्रमात् ॥ ६५ ॥ अथ दशायाः फलम् ॥ मंगला मंगला नंद यशो द्रविण दायिनी ॥ पिंगला तनुते व्याधि म्मन सो दुःख संभ्रमौ ॥ ६६ ॥ धान्या धन सुहृद्बन्धु रूप सीमन्तिनी करी ॥ भ्रा

मरी जन्म भूमि श्री भ्रामये त्सर्व तो दिशं ॥ ६७ ॥ भद्रिका सुख संपत्ति विला स वश दायिनी
उल्का राज्य धना रोग्य हारिणी दुःख कारिणी ॥ ६८ ॥ सिद्धा साधयते कार्यं नृणां वै सु-
खदा भवेत् ॥ संकटा संकट व्याधि मरण क्लेश कारिणी ॥ ६९ ॥ अथदशावर्षसंख्या ॥ रविदि-
न नख संख्या चंद्र मा व्यो म वाणैः क्षिति तनय गजा ब्धी चन्द्र जः षट् शराश्च ॥ शनिरस
गुण संख्या वाक्य ति नाग बाणौ नयन युग केराहुः सप्ततिः शुक्र संख्या ॥ ७१ ॥ जन्मना
विंशतिः सूर्ये त्वतीये दश चंद्रमाः ॥ भौमश्चलग्ने चाष्टौ च दशे बुध चतुर्थके ॥ ७२ ॥ सप्त-
मंदश सौरिः स्या न्नवमे चाष्टमं गुरोः ॥ दशमे राहु विंशत्या तदूर्ध्वं तु भृगोर्दश ॥ ७२ ॥ अ-
थ फलम् ॥ पंथा भोगो नुतापश्च सौख्यं पीडा धनं क्रमात् ॥ नाशः शोकश्च सौख्यं च जन्मा सू-
र्य्य दश फलम् ॥ ७३ ॥ अथ ग्रहाणां दिन दशा प्रकारः ॥ तिथि वारंच नक्षत्रं नामाक्षर समन्वितं
॥ नवभि श्च हरे द्भागं शेषं दिन दशो च्यते ॥ ७४ ॥ रवि चंद्रौ भौम राहू गुरु मंद ज्ञ के सितौ ॥
क्रमेणै का दशा ज्ञेयाःफलं पूर्वोक्त मे वहि ॥ ७५ ॥ अपरंच ॥ चतुर्गुणा जन्म तारा तिथि वार

समन्विता ॥ नवभिस्तु हरेद्भागं शेषं दिन दशोच्यते ॥ ७६ ॥ रवौच्च शोक संतापो शशांके क्षेम लाभकौ ॥ भूमि पुत्रे तु मृत्युः स्याद्बुधे गद्धा विवर्द्धनं ॥ ७७ ॥ गुरौ वित्तं भृगौ सौख्यं शनौ पीड़ा न संशयः ॥ राहोश्च घात पातोच्च केतौ मृत्यु र्दशा फलम् ॥ ७८ ॥ अथ स्तनपानम् ॥ अन्न प्राशन नक्षत्रे दिवसो स्य राशिषु ॥ जातकर्मोक्तनक्षत्रे श्रवणत्रय-पुनर्वसौ ॥ ७९ ॥ त्यक्त्वा स्वाती स्तन्यपानं शुभं प्रोक्तं शुभे हनि ॥ एकत्रिंशद्दिने चैव पयः शंखेन पाययेत् ॥ ८० ॥ अथ सूतिका क्वाथः ॥ भैषज्य रिक्ते धिस्ने वारे दुर्योग वर्ज्जिते ॥ आरोग्य हेतवे क्वाथः सूतिकाया श्च तच्छिशोः ॥ ८१ ॥ अथ सूतिकापथ्यम् ॥ अन्नाशनोक्त नक्षत्रे शुभाहे सांशुमालिनि ॥ हित्वा त्रयस्त्रीं च दुर्योगं सूतिका पथ्य मीरितम् ॥ ८२ ॥ अथ पंचमी षष्ठी पूजा ॥ जन्मतः पंचमे घस्ले जीवंत्याः पूजनं निशि ॥ षष्ठे ऽन्हि षष्ठिका पूजा गीते र्जागरणादिभिः ॥ ८३ ॥ अथ सूतिका स्नानम् ॥ हस्ते मृगे ऽनुराधायां रोहिण्यां रेवती द्वये ॥ उत्तरा त्रितये स्वातौ जीवार्क कुज वासरे ॥ ८४ ॥ सूती स्नानं प्रशस्तं स्या द्विहाय द्रींत्रयं श्रवम् ॥ विशाखां भरणीं मूलं

चित्रा स्वयं कृत्तिका मघा ॥ ८५ ॥ अरक्ता बुध शनिं षष्ठी द्वादशी मष्टमी स्तथा ॥ अथार्भक-
स्य दंतोत्पत्तौ फलम् ॥ उपरि प्रथमं यस्य जायंते च शिशो र्द्विजाः ॥ दंतै र्वा सह यस्य स्याज्ज
न्म भार्गव सत्तम ॥ ८६ ॥ स्वात्मानं प्रथमे मासि द्वितीये चानुजां स्तथा ॥ तृतीये भ-
गिनी तुर्य्ये मातरं पंच मेऽग्रजान् ॥ ८७ ॥ निहन्या दृशनो त्पत्तौ सदंत स्त्वर्भ कोऽखि
लान् ॥ षष्ठादौ लभते भोगानृद्धं पंक्ताव सत्सदा ॥ ८८ ॥ दंता ना मष्टमे मासि षष्ठे-
मासि ततः पुनः ॥ दन्ता यस्य च जायंते माता वा म्रियते पिता ॥ ८९ ॥ बाल को मृ य
ते तत्र स्वय मेव न संशयः ॥ अथ दंतनिर्मुक्तिः ॥ प्रथमं दंत निर्मुक्ति रूर्द्ध्वं बालस्य चेद्भ-
वेत् ॥ क्लेशाय मातुलस्येह तथा प्रोक्ता महर्षिभिः ॥ ९० ॥ अथजलपूजा ॥ पुनर्वसू द्वये
हस्ते मृगे मूला नुराधयोः ॥ श्रवे गुरौ बुधे चंद्रे स त्तिथौ जल पूजनम् ॥ ९१ ॥ गुरो शु-
क्रेऽस्त गे चै त्रे पौषे च मल मास के ॥ मास पूर्त्तौ विशुद्धा हेन कुर्य्या च्च जलार्च्चनम् ॥
९२ ॥ अथ दोला रोहणम् ॥ खट्वारो ह स्तु क र्त्तव्यो दशमे द्वादशे पिवा ॥ षोडशे दिवसे

॥ १ ॥ तत स्तृतीये कर्त्तव्यं मासि सूर्य्य स्य दर्शनम् ॥ चतुर्थे मासि कर्त्तव्यं शिशो श्चं-
द्रस्य दर्शनम् ॥ २ ॥ मैत्रे पुष्य पुनर्वसौ प्रथम भे पौष्णेऽनु कूले विधौ हस्ते चैव सुरे श्व-
रे च मृग भे तारा स्तुश स्ता सु च ॥ कुर्य्या न्निःक्रमणं शिशो र्बुध गुरु शुक्रे ष्वारि के तिथौ क-
न्या कुंभ तुला मृगा रिभवने सौम्य ग्रहा लोकिते ॥ ३ ॥ अथ कटि सूत्र भूम्युपवेशनम् ॥ पुष्य
हस्ताश्विनी मूले ष्युत्तरे रोहिणी मृगे ॥ ज्येष्ठाया मनुराधायां शुभा हे मासि पंचमे ॥ ४ ॥
कुजे शुद्धे सम भ्यर्च्य वाराहं धरणीं भुवि ॥ कटि सूत्र मथो बद्धा वालकं चोप वेशयेत् ॥
५ ॥ पुस्तकं लेखनी शास्त्रं तथा रौप्यं च कांचनम् ॥ तस्मि न्काले यदा दत्ते तद्वृत्त्या जीव-
नं शिशोः ॥ ६ ॥ अथान्न प्राशनम् ॥ युग्मेषु मासेषु च षष्ठ मासा त्सां वत्सरे वानियतं शिशू-
नाम् ॥ अयुग्म मासेषु च कन्य कानां नवान्न सं प्राशन मिष्ट मे तत् ॥ ७ ॥ रेवती द्वित
ये पुष्ये पुनर्वस्व नुराधयोः ॥ श्रवणादि त्रये हस्त त्रितये रोहिणी मृगे ॥ ८ ॥ कर्णवेधं
तथा पानं क्षुर कर्म्मान्न भोजनम् ॥ पट्ट बंधन चौलान्न प्राशने चोप नायने ॥ ९ ॥ शुभं

जना नक्षत्र मप्यशुभं त्वन्य कर्मणि ॥ उत्तरा श्रु विशुद्धे च दृशा मे शुभ वासरे ॥ १० ॥ गोश्च
कुंभ तुला कन्या सिंह कर्क नृ युग्म काः ॥ शुभदा राशय श्चैते नमीन मेष वृश्चिकाः ॥
११ ॥ हित्वा करकां तथा नंदा मष्टमी द्वादशीं तथा ॥ तिथेः क्षय ममां वारान् शनि भौमा-
र्क संज्ञकान् ॥ १२ ॥ जन्म राशि विलग्नाभ्यां नैधने शे च वर्ज्जयेत् ॥ संपूर्णे न्दू भया
ष्टम्यो र्मध्येंदुः पूर्ण संज्ञकः ॥ १३ ॥ विनष्टेन्दू भयाष्टम्यो र्मध्येऽसौ क्षीण संज्ञकः
॥ ॥ अथ तांबूल भक्षणम् ॥ सार्द्ध मास द्वये दद्या त्तां बूलं प्रथमं शिशोः ॥ कर्पूरादि कसं
मिश्रं विला शाय हिताय च ॥ १४ ॥ मूलार्क तिष्य कर चित्र हरीन्द्र भेषु पौष्णे तथा मृग
शिरो दिति वासवेषु ॥ भर्केन्दु जीव भृगु बोधन वासरेषु तांबूल भक्षण विधि र्मुनि-
भिः प्रदिष्टः ॥ १५ ॥ अथ कर्ण वेधः ॥ मासे षष्ठे सप्तमे वाष्टमे वा वेध्यौ कर्णौ द्वादशे षो-
डशेऽन्हि ॥ मध्ये नान्हः पूर्व भागेन रात्रौ नक्षत्रे द्वे द्वे तिथी वर्ज्जयित्वा ॥ १६ ॥ रेव-
ती द्वितये पुष्ये पुनर्वस्व नुराधयोः ॥ श्रवण द्वितये चित्रा मृगे हस्ते शुभे तिथौ ॥ १७ ॥

आरभ्य जन्म दिवसं यावत्त्रिंशद्दिनं भवेत् ॥ जन्म मासः स विज्ञेयो वर्जितस्सर्वकर्मसु १ ज०

 ॥ हित्वा वमं चैत्र पौषौ जन्म मासं हरे श्रणयम् ॥ युग्मा ब्दं जन्म दिक् चै कोन विंशतारां
यथा क्रमात् ॥ १८ ॥ ज्ञेज्य शुक्रेन्दु वारेषु शस्ते विषम वर्षके ॥ सूतो शुद्धे त्रिकोणेऽ
थ केन्द्रे शुभ ग्रहा न्विते ॥ १९ ॥ स्वसद्मे गुरु शुक्रे वा त्रिषष्ठे का दशेऽ शुभे ॥ गुरौ लग्ने
ऽथवा कुर्य्यात्कर्ण वेधं शुभा वहम् ॥ २० ॥ कर्ण वेधोक्तभे शस्तं कन्याया घ्राण वे-
धनम् ॥ अथाब्द मुहूर्तम् ॥ प्रति वर्षं तु जन्माहे स्नाया दुत्सव पूर्वकम् ॥ गणेशं वा स-
म भ्यर्च्य देवता श्चिर जीविनः ॥ २१ ॥ कृत्वायुष्यं च वि प्रयुक्तं कर्मदाना न्य नेकशः
॥ वध्वा मंगल सूत्रंच भुक्ता मिष्टं द्विजै स्सह ॥ २२ ॥ अथ चूडाकर्म ॥ जलाशय सुराग
म प्रतिष्ठा व्रत वन्धनम् ॥ आन्या धानं विवाहं च चौलं राज्या भिषेच नम् ॥ २३ ॥ गु-
रु भार्गव यो रस्ते वाल्य वार्द्धक यो रपि ॥ केतू दयेऽपि वै न स्यादि ति विद्वत्स्व संमतम्
॥ २४ ॥ दशाहे पश्चिमे वाल्यं पंचाहं वार्द्धकं भृगोः ॥ प्राच्यां तु त्रिदिनं वाल्यं पक्षं वार्द्ध

कमुच्यते ॥ २५॥ पक्षं वाल्यं च वार्द्धक्यं गुरोः स्त्याज्यं शुभे सदा ॥ स्पष्टाहं बाल्यवार्द्धके अरे सप्ताह मूचिरे ॥ २६ ॥ त्र्यहं चावश्य के कृत्ये केचिद्भार्गव जीवयोः ॥ शुक्रो गुरुःप्राक्यस्तश्च वालो विंध्येदशावर्तियु सप्त रात्रम् ॥ वंगेषु हूणेषु च षट् च पंच शेषेतु देशे त्रि दिनं निषिद्धम् ॥ २७ ॥ अथ शुक्रोदयास्त मानम् ॥ प्राच्यां नेत्रेषु दिवसान् २५२ दृश्यो भवति भार्गवः वसु शैल ७८ मितास्तत्र यातोऽस्तं नैव दृश्यते ॥ २८ ॥ खवाणाब्धि मितान् घस्रान् २५० प्रतीच्यां दृश्यते भृगुः ॥ तत्रैवार्क करग्रस्तो न वाह्नि न दृश्यते ॥ २९ ॥ अथ गुरूदयास्त मानम् ॥ अयो वाचस्पतिर्मासं भवती सर्गगोचरः ॥ प्राच्यामुदयते मासं याति पश्चात्तु वत्सरान् ॥ ३० ॥ अथेन्दो वाल वृद्धत्वम् ॥ कृष्णे त्वमिंदो स्त्रि दिनं दिनार्द्धं वालत्वमस्तत्वमहर्दयं च ॥ हिनोक्तमेकं दिवसं प्रिस्तुत्वमिस्येत दिं दोस्तदयुक्तमेव ॥ ३१ ॥ अथ केतूदयम् ॥ त्रि शिरःस्यास्त्रि तारा श्च रक्त लोहितरश्मयः ॥ याय प्रास्तूनरा मा यां सचन्ते नित्यमेव हि ॥ ३२ ॥ केतो रस्त दिना

स थि

१५७

दूर्ध्वं सप्त यात्राणि वर्जयेत् ॥ ब्राह्मपुत्रो द्रमे वर्ज्यं व्रत यात्रादि मंगलम् ॥ ३३ ॥ चन्द्रसुत एव त्रिशिखोदयो त्रिभिर्युगांतकरः ॥ अनियत दिवस प्रभवो विज्ञेयो ब्रह्म दंडाख्यः ॥ ३४ ॥ केतो रस्त दिना दूर्ध्वं सप्ताहं मंगलं त्यजेत् ॥ यावत्केतूदयस्ता वद् शुद्ध समयो हि सः ॥ ३५ ॥ केतूदये सप्त दिनानि चोर्ध्वं विहाय यात्रादिषु गर्हितानि ॥ दिनानि शेषाणि शुभानि नूनं वदन्ति रैभ्य प्रमुखा मुनीन्द्राः ॥ ३६ ॥ चौलं संवत्सरे पूर्णे त्रि तया द्विषमे चरेत् ॥ सौम्यायने विचैत्रेषु ज्येज्य शुक्रेन्दु वासरे ॥ ३७ ॥ गथ स्याद्ब्राह्मण स्यार्के क्षत्रियस्य कुजे हनि ॥ मंदाहे वैश्य शूद्राणां चैं लोक्त तिथिभादिषु ॥ ३८ ॥ हस्ताश्वि विष्णु पौष्णानि श्रविष्ठा दित्य पुष्यभम् ॥ सौम्य चित्रे तथा क्षौरे उत्तमान व तार काः ॥ ३९ ॥ श्रीएयुत्तराणि वायव्य रोहिणी वारुणं तथा ॥ क्षौरे षराम ध्यमा प्रोक्ता शेषा द्वादश गर्हिताः ॥ ४० ॥ क्षौरादेजन्म लग्नं शुभम् ॥ कृषिं प्रयाणं क्षौरं च विवाहः प्राशनं तथा ॥ एषो वस्त्रं च यानं च जन्म राशौ शुभं भवेत् ॥ ४१ ॥ आत्म राश्युदये षष्ठे द्वादशे निधने

नया ॥ शत्रु क्षेत्रे च नीचे च क्षौरं नैव प्रशस्यते ॥ ४२ ॥ मेषे दुःखो मृगेन्द्रे च वृश्चि
के व्यसनं भवेत् ॥ रजा वोषेच धनुषि शुभ युक्तेन शुध्यति ॥ ४३ ॥ विष शस्त्र जलेर्घो
रैः पीड्यते मरणान्वितः ॥ क्षौरे मृत्यु घटे लग्ने शुभ युक्ते ऽपि सप्ततः ॥ ४४ ॥ यामित्रे
भास्करे क्षौरे मृत्यु स्स्याद्भूमिजे तथा ॥ शुक्रे सौख्यविना शस्त्रान्तरं भाग्यं धने ध्वरे
॥ ४५ ॥ लग्ने खेटे व लोपे ते चंद्र तारा वला न्विते ॥ ज्येष्ठे ज्येष्ठस्य नो मासे मार्ग
शीर्षे ऽपि केचन ॥ ४६ ॥ सूनो मातरि गर्भिण्यां चूडा कर्म न कारयेत् ॥ पंचमा
द्वात्मागथोर्द्ध्वं गर्भिण्यामपि कारयेत् ॥ ४७ ॥ यस्य मांगालिकं कृत्यं तस्य माता
रजस्वला ॥ तदा मृत्युमवाप्नोति पंचमं दिवसं विना ॥ ४८ ॥ विवाहोत्सव कार्येषु
माता चैव रजस्वला ॥ वैधव्यं जायते तत्र नार्य्योः पाणि पीडने ॥ ४९ ॥ अथाक्षरा
रंभः ॥ सौम्यायने शुभे मासि स्वाध्याय दिवसे शुभे ॥ रवौ जीवे बुधे शुक्रे लग्ने खेट व-
लान्विते ॥ ५० ॥ रेवती द्वितये पुष्ये पुनर्वसु नुराधयोः ॥ आर्द्रास्वये श्रवणे हस्ते स्वातौ

क०वि
२५६

चित्राभिधे तथा ॥ ५१ ॥ हेरं वां वेच वाग्देवी तथाभ्यर्च्येष्ट देवताः ॥ पंचमाब्दे नरः
कुर्य्याल्लिप्यारंभं बुधः सदा ॥ ५२ ॥ अथोपनयनम् ॥ आषोडशाद्ब्राह्मणस्य सावित्री
नाभिवर्त्तते ॥ आद्वाविंशाद्ब्रह्मबंधोरा चतुर्विंशति द्विजः ॥ ५३ ॥ अत ऊर्द्ध्वं त्रयो-
प्येते यथाकालमसंस्कृताः ॥ सावित्री पतिता व्रात्या भवत्यपि च गर्हिता ॥ ५४ ॥
कश्यपः ॥ ऋतौ वसंते विप्राणां ग्रीष्मे राज्ञां शरद्यथ ॥ विशां मुख्यं च सर्वेषां द्विजानां
चोपनायनम् ॥ ५५ ॥ साधारणं च मासेषु माघादिषु च पंचसु ॥ विन तुंना वसंते न
कृष्णपक्षे गलग्रहे ॥ ५६ ॥ अपराह्णे चोपनीतः पुनः संस्कारमर्हति ॥ त्रिधा विभज्य
दिवसं तत्राद्ये कर्म्म वैदिकम् ॥ ५७ ॥ द्वितीये मानुषं कार्य्यं तृतीये ऽपैतृपैतृकम् ॥ चंद्रे
लग्नेऽतिपस्तः स्यात् क्षयरोगी शिशौ नरे ॥ ५८ ॥ शुक्लपक्षे भवेद्यज्वा स्वभे तुंगे ति
शेषतः ॥ वर्द्धमानोऽपि वा पूर्णः चन्द्रो यदि विलग्नतः ॥ ५९ ॥ निःस्वं करोति व्रतिनं लग्नगः स्वपरो
गिराम् ॥ ग्रास्वाधिपतिनारश्च ग्रास्वाधिपबलं शिशोः ॥ ग्रास्वाधिपतिलग्नं चान्वितयं दुर्लभं व्र- २५६

सं०शि० ते ६० ग्राखेषु गुरु शुक्राणां मौढ्ये वाल्ये च वार्द्धके ॥ ६१॥ नैवोप नयनं कार्य्यं वर्णे
१९० शे दुर्वले साति ॥ शत्रुनी चाधि शत्रुस्थे स्वांशे वा स्वोच्च भाग गे ॥ ६२॥ शाखे शे वा
गुरौ शुक्रे न नीच फल मश्नुते ॥ जन्मोदये जन्म सुतार का सु मासे तथा जन्म तिथौ
च राशौ व्रते न विप्रो ऽत्य परिश्रुतो ऽपि राज्ञो विशेष: प्रथितः पृथिव्याम् ॥ ६३ ॥ म
र्भेष्टमे गर्ग पराशराद्यै: फलं यदुक्तं व्रत वंधने तु॥ततो ऽधिकं जन्म सु तारका सु मासे ऽथ
वा जन्म निवाड वानाम् ॥ ६४ ॥ जन्मर्क्ष मास लग्नादौ व्रते विद्याधि को व्रती ॥ आद्य
गर्भे तु विप्राणां क्षत्रा दीना मना दिमे ६५॥ वालस्य वल हीनो ऽपि शांत्या जीवो वल प्रदः
॥ ६६ ॥ यथोक्त वत्सरे कार्य्य मनुक्ते नोप नायनम् ॥ उक्ते ऽपि वर्धेन गुरु वली चेच्चां -
त्या प्रशस्त व्रत वंध कर्म्म॥ अनुक्त वर्षे सुवल प्रदो ऽपि नैवेत योरुद्र वलं गरीयः ॥ ६७
॥ व्रत वंधे विवाहे च शांति यात्रा विशेषतः ॥ गोचरे शेव कर्त्तव्यं वेधादि कम कारणम्
६८॥ वेधस्तु ॥ व्यये पक्षे स्त्रिगे खेलैः स्वगे नंदे सुखे शरैः ॥ रंध्रे रुद्रे गृहे विद्धो गुरुः ९९

॥ ७९ ॥ अथतिथयः
शुक्ले जीवज्ञ भार्गवे ॥ केचित्तु कृष्ण पक्षेऽपि प्रथम त्रिलवे जगुः ॥ ७९ ॥ अथतिथयः
द्वित्र्येकादशदिकं च द्वादश प्रमिते तिथौ ॥ अश्विनी मृग चित्रासु हस्ते स्वात्यां च धू
क्रभे ॥ ८० ॥ पुष्ये च पूर्व फाल्गुण्यां श्रवणे पौष्ण भे तथा ॥ वासवे शत तारासु व्रतबंधः
प्रशस्यते ॥ ८१ ॥ अथ प्रति वेदं नक्षत्राणि ॥ मूले हस्त त्रये सार्प्य सैके पूर्वा त्रये तथा ॥
ऋग्वेदाध्यायिनां कार्य्य मेखलाबंधनं बुधैः ॥ ८२ ॥ पुष्ये पुनर्वसौ पौष्णे हस्ते मैत्रे स्व-
र्णाकृभे ॥ औवेषु च प्रशस्तं स्याद्यजुषां सौंजिबंधनम् ॥ ८३ ॥ पुष्य वासव हस्ता-
श्विशिव कर्णोत्तरा त्रयम् ॥ प्रशस्तं मेखला बंधे बटूनां साम गायिनाम् ॥ ८४ ॥ मृगोत्ते
त्राश्विनी हस्तो रेवत्य दिति वासवम् ॥ अथर्व पाठिनां शस्तो भ गणोऽयं व्रता ध्वरे ॥
८५ ॥ अथ साधारणो नक्षत्र विशेषः ॥ पुनर्वसौ व्रतं नेष्टं शतभे केच नेतिच ॥ अथव्रतेनि
षिद्धम् ॥ कृष्ण पक्षे शनौ राहौ प्रदोषे चा गल ग्रहे ॥ अनाध्याये ऽपराह्ले च न कुर्य्यां द्व्र
त बंधनम् ॥ ८७ ॥ अथानाध्यायः ॥ संक्रांति र्युग मन्वादी द्वितीया ज्येष्ठ शुक्लगा ॥

चैत्र कृष्ण तृतीयाच द्वादशी माघ शुक्लजा ॥ ८८ ॥ प्रति पक्षे ऽष्टमी चैव चतुर्दश्या: दिन त्रयम् ॥ अनाध्याया दूमेव ज्यां स्वाध्याय व्रत बंधयो: ॥ ८९ ॥ अथ प्रदोष: ॥ चतुर्थी प्रथमे यामे याम युग्मे त्रयो दशी ॥ सप्तमी सार्द्ध यामे च प्रदोषस्स्या न्निशा मुखे ॥ ९० ॥ अथ गलग्रहा: ॥ सप्तम्या स्त्रितयं चैव त्रयोदश्या श्चतुष्टयम् ॥ चतुर्थी चैकतः प्रोक्ता अष्टा वेते गल ग्रहा: ॥ ९१ ॥ अथ लग्न बलम् ॥ त्रि ३ षट् ६ संस्था: खला: खे १० के चन्द्रो द्वि २ धन ७ स १० त्रि ३ ग: ॥ सौम्या: केन्द्र त्रिकोण स्था: १।४।७।१०।९। ५। लाभे सर्वे व्रते शुभा: ॥ ९२ ॥ जीवेन्दु भृगु लग्नेशा व्रते नेष्टा षडष्टगा: ॥ शुक्रेन्दु व्यय गौने ष्टौ खला लग्नाष्ट पंचगा: ॥ ९३ ॥ व्रते सौम्या ह्यशुभा: प्रोक्ता: षडष्टांत्य विवर्ज्जिता: ॥ शुक्ले स्वर्क्षोच्च गश्चंद्रोलग्ने श्रेष्ठो रवि: क्वचित् ॥ ९४ ॥ क्रूज्य शुक्रांशगो लग्ने चंद्र:शस्तो व्रते मत: ॥ नान्यत्राथ निजा शेज्ञ: पुनर्वसु श्रवे शुभ: ॥ ९५ ॥ अथ केन्द्रस्य खेट फलम् ॥ भूपा स्त्रयी वणिक् वृत्ति: पाल्य मृत्यात्यको मत:

॥ पंडित स्वार्थ वान् म्लेच्छसेवी केन्द्रेऽकितः क्रमात् ॥ ९६ ॥ अथ व्रतयोगः ॥ लग्ने गुरु भृगुः कोणे शुक्रां शेऽब्दे व्रते शुभः ॥ गुरु स्वंशे भृगुर्नेष्टो रवि भौमार्कि संयुतः ॥ ९७ ॥ अथ चैत्र शाख्यत्वम् ॥ गोचराष्ट क वर्गाभ्यां यस्य शुद्धि र्न लभ्यते ॥ तस्योपनयनं कार्यं चैत्रे मीन गते रवौ ॥ ९८ ॥ हरौ सिंहांशगे जीवे नीच र्क्षे नीच भागगे ॥ मौंजीबंधः शुभः प्रोक्तः चैत्रे मीन गते रवौ ॥ ९९ ॥ अथात्र मातुः रजो दोषे विशेषः ॥ मातृ रज स्वला दोषो नांदी श्राद्धोत्तरं तथा ॥ आवश्यके व्रतं चौलं शांत्या कुर्यात्कर ग्रहम् ॥ २०० ॥ अथ केशांत समावर्तौ ॥ चौलोक्त समये कार्यं केशांतं षोडशाब्द के ॥ व्रत बंधोक्त कालेतु समा वर्त्तन मीरितम् ॥ २०१ ॥ अथ राज्ञां क्षुरिका बंधनम् ॥ व्रतोक्त मास तिथ्या दौ विचैत्रे सबले कुजे ॥ विभौमे क्षुरिका बंधं प्राग्विवा हान्महीभुजाम् ॥ २०२ ॥ द्विवेदि कुल संभूत सरयू तत संग्रहे ॥ शिरो मणौ समाप्तेषा प्रमेयं द्विचतुर्दशी ॥ २०३ ॥ इति संग्रह शिरो मणौ संस्कार कथनं नाम चतुर्दशोऽध्यायः ॥

॥ २४ ॥ अथ विवाह प्रकरणम् ॥ योषा धर्मार्थ कामानां साध्वी चेत्सा धनं भवेत् ॥ प्रोक्तं लग्न व शात्तस्याः शुभं लग्न मथोच्यते ॥ १ ॥ दैवज्ञं सुदिने ऽभ्यर्च्य तां फल श्रीफलादि भिः ॥ विज्ञाप्य यं तयोः पृच्छेद् विवाहं वर कन्ययोः ॥ २ ॥ प्रश्नेलग्ना द्दिगी २० प्रा ११ भि ३ वाण ५ शैल ७ स्थितेविधौ ॥ सद्यः परिणयो जीव दृष्टे स्याद्वर कन्ययोः ॥ ३ ॥ गो तुलाकर्क लग्ने वा शुभेक्षित युते तथा ॥ विषम क्षौंश गो शुक्र चंद्रौ चेत्प्रश्न तस्तनुस् ॥ ४ ॥ बलिनौ सन्दौ तत्र स्त्री प्रदौ सम भांशगौ ॥ चंद्रे षष्ठे ऽष्टमे पापे लग्ने वा धूनगे कुजे ॥ ५ ॥ लग्ने ऽब्जे वा धून भौमे वैधव्यं चाष्टमे ऽब्द के ॥ लग्नाच्च पंचमे पापे नीच स्थे शत्रु वीक्षिते ॥ ६ ॥ सा कन्या मृत वत्सा स्याद्यथवा कुलटा भवम् ॥ धूने संदु भृगो रंडा भौमे वा कुलटा शनौ ॥ ७ ॥ सुशीला सुभगा जीवे बुधे च प्रश्न लग्न तः ॥ चन्द्रः षष्ठे ऽष्टमे पक्षे वा कुले सम राशिगः ॥ ८ ॥ क्रूरे क्षिते विवाहस्य भंगदः परि कीर्तितः ॥ याहक् संतान संयुक्ता यो षित्स्वैं समा-

व्रजेत् ॥ ९ ॥ तां विलोक्य तथा पत्यं तस्य प्रश्ने वदेत्सुधीः ॥ शंखभेर्यादिना-
दश्चेत्प्रश्ने स्यान्मंगलं सदा ॥ १० ॥ वायसस्य शृगालादिरवश्चेद् शुभं भवेत्
॥ दंपत्योरंतरा मैत्री विवाहेन शुभा वद ॥ ११ ॥ जुंजा वर्गस्तथा वर्गो वश्यं ता
रा थ योनिजा ॥ ग्रह मैत्री गणो राशिमैत्री नाडीति वै दश ॥ १२ ॥ यथोत्तरवला
श्चेति विज्ञेयास्तु परस्परम् ॥ गुणाधिके समुद्वाहः कर्त्तव्यो वरकन्ययोः ॥ १३॥
अथ जुंजाप्रीतिः ॥ पौष्णादिकं षट्कमुशंति पूर्वं मार्द्रादिकं द्वादश मध्य भागम् ॥ पौरंद-
राद्यं नव कं भ चक्रे परंच भागं गणकाः विदग्धाः ॥ १४ ॥ पूर्व भागे पतिः श्रेष्ठो मध्य-
भागे च कन्यका ॥ परभागे च नक्षत्रे द्वयोः प्रीतिर्न्न ह्रीयसी ॥ १५ ॥ अथ वर्गप्रीतिः ॥
अवर्गो गरुडः प्रोक्तो मार्जारस्तु कवर्गकः ॥ चवर्गः केशरी ज्ञेयो टवर्गः कुक्कुरः स्मृ-
तः ॥ १६ ॥ तवर्गस्सर्प्पसंज्ञस्स्यात् पवर्गो मूषको मतः ॥ यवर्गो हरिणस्त्वश्च
शवर्गो मेष उच्यते ॥ १७ ॥ गरुडोरगयोर्वैरं तथा मेष शुनोरपि ॥ मिथश्चाखुवि-

स० ए०
२६७

डा लस्यात् शार्दूल मृगयो स्तथा ॥ १८॥ स्ववर्गा त्पंचम श्रेष्ठान्तु भक्ष्य तुर्यो मित्र सं-
ज्ञकः ॥ उदासीन स्तृतीय स्तु वर्ग भेद स्त्रिधो च्यते ॥ १९॥ वर्गा रित्वे महद्दुःखं
वर्गे को प्रीति रुत्तमा ॥ कन्यका वरयो श्चैव स्वामि सेवक यो रपि ॥ २०॥ अथ वर्णप्री-
तिः ॥ मीनालि कर्कटा विप्राः क्षत्री मेषो हरि र्द्धनुः ॥ तुला द्वंद्व घटाः शूद्राः वृष क-
न्या मृगा विशः ॥ २१॥ नोत्तमा मुद्वहे त्कन्यां ब्राह्मणी च विशेषतः ॥ म्रियते हीन व-
र्णश्च ब्राह्मणा सदृशो यदि ॥ २२ ॥ वर्ण श्रेष्ठा च या नारी तस्या भर्त्ता न जीवति ॥ य-
दि जीवति चेद्भर्त्ता तदा पुत्रो न लभ्यते ॥ २३॥ अथ वश्यप्रीतिः ॥ युग्मं कुंभ स्तुला कन्या
मागदलं धनुषो द्विपात् ॥ परार्द्ध धनुष श्चैव पूर्वार्द्ध म्मकरस्य च ॥ २४ ॥ केशरी वृ-
ष भारव्य श्च मेष श्चैते चतुः पदाः ॥ मृगोत्तरं दलं मीनो जल चारी प्रकीर्तितः ॥
२५॥ कर्कटः कीट संज्ञश्च वृश्चिक स्तु सरी सृपः ॥ सिंहं विना वशा स्सर्वे द्विपदा-
नां चतुः पदाः ॥ २६॥ भक्ष्या जल चरास्तेषां भय स्थाने सरी सृपाः ॥ २७ ॥ अथ-

नारमैत्री ॥ कन्या भं वर भाद्गण्यं वधूभा द्वर भन्त्रा या ॥ नव हृच्छेष भेनेदं सप्त पंच त्रि


संख्य के ॥ २८ ॥ अथयोनिमैत्री ॥ अश्विनी प्रात अश्वाश्वौ माहिषौ स्वाति हस्त कौ ॥
पूर्वा धनिष्ठ योस्सिंहः भरण्या न्त भयो गजः ॥ २९ ॥ कृत्तिका पुष्ययो मेषः श्रुत्या
द्रा पादयोः कपिः ॥ ऊषा भि जिद्वयो र्वभ्रू रोहिणी मृग यो रहिः ॥ ३० ॥ ज्येष्ठानुरा-
धयो रेणः श्वा मूलार्द्रा भगो स्त्वया ॥ पुनरश्ले षयो र्वतु राखुः पूफा मघा द्वयोः ॥ ३१
॥ विशाखा चित्रयो र्व्याघ्रो गो रुफोत्तर भाद्र्योः ॥ मैत्रीवैर विचारार्थं भानां प्रोक्ता स्तु-
यो नयः ॥ ३२ ॥ गो व्याघ्रं गज सिंह मश्व महिषं श्वैणं च बभ्रूरगं वैरं वानर मेष
कं च सुमहत द्विडालो न्दुरम् ॥ लोकानां व्यवहारतो ऽन्य दपि च ज्ञात्वा प्रयत्ना
दिदं दम्पत्यो र्नृप भृत्ययो रपि सदा वर्ज्यं शुभस्यार्थिभिः ॥ ३३ ॥ अथ ग्रहमैत्री ॥ मि-
त्राणि द्युमणेः कुजेज्य शशिनः शुक्रार्कजौ वैरिणौ सौम्यश्चास्य समो विधो र्बुधर
वी मित्रे न चास्य द्विषत् ॥ शेषाश्चास्य समाः कुजस्य सुहृदः श्चंद्रेज्य सूर्या बुधः

शत्रुः शुक्र शनी समौ च शशभृत्सूनोःसिताहस्करौ ॥ ३४ ॥ मित्रे चास्य रिपुः शशी गुरु शनि क्ष्माजाः समाः गीष्पते र्मित्राण्यर्क कुजेन्दवो वुध सितौ शत्रू समः सूर्यजः ॥ मित्रे सौम्य शनी कवे श्शशिरवी शत्रू कुजे ज्यौ समौ मित्रःशुक्र वुधौ शनेः शशिरवि क्ष्माजाः द्विषोऽन्यः समः ॥ ३५ ॥ दंपत्यो राशिपो मैत्री मिथस्स्याच्छोभनन्तदा ॥ अहिते त्वहितं विद्यात्समे वै मध्यमं स्मृतम् ॥ ३६ ॥ अथ मैत्रीफलम् ॥ नवर्ग वर्णो न गणो न योनि र्द्विद्वादशे नैव षडष्टकेवा ॥ तारा विरुद्धे नवपंचमेवा मैत्री यदा स्याच्छुभदो विवाहः ॥ ३७ ॥ अथ गणमैत्री ॥ हस्तस्त्वती श्रुतिः पुष्योऽनुराधा रेवती द्वयम् ॥ पुनर्वसु र्मृगश्चैवः प्रोच्यते देवता गणः ॥ ३८ ॥ तिस्रः पूर्वा उत्तराश्च तिस्रोऽप्यार्द्रा च रोहिणी ॥ भरणी च मनुष्याख्यो गणोयः कथितो वुधैः ॥ ३९ ॥ कृत्तिका च मघाश्लेषा विशाखा शततारका ॥ चित्रा ज्येष्ठा धनिष्ठा च मूलं रक्षोगणःस्मृतः ॥ ४० ॥ स्वगणे परमा प्रीति र्मध्यमा देव मर्त्ययोः ॥ मर्त्यराक्षसयो र्मृत्युः

कलहो देव रक्ष सोः ॥ ४१ ॥ राक्षसी तु यदा नारी पुरुषो मानवो भवेत् ॥ विवा-
हिताष्टमे मासि साच भक्षयते पतिं ॥ ४२ ॥ अथ गणदोषापवादः ॥ मैत्र्यां राशी शयोरं
श स्वामिनो वरकन्ययोः॥ न तत्र गण दोष स्स्याद्विवाह श्शुभ दो मतः ॥ ४३ ॥ रक्षो-
नाख्य गणा नारी चेत्त दो ह्युद्वहनं तयोः ॥ योनि मैत्र्या दिना कार्य्य मिदं गर्गादि भाषितम्
॥ ४४ ॥ अथ राशिकूटम् ॥ राश्योः षड्डाष्ट के मृत्यु स्त्रि कोणे त्वन पत्यता ॥ नैध्नं द्विद्वाद
शे ज्ञेयं सौख्य मन्यत्र चोभयोः ॥ ४५ ॥ कुमार्य्या विषमा द्राशेः षष्ठं तु वर संन स
त् ॥ समाद्राशेः शुभं षष्ठं विपरीत मसत्स्मृतम् ॥ ४६ ॥ वरस्य पञ्चमे कन्या कन्या
या नवमे वरः ॥ एतत्त्रि कोणकं ग्राह्यं पुत्र पौत्र सुखावहम् ॥ ४७ ॥ अथ कूटापवादः ॥
भोक्ते दुष्ट भ कूटे ऽपि राश्यो रेकाधि पत्यके ॥ मैत्र्यंशो पनयः श्रेष्ठो ह्येक नाडी न चेत्तयोः
॥ ४८ ॥ तुला वृष भयोर्म्मीन सिंहयोः कुंभ कन्ययोः ॥ धनुः कर्कट यो र्न्नक्र युग्म योश्चा
लि मेषयोः ॥ ४९ ॥ प्रीतिः षष्ठाष्ट कं चैत त्तदन्य त्त्याज्य मेवहि ॥ ५० ॥ राशि पौ वैर भावे

ऽपि मैत्री चेत्स्यात्तदं पत्योः ॥ नाडी वश्येतु ताराणां शुद्धा वुद्ध हन्नं स्मृतम् ॥ ५१॥ भा-
मिनी जन्म नक्षत्रा द्वितीयं पतिजन्म भम् ॥ न शुभं भर्तृ नाशाय कथितं ब्रह्म यामले
॥ ५२॥ अथ नाडी शुद्धिः ॥ ज्येष्ठा मूलाश्वि भार्द्रा ख्या द्वयं प्रत भिषा द्वय म् ॥ उत्तरा फाल्गु
णी युग्मगाद्या नाडी यमीरिता ॥ ५३ ॥ चित्रा पुष्यो ऽनुराधा च धनिष्ठा भरणी मृगः
॥ पूर्वा पाढो त्तरा भाद्र पूफा षा मध्य नाडिका ॥ ५४ ॥ रोहिणी कृत्तिका श्लेषा मघा स्वा
ती द्वयन्त षा ॥ रेवती चोत्तरा षाढा श्रवणा श्चांत्य नाडिका ॥ ५५॥ दंपत्यो रेक नाडी-
स्थे ऋक्षे नेष्टः करग्रहः ॥ मध्य नाडी गते मृत्यु स्तस्मा त्तां सर्व था त्यजेत् ॥ ५६ ॥
अथ नाडी दोषापवादः ॥ राश्येके भिन्न भेष्वेके अन्य राशौ तयेकभे ॥ भिन्नेंऽशौन द्वयो
र्दोषा गण नाडी भकूट जाः ॥ ५७ ॥ अथैकभेऽपि विशेषः ॥ विशाखार्द्राश्रवः पुष्यो रो-
हिण्युत्तर भाद्र पात् ॥ रेवती च मघा श्रेष्ठं नेतरश्चैक भे द्वयोः ॥ ५८ ॥ अथ नाडी वि-
षये विशेषः ॥ उक्तंनारदेन ॥ चतुस्त्रिद्व्यंघ्रि भोत्थायाः कन्यायाः क्रमशोऽश्वि भात् ॥

वन्हि भा विंदुभा न्नाडी त्रि चतुः पंच पर्वसु ॥ गणयेत्संख्य या चैक नाड्यां मृत्यु
र्न संशयः ॥ ५९ ॥ एक नाडी विवाह श्च गुणैः सर्वैस्समन्वितः ॥ वर्जनीयः प्रय
त्नेन दंपत्यो र्निधनं यतः ॥ ६० ॥ गर्गः ॥ चतुःपात्कन्यका ऋक्षं गणये दाश्विना
दिकम् ॥ त्रिभं सं व्याप सव्येन भिन्न पर्व शुभावहम् ॥ ६१ ॥ कन्यका भं त्रिपा
त्चेत्स्या द्गणये त्कृत्तिका दिकम् ॥ चतुर्भिः पर्व भिस्त द्वदभिजित्तारकान्वितम्
॥ ६२ ॥ कन्यका र्क्षं द्विपात्चेत्स्या द्गणयेत्सौम्य भादिकम् ॥ पंच भिस्त्व वरो हेतु पं
चमांगुलि वर्जितम् ॥ ६३ ॥ चतुर्नाडी त्व हल्यायां पांचाले पंच नाडिका ॥ त्रि
नाडी सर्व देशेषु वर्ज्जनीया प्रयत्नतः ॥ ६४ ॥ अथ नाडी विचारे चंडेश्वरः ॥ पृष्ठ म
ध्ये शुभ समन्वितःभोगः क्रोडे वनिता वित्त वियोगः ॥ मध्य रेखे भवति विवाहे उ
भयो र्मरणं वदति वराहः ॥ ६५ ॥ अश्व्यादि नाडी वेध र्क्षं क्रमात्पष्ठ द्वितीय कम्
॥ याम्यादि तुर्य तुर्यंच कृत्तिकादि द्वि षष्ठ कम् ॥ ६६ ॥ अर्के न्दुज क्षोणि तनूज

जीवाः केतुः सितो राहु श्शशांकश्शौराः॥ जन्मादि नाडी त्रितये शुभा स्स्युः शुभेशुभं
स्याद शुभेऽशुभंच्च ॥ ६७ ॥ तद्यथा अर्कः १। १०। १९ बुधः २। ११। २० भौमः ३।
१२। २१। गुरुः ४। १३। २२। केतुः ५। १४। २३ शुक्रः ६। १५। २४। राहुः ७। १६। २५
चंद्रः ८। १७। २६। शनिः ९। १८। २७ अथ नाड्यादि दोषे दानानि॥ हेमाज्य रत्न गो
दानं मृत्युञ्जय जप स्तथा ॥ कुर्य्यादावश्यको द्वाहे नाडी दोषा पनुत्तये ॥ ६८ ॥ ता
म्रन्द्विद्वादशो दद्या त्सुवर्णञ्च षडष्टके ॥ गोयुगन्नव पञ्चाख्येस्वर्णं वर्णादि दोषजे
॥ ६९॥ हेमान्नं वसनं धेनुं सर्व दोषा पनुत्तये ॥ ७०॥ अथ वश्यादि गुणाः ॥ एकैक
वृद्धितो ज्ञेया वर्णादीनां गुणाः क्रमात् ॥ विवाह श्शुभदस्तेषां गुणो त्वष्टादशा-
धिके ॥ ७१ ॥ अथ जन्म कालिक भौम दोषः ॥ लग्ने व्यये च्च पाताले यामित्रे चाष्टमे
कुजे ॥ कन्या भर्तृ विनाशाय भर्ता कन्या विनाशकः ॥ ७२ ॥ एवं विधे कुजे
संस्थे विवाहो न कदाचन- ॥ कार्य्यो वा गुण बाहुल्ये कुजे वा तादृशे द्वयोः ॥ ७३॥

॥ अथ त्रिविधो विषयोगः ॥ कन्यायां सूर्य्य भौमार्कि वारेषु तिथि भद्रा प्राता ऽश्विधम् ॥ अश्लेषा कृत्तिका चेत्स्या त्तत्र जाता विषांगना ॥ ७४ ॥ अथ द्वितीयः ॥ तनु लग्ने रिपु क्षेत्रे संस्थितः पाप खेचरः ॥ द्वौ सौम्या वपि योगे ऽस्मिन्संजाता विष कन्यका ॥ ७५ ॥ अथ तृतीयः ॥ लग्ने शनैश्च रोय स्या स्सुते ऽर्को नवमे कुजः ॥ विषाख्या सापिनो द्दाह्या त्रिविधा विष कन्य का ॥ ७६ ॥ अथ कन्यादोषाप वादः ॥ सावित्र्या दि व्रतं कृत्वा वैधव्य विनिवृत्तये ॥ अश्वत्थादि भि रुद्वाह्य दद्या त्तां चिरजीविने ॥ ७७ ॥ अथ जन्म कालिक दुष्ट नक्षत्र फलम् ॥ मूलजाश्व शुरं हंति ज्येष्ठाजा स्त्वथ वा गूजम् ॥ कन्यका तु विशाखो त्था नि हन्या देव रंस्त्व कम् ॥ ७८ ॥ अस्याप वादः ॥ अश्लेषा प्रथमः पादः पादो मूलांति मस्तथा ॥ विशाखा ज्येष्ठ यो राद्य स्त्रयः पादा अशु भावहाः ॥ ७९ ॥ इति वधूवरयो र्मेला पक विधिः ॥ अथ वाग्दानम् ॥ धरणि देवो ऽथ वा कन्य का सोदर श्शुभ दिने गीत वाद्या दिभि स्संयुतः ॥ वर वातिं वस्त्र यज्ञो पवी तादि ना श्रव

युते वीन्हि पूर्वात्रेये रा चरेत् ॥ ८० ॥ अथ कार्य्यविशेषे जन्म नामस्थितेः प्रधानता ॥ अ-
ज्ञात जन्म नो नृणां नाम भे परि कल्पना ॥ तेनैव चिंतये त्सर्वं राशि कूटं हि जन्म
वत् ॥ ८१ ॥ जन्म भं जन्मधिष्ण्येन नाम भं नामाधिष्ण्यतः ॥ व्यत्ययेन यदा योज्यं न्य-
स्य स्योर्निधनं परम् ॥ ८२ ॥ देश ग्राम गृह द्यूत व्यव हारे रणे ज्वरे ॥ दाने मंत्रे च से-
वायां काकिन्यां वर्ग योजने ॥ ८३ ॥ पुनर्भे मेलने ज्ञेया नाम राशेः प्रधानता ॥ अ-
तोन्यत्र विवाहादौ प्राधान्यं जन्म भस्य हि ॥ ८४ ॥ अज्ञात जन्म धिष्ण्ये तु नाम भा देव
चिंतयेत् ॥ जाया पत्यो र्भकूटाद्यं गोचरा रव्यं खिलं तथा ॥ ८५ ॥ एकस्यादि ह दम्पत्यो
र्ज्ञाते जन्म भे तथा ॥ जन्म भा द्गुरु शुद्ध्यादि मेलनं नाम भा त्तयोः ॥ ८६ ॥ अथ विवाह
संवत्सरादि शुद्धिः ॥ गर्भाजन्म दिना द्वापि ह्यय नाख्यं च मा स्यरम् ॥ आद्य प्राब्दे तु कन्याया
विवाहः सम वत्सरे ॥ ८७ ॥ विशेषः ॥ षडब्द मध्ये नो ह्याह्या कन्या वर्ष द्वयं यतः ॥ सो
मो भुंक्ते ऽथ गांधर्व स्ततः पश्चा द्धुता शनः ॥ ८८ ॥ अष्ट वर्षा भवे द्गौरी नव वर्षा-

च रोहिणी ॥ दश वर्षा भवेत्कन्या अत ऊर्द्ध्वं रजस्वला ॥ ८९ ॥ गौरीन्ददद्ब्र-
लोकं सावित्रं रोहिणीं ददत् ॥ कन्यां ददद्ब्रह्मलोकं मतः परमसद्गतिम् ॥ ९० ॥ मासत्रया
दूर्द्ध्वमयुग्मं वर्षे युग्मे तु मासत्रयमेव यावत् ॥ विवाहशुद्धिं प्रवदन्ति सन्तो वात्स्याद-
योगर्गपराहमुख्याः ॥ ९१ ॥ विशेषः ॥ ज्ञेया गुरुवला गौरी रोहिणी भानुमद्बला ॥
कन्या चन्द्रवला ह्यास्या ततो लग्नवलेतरा ॥ ९२ ॥ अथ विवाहे गुरु रवि चन्द्र वलम् ॥
गुरोर्वलं तु कन्याया वरस्याथ वलं रवेः ॥ ग्राह्यं परिणये प्राज्ञैः वलं चन्द्रात्तयो-
र्भयोः ॥ ९३ ॥ अथ कन्या वरयो गुरु वलम् ॥ कन्याया ग्रहशुद्धिश्च दशवर्षावधिस्मृ-
ता ॥ दशवर्षव्यतिक्रान्ता कन्या शुद्धिविवर्जिता ॥ ९४ ॥ तस्यास्तारेन्दु लग्नानां
शुद्धो पाणिग्रहो मतः ॥ जन्मराशौ गुरुः श्रेष्ठः पञ्चमो नवमो द्विगः ॥ ९५ ॥ एकादश
शः सप्तमस्थः कन्याया श्च वदोवतम् ॥ त्रिषट् दशाय गो मध्यो नेष्टस्तु व्ययोऽष्टमो-
ऽत्यगः ॥ ९६ ॥ एकया पूजया मध्यस्तुर्य्योऽन्त्यो द्विगुणार्च्चया ॥ कालातिक्रमणे-

...धनात् ॥ ९७ ॥ गुरुस्त्वोच्चेस्व मैत्रे वास्त भे वर्गोत्तमे ऽपिवा
...दमों ऽत्यो ऽपि न चारिस्थ श्शुभो प्यसत् ॥ ९८ ॥ वक्रातिचार गोवा
...यस्मिन् राशौ समागतः ॥ तद्राशिजं फलं धत्ते जीवो नो पर राशिजम् ॥ ९९ ॥
कन्यायाः विशेषः ॥ नष्टात्मजा १ धनवती २ विधवा ३ कुशीला ४ पुत्रान्विता ५ पररता
६ सुभगा ७ विपुत्रा ८ स्वामिप्रिया ९ विगत कोश धना १० धनाढ्या ११ वंध्या १२
भवेत्सुरगुरौ क्रमशो विवाहे ॥ १०० ॥ कस्यचिन्मते विशेषः ॥ अष्टमे द्वादशे वापि च-
तुर्थे वा बृहस्पतौ ॥ पूजा तत्र न कर्त्तव्या विवाहः प्राण नाशकः ॥ १०१ ॥ षष्ठे जन्म
नि देवेज्ये तृतीये दशमे ऽपिवा ॥ भूरिपूजा पूजितश्च कन्याया श्शुभकारकः ॥ १०२
॥ एकादशे द्वितीये वा पंचमे सप्तमे ऽपिवा ॥ नवमे च सुराचार्य्ये कन्यायाः कथित-
श्शुभः ॥ १०३ ॥ अथ वरस्य रविबलम् ॥ तृतीयः षष्ठग श्चैव दशमै कादश स्थितः
रविःशुद्धो निगदितो वरस्यैव करग्रहे ॥ १०४ ॥ जन्मस्थे च द्वितीयस्थे पंचमे सप्तमेऽ

सं.रि. ९८

पिवा ॥ नवमे भास्करे पूजां कुर्य्यात्पाणि गृहोत्सवे ॥ १०५ ॥ चतुर्थे वाष्टमे चैव द्वा-
दशे भास्करे स्थिते ॥ वरः पञ्चत्व माप्नोति कृते पाणि गृहोत्सवे ॥ १०६ ॥ कालाति
क्रान्ते विशेषः ॥ रवि त्रि षट् दशगा यस्यो वरस्यो द्वाहने शुभः ॥ मध्यः पंच द्वि सप्तैक
नवगः पूजयोत्तमः ॥ १०७ ॥ द्वि रव्यो द्वादश स्तुर्य्योः यास्तम स्त्रि गुणा र्चनात् ॥
आयो भयो श्चंद्र वलम् ॥ ग्राह्यं प्रागुक्त मुद्वाहे द्वयो श्चांद्रस संवलम् ॥ १०८ ॥ अथ जन्म
मासादि दोषापवादः ॥ स्वजन्म मास र्क्षतिथि क्षणेषु वे नाशिका दक्ष गणेषु चैव म-
॥ नो द्वाह मात्मा भ्युदया भि कांक्षी नैवाद्य गर्भ द्वितयं कदाचित् ॥ १०९ ॥ जन्म मा-
सादि के ज्येष्ठे विवाहो वर कन्ययोः ॥ आद्य गर्भ भवो ने ष्टो ना नाद्य जनयो स्तयोः ॥
॥ ११० ॥ त्रिज्येष्ठं नेष्ट मुद्वाहे द्विज्येष्ठं मध्यमं स्मृतम् ॥ कृत्तिका स्थे रवौ केचि त्रिज्येष्ठं
तु शुभं जगुः ॥ १११ ॥ अथ केषां चिन्मते विशेषः ॥ नेष्टं स्युद्वहनं केचि ज्ज्येष्ठयो स्तु परस्पर-
म् ॥ पुत्रो द्वाहात्तु षण्मासान् नो कन्या कर पीडनम् ॥ ११२ ॥ मुंडना न्मुडनं वापि - २

कुले सप्तम तोऽन्यथा ॥ सीमन्तो द्वाहनं चौलं केशान्तं व्रत बंधनम् ॥ ११३ ॥ गुरु
मंगल मे तत्स्यात्तदन्य लघु मंगलम् ॥ गुरु मंगल तो नेष्टं षण्मासा लघु मंगलम् ॥
॥ ११४ ॥ शुभ त्रयं तथा पित्र्यं कृत्यं स्वीय कुलेन सत् ॥ सहोदर प्रसूतानां भ्रातॄणां
च सम क्रिया ॥ ११५ ॥ षण्मासाभ्य न्तरे नेष्टा कन्यकानां तथैव च ॥ प्रागुक्तं मं-
गलं कुर्य्यादब्द भेदेऽथवा पुनः ॥ ११६ ॥ चतुर्दिना न्तरे वापि संकटे तु दिनान्तरे ॥
एकाहेऽपि न कुर्वीत सरि त्रिरि गृहान्तरे ॥ ११७ ॥ तथा मण्डप भेदेन लग्न भेदे य-
थोदितं ॥ यमयोस्तु विशेषोऽयं कार्य्या स्सर्वा स्सह क्रियाः ॥ ११८ ॥ एकोदरस्तु-
तयोरेक स्मै कन्य का द्वयम् ॥ नदेयं न च देये च सोदराभ्यां सहोदरे ॥ ११९ ॥ वि-
वाह निश्चया दूर्द्धं कुले वध्वा वरस्य च ॥ पित्रादेर्म्मरणे याते विवाहो न तयोः शु-
भः ॥ १२० ॥ अथ वा वत्सरा दूर्द्धं मास षट्काद्धोऽपि वा ॥ नासौर्द्धं सूत कान्ते वा-
शान्त्या प्रास्तः कर गृहः ॥ १२१ ॥ अथ विवाहे शुभ मासाः ॥ मेष वृश्चिक कुम्भेषु मक

शि
८०

रे मिथुने वृषे ॥ रवौ पाणि ग्रहः श्रेष्ठः युग्मे विस्तु शया वधि ॥ १२२॥ वैशाखः फाल्गुणो माघो ज्येष्ठ श्चैते शुभ प्रदाः ॥ मासा उद्वहने मार्गोन ध्यो ऽन्ये त्व शुभा मताः ॥ १२३॥ वृश्चिके मकरे मेषे विद्यमाने दिवा करे ॥ कार्त्तिकः पौष चैत्रो वा विवाहे त्वेव शोभनाः ॥ १२४॥ मार्ग शीर्षे धनुष्य र्के मीनार्कः फाल्गुणे शुभः ॥ सौरेत्र विवाहा दौ मासः सर्वत्र शस्यते ॥ १२५॥ चान्द्रो मासस्तु विंध्याद्रे भगि दक्षिणा के मतः ॥ योग स्तयो र्विवाहा दौ शोभन स्सौर चान्द्र योः ॥ १२६॥ अथ विवाहे तिथि वार नक्षत्राणि ॥ षष्ठी दर्शो ऽष्टमी रक्ता कृष्ण पक्षा न्त्य पञ्च कम् ॥ शुक्लाच्चेत्प्रति पन्नेष्टा तिथयो ऽन्ये तु शोभनाः ॥ १२७॥ सौम्या वारा श्शुभा मध्या स्सूर्य्य मन्द कुजा धमाः ॥ रोहिण्यां त्र्युत्तरे मूले ऽनु राधा रेवती मृगे ॥ १२८॥ हस्ते स्वातौ मृगा क्षीणां शोभनं कर पीड नम् ॥ सत्सूदा पूर्व फाल्गुण्यां नो लभेच्छं ततो न सत् ॥ १२९॥ पुष्योपि काम योषि त्वा च्छा पमाप प्रजा पतेः ॥ अथ विवाहे दश महा

दोषाः ॥ लत्ता पातो युति र्वेधो या मित्रं वुध पंचकम् ॥ एकार्गलो पग्रहौ चक्रांति साम्यं ततः परम् ॥ १३० ॥ दग्धा तिथिं च विज्ञेयं दश दोषा महा वलाः ॥ एतान्दो- या न्परि त्यज्य लग्नं संशोध ये द्बुधः ॥ १३१ ॥ अथ लत्ता ॥ नक्षत्रं द्वादशं भानु स्तृ- तीयं लत्तया कुजः ॥ षष्ठ स्तीवोऽष्ट म स्मन्दो हन्ति दक्षिण त स्सदा ॥ १३२ ॥ वामे- न सप्तमं चान्द्री नवमे सिंहिका सुतः ॥ हन्ति भं पंचमं शुक्रो द्वादशं पूर्ण चन्द्रमाः ॥ १३३ ॥ रवे र्लत्ता हरे द्वित्तं कुजस्य कुरुते क्षतिम् ॥ वृहस्पते र्वन्धु नाशं शनेः कु- र्यात्कुल क्षयम् ॥ १३४ ॥ वुधस्य कुरुते त्राशं लत्ता राहो र्विना शनम् ॥ शुक्र- स्य दुःखदा नित्यं त्राश दा च कला निधेः॥ १३५ ॥ अथ पातः ॥ सूर्य्य युतास्च नक्ष- त्रा देषु पातो विधीयते ॥ मघा श्लेषा च चित्रा च सानुराधा च रेवती ॥ १३६ ॥ श्र- वणोपि च षड्ढेयं पात दुष्टं निगद्यते ॥ अश्विनी मवधिं कृत्वा गणये ल्लग्न मा वधिं ॥ १३७ ॥ पावकः प व मान श्च विकारी कलहो परः ॥ मृत्युः क्षय श्च विज्ञेयः

मु.शि. ९८२

पात षट्कस्य लक्षणम् ॥ १३८ ॥ पातेन पतितो ब्रह्मा पातेन पतितो हरिः ॥ पाते-
न पतित ऋक्षम्तु स्तस्मात्पातं विवर्जयेत् ॥ १३९ ॥ अथ युतिदोषः ॥ यत्र राशौ
भवेच्चन्द्रो ग्रह स्तत्र यदा भवेत् ॥ युति दोष स्तदा ज्ञेयो विना शुक्र म्शुभा शुभः ॥
१४० ॥ रविणा संयुतो हानि भौमे न निधनं शशिः ॥ कुर्वन्ति मूल नाशं च राहुके-
तु शनै श्वराः ॥ १४१ ॥ अथ वेधः ॥ वधू प्रवेशने दाने वरणे पाणि पीडने ॥ वेधः
पंच शलाकाख्योऽन्यत्र सप्तशलाककः ॥ १४२ ॥ रेखाः पंचोर्द्ध गास्तिर्य गद्वे द्वे
रेखे च कोणयोः ॥ चक्रं पञ्चशला काख्यं विवाहे वेध साधनम् ॥ १४३ ॥ द्वितीय
द्वितय रेखा तस्मा भिजि त्कृतिका दिकम् ॥ लिखे त्सव्य क्रमात्तत्र ग्रहा देया यथाय
थम् ॥ १४४ ॥ एकरेखा स्थितो विद्धा दिन नाथा दयो ग्रहाः ॥ विवाहे तत्र मासंतुन
जीवति कदाचन ॥ १४५ ॥ अश्विनी पूर्व फाल्गुण्या भरणी चानुराधया ॥ अभि-
जिच्चापि रोहिण्या कृत्तिका च विशाखया ॥ १४६ ॥ मृगा च्चोत्तर षाढेन पूर्वाषाढात- ९८

संवि
१८३

थार्द्रया ॥ पुनर्वसु श्च मूलेन तथा पुष्य श्च ज्येष्ठया ॥ १४७ ॥ धनिष्ठया तथाश्ले
षा मघा पि श्रवणो नच ॥ रेवत्युत्तर रोहिण्या हस्ते नोत्तर भाद्र पात् ॥ १४८ ॥ स्वा
त्या शत भिषा विद्धा श्चित्रया पूर्व भाद्र पात् ॥ विद्धान्येतानि वर्ज्यानि विवाहे भानि-
को विदैः ॥ १४९ ॥ रवि वेधेच वैधव्यं कुज वेधे कुल क्षयः ॥ बुध वेधे भवे द्वंध्या प्रव-
र्ज्या गुरु वेधतः ॥ १५० ॥ अपुत्रा शुक्र वेधेच्च सौरे चन्द्रे च दुःखिता ॥ पर पुरुष रता
राहो केतो स्वच्छन्द चारिणी ॥ १५१ ॥ अथ यामित्र दोषः ॥ चतुर्दशं च नक्षत्रं यामित्रं
लग्न भात्स्मृतम् ॥ शुभ युक्तं तदिच्छंति पाप युक्तं च वर्जयेत् ॥ १५२ ॥ चन्द्र श्चान्द्री
शुक्र जीवौ यामित्रे शुभ कारकम् ॥ स्वर्भानु भानु मंदारा यामित्रे चा शुभ प्रदाः ॥
१५३ ॥ चंद्रा द्वा लग्न तो वापि गृहा वर्ज्या श्च सप्तमे ॥ तत्र स्थिता गृहा नूनं व्याधि वै
धव्य कारकाः ॥ १५४ ॥ अथ बुध पञ्चकम् ॥ पाद्यां तिथि १५ मास १२ दशा २०८ ८
वेदा ४ संक्रान्ति तो जात दिने स्वर योज्याः ॥ ग्रहै र्विभक्ता यदि पञ्चकं स्या द्रोगास्त-

१८३

याग्नि नृप चौर मृत्युः ॥ १५५ ॥ अन्यच्च ॥ तिथि वार भलग्नां कोरसा ग्न्यजा-
स्र वेद युक् ॥ नन्दाप्त पंच शेषे रुक् वन्हि राट् चौर मृत्यु कृत् ॥ १५६ ॥ शेषे के-
नव भि र्भक्ते पंच शेषे स शल्यकं ॥ अथ दाक्षिणात्य प्रसिद्ध पंचकं ॥ मुक्ता याः स्तिथयो
याता लग्नाख्या भाजिता ग्रहैः ॥ शेषे स्र द्वि चतु स्तर्क भूमिते वाण पचकं ॥ १५७
रोगोग्नि र्नृपति श्चौरो मृत्यु श्चेति यथा क्रमात् ॥ प्रसिद्धं दक्षिणा त्यानां शुभे का-
र्ये विवर्ज्जयेत् ॥ १५८ ॥ रोगं चौरं त्यजे द्रात्रौ दिवा राज न्य पंचकम् ॥ संध्य
यो र्म्मृत्यु दं त्याज्यं सर्वदा वन्हि पंचकम् ॥ १५९ ॥ रवौ रोगं कुजे वन्हिः शनौ
च नृप पंचकम् ॥ वर्ज्यं पुनः कुजे चौरं बुध वारे च मृत्यु दम् ॥ १६० ॥ नृपा-
ख्यं नृप सेवायां गृह गोपेऽग्नि पंचकम् ॥ याने चौरं व्रते रोगं त्यजे न्मृत्यु कर
ग्रहे ॥ १६१ ॥ लग्ने पूर्ण वलो पेते न दोषः पंच कस्य च ॥ १६१ ॥ अथैकार्गल दो-
षः ॥ योगां के विषमे सैके साश्वा विंशति के समे ॥ तदार्द्धं संख्य भं मूर्द्धि चक्रे

संग्रि खार्जूरिके न्यसेत् ॥ १९२ ॥ अथैतस्योदाहरणं ॥ व्यतीपाते भ मश्लेषाव्या
१९५ घाते च पुनर्वसुः ॥ शूले गंडे नुराधाच मूर्द्धि भं परिघे मघा ॥ १९३ ॥ विष्कुंभे-
चाश्विनी पुष्यो वज्रे चित्रा तु वैधृतौ ॥ तथा मूले स्मृतो गंडे मूलभं मूर्द्धि कीर्त्तितं ॥
१९४ ॥ योगाख्ये तेषु संभूतिर्नान्येष्वेकार्गलस्य च ॥ अथैतस्य चक्रम् ॥ एका चोर्द्ध
गता रेखा तिर्यक् कार्यास्त्रयोदश ॥ मूर्द्धिभं मूर्द्धि विन्यस्य साभिजित्तत्तनोन्य-
सेत् ॥ १९५ ॥ एकार्गलो मिथश्चैकरेखागश्चेद्धि धूरविः ॥ विवाहादि शुभे कार्ये
नेष्टस्त्वेकार्गलाभिधः ॥ १९६ ॥ अथोपग्रहदोषः ॥ सूर्यभात्पंचमे विद्युन्नक्षत्रे शू
ल सप्तमे ॥ चतुर्दशे शनेः पातः केतुरष्टादशे तथा ॥ १९७ ॥ ऊनविंशो भवेदु-
ल्कानिर्घातश्च द्विविंशतौ ॥ त्रयोविंशतिके कंपश्च तु विंशे च वज्रकः ॥ १९८ ॥
दिक् सप्त तिथि तत्त्वाख्य स्वर्ग संख्यानि भानि च १०।७।१५।२४।२१ ॥ एता-
न्यपि जगुश्चोपग्रहर्क्षाणीति केचन ॥ १९९ ॥ पुनर्नाष्टकरी विद्युच्छूलः पुनर्वि- १९५

नाशकः ॥ शनेः पातो वंश घातः केतोर्द्देवर नाशकः ॥ १७०॥ द्रव्य नाश करी चोल्का निर्घातो बंधुनाशकः ॥ कंपः कंपयते नित्यं वज्रे स्त्री व्यभिचारिणी ॥ १७१ ॥उप ग्रहे षु लत्तायां तथा चण्डा युधा ह्वये ॥ ग्रहो ऽस्ति यत्र भ्याणां शो विद्वांशास्त त्प्रमाण कः ॥ १७२॥ अथ क्रांतिसाम्य दोषः ॥ ऊर्द्ध स्तिस्त्र स्तिरस्ति स्रो सध्ये मीनं लिखे द्बुधः ॥ सूर्य्ये चन्द्र मसो दृष्ठे क्रांति साम्यं निगद्यते ॥ १७३ ॥ मीनः कन्यकया युक्तो मेष स्सिंहे न संगतः ॥ मकरे च वृषः क्रांतिः चापो ऽपि मिथुने न च ॥ १७४ कर्क वृश्चिकयो र्वेधो वेधश्च तुल कुंभयोः ॥ क्रांति साम्ये कृतो द्वाहे न जीवति कः दाचन ॥ १७५ ॥ अथ दग्धा दोषः ॥ द्वितीया धन मीने षु चतुर्थी वृष कुंभयोः ॥ मेष कर्कट योः षष्ठी कन्यायां मिथुने ऽष्टमी ॥ १७६ ॥ दशमी वृश्चिके सिंहे द्वादशी मकरे तुले ॥ एतास्तु तिथयो दग्धा श्शुभे कर्म्मणि वर्ज्जिताः ॥ १७७ ॥ अथ दृग्ध दोषाः ॥

|  | ११ | १२ | १ |
|---|---|---|---|
| १० | क्रां | ति | २ |
| ९ | सा | म्यं | ३ |
| ८ | ७ | ६ | ५ ४ |

तिर्य्यगा वेदे क दिगून विंशश्लन्यं भवाख्या दश विंश संख्याः ॥ दृष्टो डुना सूर्ययुक्तो
डुना च योगा दमी चेद्दश योग दोषाः ॥ १७८ ॥ मरुन्मे घाग्नि भूपाल चौर मृत्यु रु-
जो शनिः ॥ कलि र्हानि र्दशो ह्याहे दोषा स्त्याज्या सदा बुधैः ॥ १७९ ॥ योगां
के विषमे सैके समे सव सुलोचने ॥ दत्ती कृत्वा श्विनी पूर्वं दश योगा मुदाहृतम् ॥
१८० ॥ दश योगे महाचक्रे प्रमादाद्यदि विध्यते ॥ क्रूरे सौम्य गृहे वापि दंपत्यो रे-
क नाशनं ॥ १८१ ॥ अथ दश दोषापवादः ॥ गुरौ लग्नाधिपे शुक्रे सवीर्ये लग्न केंद्रगे ॥
दश दोषा विनश्यंति यथाग्नो तूल राशयः ॥ १८२ ॥ गुरुणा भृगुणा चापि संयुक्तो
दृष्ट मेव च ॥ दश योग समायुक्त मपि लग्नं शुभावहम् ॥ १८३ ॥ एकार्गलोपग्रह
पात लत्ता या मित्र कर्त्तर्य्युदया स्तदोषाः ॥ नश्यन्ति चन्द्रार्क वलोप पन्ने लग्ने यथा
कश्युदयेतु दोषाः ॥ १८४ ॥ उपग्रह र्क्षं कुरु वाल्हि केषु कलिंग वंगेषु च पाति
त तस्भम् ॥ सौराष्ट्र साल्वेषु च लत्ति तं भंत्यजेत्तु विद्धं किल सर्व देशे ॥ १८५ ॥

श्चि लता मालव के देशे पातः कोशल के तथा ॥ एकार्गलन्तु कास्मीरे वेधं सर्वत्र व-
८८ र्ज्जयेत् ॥ १८६ ॥ युतिदोषो भवेद्गौडे यामित्रं स्यात्तु यामुने ॥ वेधदोषस्तु विंध्या
ख्ये देशे नान्येषु केचन ॥ १८७ ॥ अथ परः यमघंट योगः ॥ शैला ७ भुजयः सूर्ये ७।
५।४। चन्द्रे षट् ६ वेद ४ पर्वताः ॥ ७ ॥ भौमे वाणा ५ग्नि ३ नेत्राणि २ सौम्ये
वेदा ४ क्षि २ वायवः ५॥ १८८॥ गुरुवारे ग्नि ३ चंद्रे १ मा: ८ शुक्रे नेत्रा २ द्रि ७
वन्हयः ३ भानो चन्द्रे १ म ८ तर्काः ६ स्युः कुलिको यामघंटकः ॥ १८९ ॥ अ-
र्द्ध प्रहर संज्ञां स्तान्मंगलेषु विवर्ज्जयेत् ॥ निधनं प्रहरार्द्धे तु निस्स त्वं यमघंटके ॥
कुलिके सर्वनाशः स्यात् रात्रावेतेन दोषदाः ॥ १९० ॥ अथ कर्त्तरी दोषः ॥ लविग्ना
व्यययो १२ र्लग्नाच्चन्द्रा द्वापा परवे चरौ ॥ यदि स्यातां तदा ज्ञेया कर्त्तरी दोषका रि
का ॥ १९१ ॥ अथ महा कर्त्तरी ॥ धने क्रूरे ग्रहे वक्री व्यये मार्गी भवेद्यदि ॥ सा महा-
कर्त्तरी ज्ञेया प्रयत्नात्तां विवर्ज्जयेत् ॥ १९२ ॥ अथ दोषापवादः॥धने मार्गी व्यये व-

श्रि
२८

श्री वक्रौ वा मार्गगावु भौ ॥ लग्ने वा द्वादशे सौम्यो यदि चेत्कर्त्तरी नसा ॥ १२६३ ॥ शुक्र जीव बुधैः केन्द्र कोणगैः सान दुःखदा ॥ कर्त्तरी कारिका यासौ शत्रु नीच क्षगो यादि ॥ १२६४ ॥ अथ वास्तामितौ तत्र न दोषः कर्त्तरी भवः ॥ अथा परे दोषाः ॥ मर्म्मवेधः कंटक श्च शल्यं छिद्रं चतुर्थ कम् ॥ एत द्दोषं चतुष्कंच परित्याज्यं प्रयत्नतः ॥ १२६५ ॥ लग्ने पापे मर्म्म वेधः कंटको नव पञ्चमे ॥ चतुर्थे दशमे शल्यं छिद्रं भवति सप्तमे ॥ १२६६ ॥ मरणं मर्म्म वेधेस्यात् कंटके स्यात्कुल क्षयः ॥ शल्येच न्टपते भीतिः पुत्र नाशश्च छिद्रके ॥ १२६७ ॥ मासान्ते दिन मे कंतु तिथ्यन्ते घटिका द्वयम् ॥ नक्ष-त्रान्ते घटी त्रीणि विवाहादौ विवर्ज्जयेत् ॥ १२६८ ॥ अथ नक्षत्र विष घटिकाः ॥ खबा-णाश्च जिना स्त्रिंश न्खवेदा मनवः क्रमात् ॥ स्वर्गस्त्रिंश न्नखा दन्ताः खरामा विंश

| अ | भ | कृ | रो | मृ | आ | पु | पु | श्ले | म | पू | उ | ह | चि | स्वा | वि | अनु | ज्ये | मू | पू | उ | श्र | ध | श | पू | उ | रे |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ५० | २५ | ३० | ४० | १४ | २५ | ३० | २० | ३२ | ३० | २० | १८ | २१ | २० | १४ | १४ | १० | १४ | ५६ | २४ | २० | १० | १० | १८ | १६ | २४ | ३० |

तिर्धृतिः ॥ १९९ ॥ भूनेत्राः खयमाः शक्राः मनुका श्चाश्व तुर्दश ॥ षट्‌पञ्चाश-
ज्जिनाश्चैव विंशति श्च ककुप्‌दिशः ॥ २०० ॥ धृति र्भूपा जिनास्त्रिंशद्‌द्विभा
द्‌घटिकाः स्मृताः ॥ आभ्यश्च तुष्टयं त्याज्यं घटिकानां विषाभिधम्‌ ॥ २०१ ॥
सर्वर्क्ष घटिका भिश्च प्रोक्त र्क्ष घटिका हृताः ॥ षष्ठ्या भक्ताःस्फुटा नाड्य स्तथा स्यु र्वि-
ष नाडिकाः ॥ २०२ ॥ अथ तिथि विष घटि काः ॥ तिथि वाराग्र ह सप्ता गु पञ्च वेदाग्र
धराः ॥ दिग्वन्ह्यर्क मनुस्त्रा भृद्वसवो घटिकाः क्रमात्‌ ॥ २०३ ॥ आभ्यो घटी च-
तुष्कञ्च विषंप्रति पदा दितः ॥ अथ वार विष घटिकाः ॥ नख युग्मार्क दिक्‌ सप्त वाण
त्वमिताः क्रमात्‌ ॥ आभ्यो नाडी चतुष्कंच विषन्तद्‌ विवासरात्‌ ॥ २०४ ॥ ति-
थि विष नाडिका चक्रम्‌ ॥ सुबोधनार्थम्‌ ॥ अथ वार विष घटी चक्रम्‌ ॥ अथ विष नाडी दोषापवादः ॥

| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ | ०० | र | चं | मं | बु | बृ | शु | श |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १५ | ५ | ८ | ७ | ६ | ५ | ४ | ६ | ७ | १० | ३ | १२ | १४ | ७ | ८ | ०० | २० | २ | १२ | १९ | ७ | ५ | २५ |

कोण ९।५ स्ता ७ धि ४ नभः १० संस्थः सुहृत्सौम्ये स्थितोऽपिवा ॥ सद्भाशगो वा विधुः स्वांशे लग्ने वा केन्द्र १०।१।४।७। कोण गः ९।५।॥ २०५ ॥ निहन्यादखिलं दोषं विष नाडी समुद्भवम् ॥ अथ ग्रह दृष्टिः ॥ तृतीये दशमे पादं त्रिकोणेऽघ्रि द्वयं ग्रहः ॥ पश्येत्तुर्येऽष्टमे पाद त्रयं पूर्णन्तु सप्तमे ॥ २०६ ॥ पूर्णन्तु त्रिदशे मंदः पंचमं नवमं गुरुः ॥ भौमोष्टमं चतुर्थञ्च सप्तमं सकला ग्रहाः ॥ २०७ ॥ अथ लग्न शुद्धिः ॥ लग्ने लग्न लवे वापि लग्नांशेश युते स्थिते ॥ लवेश शुभ मित्रेण दृष्टे वा स्वामिना शुभः ॥ २०८ ॥ द्यूनांशे द्यून लग्ने वा द्यूनांशेश युते स्थिते ॥ द्यूनांश पति सन्मित्र दृष्टे वध्वा शुभं स्मृतम् ॥ २०९ ॥ लग्नेशो लग्न मंशेशः स्वांशं पश्यति वा मिथः ॥ तद्वरस्य शुभं ज्ञेय मन्यथा नैव शोभनम् ॥ २१० ॥ द्यूनेशेशः तथा स्वांश पति द्यूनांश मीक्षते ॥ तन्मिथो वा तथा वध्वाः शुभन्त्वितरथा नहि ॥ २११ ॥ नीच राशि गते शुक्रे शत्रुक्षेत्र गते पिवा ॥ भृगु षट्क स्थितो दोषो नास्ति तत्र न संशयः ॥ २१२ ॥ अस्तगे नीच गे भौ-

मे शत्रु क्षेत्र गते ऽपि वा ॥ कुजाष्टमोद्भवो दोषो न किंचिदपि विद्यते ॥ २१३ ॥ गुरुरेको
ऽपि केन्द्रस्थः शुक्रो वा यदि वा बुधः ॥ हरे स्स्मृति र्यथा हन्ति तद्द्दोषां स्त्रिकोण गाः॥२१४
लग्नोप ग्रह चण्डीशा चन्द्र या मित्र संभवान् ॥ तत्केन्द्र गो गुरुर्हन्ति सुपर्णः पन्नगा निव ॥
२१५ ॥ सक्रूर राश्री रशुभो नवांशः शोक्त स्स पापो ऽपि विलग्न संस्थः ॥ त्रिकोण केन्द्रे यु
गुरुः सितो वा यदा तदा सोव शुभो ऽपि शस्तः ॥ २१६ ॥ यत्रैकादश गः सूर्यो दोषानाशं
ययुस्तदा ॥ स्मरणा देव रुद्रस्य पापं जन्म शतोद्भवम् ॥ २१७ ॥ वर्गोत्तम गते लग्ने स-
र्वे दोषा लयं ययुः ॥ चन्द्रो वाप्यथ वाये ऽपि ग्रीष्मे तु शारितो यथा ॥ २१८ ॥ मुहूर्त ल-
ग्न षड्वर्ग कु नवांश ग्रहोद्भवाः ॥ ये दोषा स्तान्निहन्त्येव यत्रैकादश गः शशिः ॥ २१९
॥ नक्षत्र दोषं कु नवांश दोषं गंडांत दोषं च मुहूर्त दोषम् ॥ विरुद्ध पंचांग विरुद्ध दोषं
निशा करो लाभं गतो निहंति ॥ २२० ॥ त्रिकोणे केन्द्रे वा मदन रहिते दोष शतकं हरे
त्सौम्य श्शुक्रो द्विगुण मपि लक्षं सुर गुरुः ॥ भवे दाये केन्द्रेंग प उय लवे शो यदि तदा

समूहं दोषाणां दहन इव तूल शमयति ॥ २२१ ॥ अथ पंग्वंधादित्याज्यलग्नानि ॥ दिने सदान्धा वृषमेषसिंहाः रात्रौ च कन्या मिथुनं कुलीरः ॥ मृगास्तु लालि वधिरो पराह्ने संध्यासु कुब्जा घट धन्वि मीनाः ॥ २२२ ॥ दिवान्धो वर हंताच रात्र्यंधा धन नाशकाः ॥ दुःखदो वधिरो लग्नः कुब्जो वंश विनाशकः ॥ २२३ ॥ अथ होलाष्टकम् ॥ शुक्लाष्टमीं समारभ्य फाल्गुणस्य दिनाष्टकम् ॥ पूर्णिमामवधिं कृत्वा त्याज्यं होलाष्टकं शुभे ॥ २२४ ॥ ऐरावत्यां विपाशायां शतद्रौ च त्रिपुष्करे ॥ होलाष्टकं विवाहादौ त्याज्यमन्यत्र शोभनम् ॥ २२५ ॥ राशयो मास शून्याश्च लग्नं काणांध पंगुयत् ॥ तत्त्याज्यं मालवे गौडे नान्यत्र शुभदं स्मृतम् ॥ २२६ ॥ हन्या हिनाईजन्दोयं तिथिस्सिद्धा वनोद्भवम् ॥ गुरुः केन्द्रगतः शून्य तिथिजे लाभग श्शुभः ॥ २२७ ॥ अव्दायनर्तुमासोत्थाः पक्षनिष्यूह्स संभवाः ॥ काणांध वधिरीभूता दग्ध लग्न तिथे भवाः ॥ २२८ ॥ अकालजाश्चनीहार विद्युत्पाताभ्र संभवाः ॥ परिवेष मती सूर्य्य शक्रचाप ध्वजादयः ॥ २२९ ॥ दोष

भदा मंगलेष्टु कालजाश्चेन्न दोषदाः ॥ वृषभो वृश्चिको मीनः कन्या मकरकर्कटाः ॥
२३० ॥ लग्ने ष्वेतेषु नो दोषो जन्म नोष्ठ स्तमे ष्वपि ॥ अथ शुभनवांशाः ॥ कन्या युग्म तुला
धन्वि नवांशाः शुभदा ग्रहाः ॥ विवाहे न्येतु मीनस्य नवांशाः शुभदा जगुः ॥ २३१॥
अथभंगदाग्रहाः ॥ लग्ने षष्ठे ष्वरः सूर्यो लग्नारि निधने शशी ॥ लग्ने ऽष्टमे मही सूनुरष्ट-
मे बुधवाक्पती ॥ २३२॥ राहुस्तुर्ये विलग्ने वा निधनारिगतो भृगुः ॥ चूनेतु खेचरास्स
र्वे विवाहे भंगदाः स्मृताः ॥ २३३॥ कुजः खे द्वादशे मन्दो लग्नेशो निधनारिगः ॥ तृ-
तीये भार्गवश्चन्द्रो व्यये नैते ऽपि शोभनाः ॥ २३४॥ अथ रेखाप्रदा ग्रहाः ॥ त्र्यायाष्ट षट्
सुरविकेतु तमो ऽर्कपुत्राः त्र्यायारिगः क्षितिसुतो द्विगुणाय गो ज्ञः ॥ सप्त व्ययाष्ट रहि-
तौ द्गुरू सितो ष्ट त्रि घून षट् व्यय ग्रहान्य रिहन्य शस्तः ॥ २३५॥ अथ दिनज्ञानम् ॥ छा
या पादो रसोपेतो एकविंश शतं भजेत् ॥ लब्धांके घटिका ज्ञेया शेषांके च पलाः
स्मृताः ॥ २३६ ॥ अथेष्टकालाल्लग्नायनम् ॥ सायनार्कस्य भवानि निजोदय विनाडिकैः

खत्रि भक्ता भवेद्भोग्य कालो लब्ध पलात्मकः ॥ २३७ ॥ सोध्यो ऽभीष्ट घटी स्यञ्च
तद ग्रभ निजोदयः ॥ शोध्याः शेष खरा मग्रान शुद्ध तिथि भाजितम् ॥ २३८ ॥ ल-
ध्धमं शगदिकं योज्यं मेषादौ शुद्ध राशिभिः ॥ अयनांश विहीनाय विलग्नं तत्स्फुटं
भवेत् ॥ २३९ ॥ भोग्य कालेन शुद्धिश्चेदिष्ट कालः पलात्मकः ॥ खरा मघ्नो हृतस्त्वी
योदये नाप्तिंल वादिकम् ॥ २४० ॥ योज्यं सूर्य्ये स्फुटं लग्न मयनांश विवर्ज्जितः ॥
रात्रीष्ट कालतो वापि सषड्कार्काच्च पूर्ववत् ॥ २४१ ॥ अथास्यष्ट लग्नादिष्ट काल ज्ञानम् ॥
भानोर्भोग्य स्तुयः कालो भुक्त काल स्तथा तनोः ॥ तदैक मेतयो र्मध्यो दयाढ्यं सम-
य स्स्फुटः ॥ २४२ ॥ यद्ये कर्क्षेतु लग्नार्कौतियोर्भागान्तरे हृतिः ॥ स्वीयो दयः ख-
रा माप्तो ऽभीष्ट काल स्फुट स्तदा ॥ २४३ ॥ अथ प्रशस्त योगः ॥ शुभै स्तनु गतैः खेटै र
शुभैर्निधनो पगैः ॥ ध्वजोयं परिणी तात्र युवती प्रिय वल्लभा ॥ २४४ ॥ कुजे ऽ
र्के लाभ गे वच्चे शनौ चन्द्रे द्वितीयगे ॥ धर्म्मस्थे खेचरे रन्यैः श्रीवत्सो योग उत्तमः ॥

२४५ ॥ यदि स्यात्कन्यका लग्ना तृतीये चन्द्र वाक्पती ॥ पञ्चमे भृगुरानन्दो योगा-
श्चानंद कृत्सदि ॥ २४६ ॥ लाभेऽर्केऽरिगृहे भौमे दुश्चिक्येऽथ शनैश्चरे ॥ यो-
गो यमर्द्ध चन्द्राख्य स्तत्रोढा शुभगा सती ॥ २४७ ॥ गुरौ धर्म्मे बुधे मूर्तौ लाभे मंदो
गजाभिधः ॥ परिणीता हि वा मासी साध्वी धर्म्मार्थदायिनी ॥ २४८ ॥ खलूर्यन्नव
गे स्तौम्यैः प्रांखोयं शुभ कृत्सदा ॥ अथ नेष्टयोगः ॥ पापा चक्रस्य पूर्वार्द्धे पश्चार्द्धे सौ-
म्य खेचराः ॥ विवाहे चक्र योगो यं नवूढा स्वैरिणी भवेत् ॥ २४९ ॥ सर्वैः केन्द्र गतैः
पापैः वापी योगोऽति निंदितः ॥ सौम्ये लग्ने व्यये वित्ते पापैः कोदण्ड कोऽप्यसत् ॥
२५० ॥ भौमे द्वादश गे षष्ठे शुक्रे तुर्ये शनैश्चरे ॥ कुठारोऽयं समाख्यातः शुभवल्ली
विदारणः ॥ २५१ ॥ व्यये केन्द्र विगे शुक्रे रिपौ मन्देऽष्टमे विधौ ॥ योग स्स्यात्कूर्मना
मा यम त्रोढाभि स्सुकी भवेत् ॥ २५२ ॥ रवौ लग्ने व्यये मन्देऽष्टमेऽब्जे मुशला युधः
॥ तत्रोढाया कुमारी सा कुलनारी भवेद्ध्रुवम् ॥ २५३ ॥ अथ गोधूलिकलग्नं ॥ विष्ट्यादि कुलि

स०प्र० क काल विद्धभ पाय युक् तथा ॥ लग्नाद्धारिगतं चन्द्र लग्ने गोधूलिकं त्यजेत् ॥ २५४
२९७ ॥ नान्यो गोधूलिके चिंत्यो दोषाश्चण्डा युधाह्वयः ॥ अपघन्ने यत स्सर्वे गोरजो भिस्स
मंततः ॥ २५५ ॥ यत्र चैकादश श्चन्द्रो द्वितीयो वा तृतीयगः ॥ गोधूलिकः स विज्ञे-
य श्शेषा धूलिमुखाः स्मृताः ॥ २५६ ॥ कुलिकं क्रांति साम्यं च मूर्तौ षष्ठाष्टगः शशी ॥
पंच गोधूलिके त्याज्या अन्ये दोषा प्रशुभा वहाः ॥ २५७ ॥ पाव द्दिनांते निशि पश्चिमा
यां पश्ये तृतीयं रवि विंवभागम् ॥ तस्मात्परं नाडिक युग्म मेके गोधूलिकालं मुनयो व-
दन्ति ॥ २५८ ॥ अर्द्धास्तात्पूर्व मप्यूर्द्ध घटि कार्द्ध तु गोरजः ॥ शनौ सार्के गुरौ चास्ते उ-
भय त्रान्य वासरे ॥ २५९ ॥ स कालो मंगले श्रेया न्विवाहादौ शुभ प्रदः ॥ अर्द्ध विंवा-
स्तं केचिद्बुटी द्वय मिदञ्जगुः ॥ २६० ॥ निदाघेसार्द्ध विंवेऽर्के पिंडी भूतेहि सांग के ॥ मेघकाले
तु पूर्णास्ते प्रोक्तं गोधूलिकं शुभम् ॥ २६१ ॥ प्राच्यानां च कालिंगानां मुख्यं गोधूलिकं स्म्ट
तम् ॥ गांधर्वादि विवाहेषु वैश्यो द्वाहे तु योजयेत् ॥ २६२ ॥ विप्रेषु घटिका लाभे दातव्यं- २९८

गोरजोवुधैः ॥ सकीर्णे गोरजस्तत्तं परेषु द्वितयं शुभम् ॥ २६३ ॥ महादोषान्परित्य-
ज्य प्रोक्तान् धिसादिके शुच ॥ कारयेद्गोरजो या नलावलग्नं शुभावहम् ॥ २६४ ॥ अ-
थ यहवशात् ज्ञानम् ॥ सूर्य्यात्पतिस्त्रीच विधोस्तथा राहितं सुतो ज्ञान्च सुखं गुरो च ॥
धर्म्मस्सितादर्क सुतान्च वेश्म ब्रूयात्समुद्वाह विधौ स्व युक्त्या ॥ २६५ ॥ लग्नो देहः
भृगुस्त्वष्टुः स्वशुरो ऽकोमन प्रशस्ती॥ भर्त्ता कांता कलत्रेशास्तत लभास्तुरवं वदेत्
॥ २६६ ॥ सुखं स्वोच्चोदिते ज्ञेयं दुःखं नीचास्तगादिभिः ॥ अथावश्यके राज्ञां खड्गविवाहः
॥ चंद्र पञ्चांग संशुद्धो सौख्याय न विवाह भे ॥ राज्ञो गोधूलिके लग्ने खड्गोद्वाहः प्र-
शस्यते ॥ २६७ ॥ अथ हीन जातीनां विवाहे विशेषः ॥ अनुक्ततिथि मासर्क्षे संकीर्णानां शु-
भप्रदः ॥ विवाहो धन पुत्रायुः प्रीति सौख्य करो भवेत् ॥ २६८ ॥ अथ शूद्रादीनां ति-
थि मासादि दूषणम् ॥ २६९ ॥ सूर्यभाद्वेद ४ नेत्रा २ ग्नि ३ भू १ चन्द्रा १ ब्धि रसा ६ दे
या पुनर्विवाहः ॥ शूद्रादीनां विवाहर्क्षे पुनरुद्वहनं स्त्रियः ॥ रात्रौ कुर्य्यान्न तत्रास्ति ति-

नयः ३ ॥ भू १ राम ३ संमिता स्तारा गंधर्वादि विवाह के ॥ २७० ॥ नेष्टाः श्रेष्ठाः
क्रमा देतास्त्रि पद्यां गदिता बुधैः ॥ २७१ ॥ अथ विवाहांग कार्य्यं ॥ कार्य्यं विवाह का-
र्य्यांगा विवाहो दित भेजनैः ॥ विवले ऽपि विधो हित्वा त्रिषष्ठ नवमं दिनम् ॥ २७२
॥ चित्रा विशाखा शत तारकाश्विनी ज्येष्ठा भरण्यौ शिव भाच्च तुष्टयम् ॥ हित्वा
प्रशस्तं फलते लवेदिका मडान कं कंडन मंडनादि कम् ॥ २७३ ॥ मूले त्सु रुद्र
श्रवणार्क पौष्ण विश्वेश चित्रा नलरेवतीषु ॥ संस्थापनं कांजिक कुंडिका या वारे
रवे भूमि सुतस्य शस्तम् ॥ २७४ ॥ अथ तैल लेपने दिन संख्या ॥ मेषादि राशि जातानां
कुर्यात्तैलादि लेपनम् ॥ शैल दिग्वाण दिग्वाणान्स प्तांगे षु शरेष्विषु ॥ २७५ ॥
वाण शैलेषु षट्लेषु क्रमात्कैश्चि दिती रितम् ॥ अथ वेदिका निर्म्माणम् ॥ हस्तो छ्रिताच तु-
र्हस्तैश्च तुरस्रां समंततः ॥ स्तंभैश्च तुर्भि स्सु श्लक्ष्णा वाम भागे स्व सद्मनः ॥ २७६ ॥
ईशान्यां स्थापये त्स्तंभं सिंहादि त्रितये रवौ वृश्चिकादि त्रिभे वायौ नैऋत्यां कुंभतस्त्रिभे

नं कि ॥ वृषाद्वयं तयास्मे यां स्तंभ स्तात स्तथे वदि ॥ २७७ ॥ अथ विवाहानंतरं मंडपो द्वासनम्
२०० ॥ मण्डपो द्वासनं कार्यं समेन्च शुभ भे तिथौ ॥ षष्ठं तु विषमं नेष्टं मुक्ता सप्तम पंचमौ
॥ २७८ ॥ उत्पातान्सह पात दग्ध तिथि भिर्दुष्टा श्च योगा स्तथा चन्द्रे ज्योष्णा न
सामथ्या स्तम यनं तिथ्याः क्षयर्द्धी तथा ॥ गंडांते सच विष्टि संक्रम दिनं तन्वं शथास्तं
लघा तन्वं शेश विधून यायरिपुगा न्या पस्य वर्गा स्तथा ॥ २७९ ॥ सेन्दु क्रूर खगो
दयां श सुदया स्ता शुद्धि चंडायुधान् खार्जूरं दश योग योग सहितं या मित्र लत्ता-
भिधम् ॥ वाणो पग्रह पाप कर्त्तरि तथा तिथ्य र्क्षयो गोत्थितं दुष्टं योग मथार्द्ध यामकु-
लिका द्यान्वार दोषा नपि ॥ २८० ॥ क्रूरा क्रांत विमुक्त भं ग्रहण भंय त्क्रूर गन्तव्य भं त्रे
गोत्पात हतं च केतु हत भं संध्यो दितं भं तथा ॥ तद्वच्च ग्रह भिन्न युद्ध गत भं सर्वानि मा-
न्संन्त्यजे दुद्वाहे शुभ कर्म्म सुग्रह कृतान् लग्न स्य दोषा नपि ॥ २८१ ॥ द्विवेदि कुल
सम्भूत सरयू कृत संग्रहे ॥ शिरो मणौ समाप्तैषा प्रभा पंच दशी शुभा ॥ २८२ ॥ इति २००

श्री संग्रह शिरोमणौ विवाह कथनं नाम पंच दशी प्रभा १५ ॥ अथ वधू प्रवेश प्रकरणम् ॥ आ
स्थो द्वाह दिवसा त्वष्टे वाप्यष्ट मे दिने ॥ वधू प्रवेश स्तं पत्से दशमेऽथ समे दिने ॥ १ ॥ व-
धू प्रवेशनं कार्य्य म्पञ्चमे सप्तमे दिने ॥ नवमेच शुभे वारे सुलग्ने शशिनो वले ॥ २ ॥
विवाह मारभ्य वधू प्रवेशो युग्मे दिने षोडश वासरान्त ॥ ऊर्द्धन्ततोऽब्दे ऽयुजि पंच
मां तंपुनः पुरस्ता न्नियमो नवास्ति ॥ ३ ॥ श्रवण द्वितये मूले ऽनुराधा रोहिणी श्रुते
॥ हस्त त्रये मघा पुष्ये त्र्युत्तरे रेवती द्वये ॥ ४ ॥ प्रवेशो शुभदो वध्वाः सोमे शुक्रे गुरौ
शनौ ॥ नध्यो बुधे कुजार्कौ तु नेष्टो रिक्ता तिथि स्तथा ॥ ५ ॥ विवाहा त्प्रथमे पौषे
आषाढे चाधि मास के ॥ न सा भर्तृ गृहे तिष्ठे चैत्रे तात गृहेऽपिच ॥ ६ ॥ ज्येष्ठे पति
ज्येष्ठ मथाधिके पतिं हन्त्यादिमे भर्तृ गृहे वधूः शुचौ ॥ श्वश्रुं सहस्ये श्वसुरं क्षये
तनुं तातं मधौ तात गृहे विवाहतः ॥ ७ ॥ इतिवधूप्रवेशनम् ॥ अथ द्विरागमनम् ॥ विवाहा
द्विषमे वर्षे कुंभे मेषालि गेरवौ ॥ वलिन्य र्केविधौ जीवे शुभा हे चाश्विनी स्तरे ॥ ८

पा रोहिण्यां श्रवे सूगे ॥ जीव युक्ते पुरो वीरे गेहो राज्यार्थ पुत्रदः ॥ ११३ ॥ विशाखाद्री धनिष्ठाश्वि शत चित्रा स्थिते भृगो ॥ भृगु वारे कृतं वेश्म धन धान्य सुत प्रदम् ॥ ११४ ॥ पूर्वाषाढा मघा हस्त पुष्य मूलान्त्यगे कुजे ॥ कुजेन्हि निर्मितं गेहं भस्म सादग्निना भवेत् ॥ ११५ ॥ उफा हस्ताश्विनी चित्रा रोहिणी मृगगे बुधे ॥ बुधेऽन्हि मंदिरारम्भः सुख पुत्रार्थ सिद्धये ॥ ११६ ॥ भरणी स्वात्यनूराधा ज्येष्ठा पूभा द्वये शनौ ॥ शनि वारे कृतं वेश्म रक्षो भूत युतं भवेत् ॥ ११७ ॥ मेषे चैत्रे वृषे ज्येष्ठे त्वाषाढे कर्कटे रवौ ॥ सिंहे भाद्रपदे तौलि नाश्विने कार्त्तिकेऽलिगे ॥ ११८ ॥ पौषे नक्रे तथा माघे मकरे कुंभगेऽपि च ॥ प्रकुर्य्यान्मंदिरं विद्वान्नान्यैः कैश्चिदितीरितम् ॥ ११९ ॥ कृष्णपक्षादयो मासा विज्ञेया ह्यत्र सूरिभिः ॥ अथ गृहारंभसमयश्चांद्र मास परत्वेन ॥ शोको धान्यं मृति पशु हती द्रव्य वृद्धि र्विनाशो युद्धं भृत्यक्षति रथ धनं श्रीश्च वन्हे र्भयं च ॥ लक्ष्मी प्राप्ति र्भवति भवनारंभ कर्त्तुः क्रमेण चैत्रा द्यूचे मुनिभिरिति फलं वास्तु शा-

नवमीच रविं भौ-
स्त्रोपदिष्टम् ॥ १२० ॥ त्यक्त्वा चतुर्दशी षष्ठी चतुर्थी मष्टमी ममाम् ॥ द्वारिद्र्यं प्रतिपत्कुर्य्याच्चतुर्थी धन हारिणी ॥ अष्ट-
मं गृहारंभो विपंचके ॥ फलंच ॥ दारिद्र्यं प्रतिपत्कुर्य्याच्चतुर्थी धन हारिणी ॥ अष्ट-
म्युच्चाटनं चैव नवमी शस्त्र घातिनी ॥ १२१॥ दर्शे राज भयं ज्ञेयं भूते दारविनाशन-
म् ॥ १२२ ॥ विपंचके इति ॥ रुगानल नृप चोर मृत्यु सञ्ज्ञक पंचक रहिते ॥ पुष्यध्रुवेऽनु
राधायां धनिष्ठा युगलोत्तरे ॥ हस्तत्रये च रोहिण्यां रेवत्यां गृह मारभेत् ॥ १२३ ॥ सू-
तिका मन्दिरं कुर्य्यात्पुनर्भेऽभिजि ति श्रवे ॥ १२४ ॥ अथभूमिसुप्तम् ॥ मघोत्तरान्यंच-
न गांक सूर्य्यन वेन्दुष ट्दिश सितानि भानि ॥ शेते मही नैव गृहं विधेयं तडाग वापीख
ननं न शस्तम् ॥ १२५ ॥ अथगृहारंभेवत्सचक्रम् ॥ शीर्षे वृषेगेह विधाविनाशो दाहोऽ
ग्नि भिः स्याद्ग्नि भिरग्र पादे ॥ शून्यं युगैः पश्चिम पादजाते स्थैर्य्यं गुणैः पृष्ठगते र्दुना
प्तिः ॥ १२६ ॥ लाभो युगे दक्षिण कुक्षि याते पुच्छेऽग्नि भिः स्वस्य पते र्विनाशः ॥ वा
म युगे निर्द्धनता च कुक्षौ पीडाच पत्युर्मुख गे स्त्रि भिश्च ॥ १२७ ॥ अथैतदेव पुनःस्पष्टी

क्रियते ॥ रविभात्सप्तनेष्टानि शुभान्येकादश स्वभात् ॥ दशाश्लेषाण्य निष्टानि सा भिजिद्गृहवास्तुनि ॥ १२८ ॥ अथ खातम् ॥ अधोमुखैर्भैर्विदधीत खातं शिलास्तथैवोर्द्ध्वमुखैश्च पट्टम् ॥ तिर्य्यङ्मुखे द्वारिक पाट दानं गृहप्रवेशो मृदुभिर्ध्रुवर्क्षैः ॥ १२९ ॥ अथ सेरसा साहेहा देवास्तोर्मुखपुच्छं कटिश्च ॥ वृषार्कादित्रयं वेद्यां सिंहादि गणयेद्गृहे ॥ देवालये च मीनादि तडागे मकरादिकम् ॥ १३० ॥ ईशानतः सर्प्पति कालसर्प्पो विहाय सृष्टिं गणयेद्विदिक्षु ॥ शेषोऽस्य वास्तोर्मुखमध्यपुच्छं त्रयं परित्यज्य खनेच्चतुर्थम् ॥ १३१ ॥ कन्यासिंहे तुलायां भुजगपतिमुखं शम्भुकोणेऽग्निखातं वायव्ये स्यात्तदास्यं त्वलिधनमकरे ईशखातं वदंति ॥ कुंभे मीने च मेषे निर्ऋति दिशि मुखं खात वायव्यकोणे चाग्नेःकोणे मुखं वै वृषमिथुनगते कर्कटे रक्षखातम् ॥ १३२ ॥ ऊर्द्ध्वभागत्रयं त्यक्त्वा प्यधोभागत्रयं तथा ॥ मध्ये षोडशअक्षाणि खननं तत्र शोभनम् ॥ १३३ ॥ अथ चान्द्रमासा द्वार निम्नयार्थ वास्तु भिरः ॥ खाते भाद्र पदाद्यास्तु ः क्रमान्मास त्रिषु त्रिषु ॥ आग्नेयादि शिरो गेहा द्वारं शीर्ष दि-

सम्मि शिरस्मृतम् ॥ १३४ ॥ वास्तो शीर्षे दिशो ज्ञेयं पुच्छं सम्मुख दिग्गतम् ॥ अथवास्तोर्नाभि

कुक्षौ खाते शंकुरोपणाम् ॥ अदा विंशति कान्भांस्तु पुच्छान्सप्त दशाँ स्त्यजेत् ॥ १३५ ॥ त्र्य-

शे त्वष्टादश खातं वाम भागेच मध्यतः ॥ गेहारंभे मुहूर्ते ऽत्र कुर्त्वास्य पूरणम् ॥

१३६ ॥ चतुर्हस्त प्रमाणान्तु खात्वा गर्त्तं समं ततः ॥ कुंभोदके प्रोक्षयेयुः शान्तिपाठ पुर

स्सरम् ॥ १३७ ॥ ततईशान दिग्भागे साक्षतं रत्न पंचकम् ॥ साज्यं कुंभं स्थिरं कृत्वा वा

स्तु पूजन पूर्वकम् ॥ कुम्भोपरि शिला न्यासः कर्त्तव्य स्तदनन्तरम् ॥ १३७ ॥ अथ द्वार शा-

खारोपः ॥ अश्विन्या मुत्तरा हस्त पुष्य श्रुति मृगे ध्रुवे ॥ रोहिण्यां स्वाति भेत्येच द्वार शाखा

प्ररोपयेत् ॥ १३८ ॥ अथ द्वार चक्रम् ॥ सूर्य भा द्वेद भे शीर्षे स्थिते श्च धन संपदः ॥ गेह-

स्यो द्वासनं तस्माद ष्टभिः कोण संस्थितेः ॥ १३९ ॥ शाखा स्वष्ट मिते स्तस्मा द्भनं सौख्य

भवे द्ध्रुवे ॥ देह ल्यान्तु त्रिभि र्दृष्टे मृत्यु र्गृह पते र्भवेत् ॥ १४० ॥ चतुर्भिर्मध्य गे स्तस्मा-

द्द्रव्य लाभः स्सुखं भवेत् ॥ एतच्चक्रं विचार्य्यादौ द्वारं कुर्य्यात्स्वमन्दिरे ॥ १४१ ॥ कस्यचि-

न्मते विशेषः ॥ छतः कराब्धि युगनेत्र संत कश्च वारिधिः कर स्समुद्र सूर्य्य भादिनर्क्ष नस्त
तः क्रमात् ॥ धनागमं विनाश सौख्य बंधनं मृतिः ख्यातिः शुभं न स त्सुख मद क्रमात्फलं वि
च क्षणैः ॥ १४२ ॥ अथ गवाक्ष निर्णयः ॥ पूर्वादि तान्य गास्ता सुगवाक्षान्दिसु कारयेत् ॥
अथ द्वारस्यतिर्य्यग्ज्ञाननिर्णयः ॥ आयामे नवधा भक्ते द्वार मेकांशमानतः ॥ प्राच्यां तुर्य्ये तृती
ये वारुद्र कोणाद्विधीयते ॥ १४३ । याम्यां षष्ठे च तुर्थे वा तुरीये ऽथ पंचमे ॥ उदीच्यां त्वा
मतीच्यां वा सव्य मार्गेण धीमता ॥ १४४ ॥ अथ द्वारस्योच्चता ॥ गेहोच्चस्य चतुर्थांशो हि गु
णो द्वार उच्छ्रयः ॥ अथ गेहोच्चता ॥ विस्तार षोडशे भागश्चतुर्भिर्य्यः करैर्युतः ॥ गेहो
च्चं तन्मितं ज्ञेयं न्यूनाधिक्यमसत्स्मृतम् ॥ १४५ ॥ विस्तार तुल्य प्रमितिं गृहस्य चोच्छ्राय
ताभ्यं न्तर भूप्रदेशात् ॥ गृहोपरिस्थस्य गृहस्य तद्दिस्तार हस्तोच्छ्रयता विधेया ॥
१४६ ॥ अथ द्वारादौ वेध विचारः ॥ कोण मार्ग भ्रमि द्वार कर्दमस्तंभ भूरुहाम् ॥ देवालय प्रकू
पाणां वेधो द्वारे ऽथ सम्मुखे ॥ १४७ ॥ अथ वेधापवादः ॥ गेहोच्चद्वि गुणाधिके प्रान्तरे सति

साति ॥ नैव कोणादिको वेधो भित्ति मार्गान्तरेऽपि च ॥ १४८॥ फलम् ॥ कूपे वास्तुमध्ये भवति विनाशो देवता विद्धे ॥ स्तम्भेन स्त्री दोषः कुलनाशो ब्रह्मणोऽभिमुखे ॥ १४९॥ उन्मादस्स्वयमुद्घटिते ऽथपिहिते स्वयं कुलविनाशः ॥ मानाधिक्ये न भयं व्यसनं दैन्यं नीचे ॥ १५०॥ द्वारं द्वारस्यो परि यन्न शिवाय शंकरायच ॥ अनिलिन्दः सुभद्रं कुञ्जः कुलनाशनाय भवति ॥ १५१॥ पीडाकरमति विततं अति न्यूनं भवेदभवाय ॥ वाह्ये विततभवाग्रो दिग्याम्ये दस्युभिः पीडा ॥ १५२॥ ईशानादिषु कोणेषु संस्थिता वाह्यतो गृहस्यैताः ॥ चरकी विदारिनामाथ पूतना पापराक्षसी चेति ॥ १५३॥ पूजिता श्शान्ति दाद्व्यो मत्स्य मांसाश्ववादिभिः ॥ अन्यदा विघ्नकारिण्यो वासिनां तु विनाशिनम् ॥ १५४॥ अथांगणज्ञानम् ॥ आंगणायाम विस्तारा वेकी कृत्य गृहे भजेत् ॥ भोगी १ विचक्षणो ऽभीरुः २ कलही ४ दान ५ वान्नृपः ६ ॥ १५५॥ क्लीबश्चौरो ७ धनी ८ चेति क्रमान्न वफलं त्विदं ॥ अथ प्लव विचारः ॥ उदगादि प्लवसिद्धं विप्रादीनां दक्षिणे नै-

शि- व ॥ १५६ ॥ अथ षोडश गृह निर्म्माणम् ॥ प्राचीतः क्रमतस्नानपाकः शय्या च शस्त्रभ्र॥ः

३११ भोजनस्यान्नभांडार देवतानां गृहं स्मृतम्॥ १५७ ॥ मथनाज्यपुरीषाख्य विद्याभ्यां

सं भुवां क्रमात् ॥ रति भेषज्ययोः सर्वधाम्नस्तन्मध्यगा गृहाः ॥ १५८ ॥ अल्पत्वे वा भु-

वोऽशक्तेः स्नानादींश्च गृहान्बुधः ॥ प्राक्ते भुवोऽनुसारेण प्रकुर्वीत यथारुचि. ॥ १५९ ॥ उ-

लूखल घटाद्यं वु स्थानं चुल्ह्यादि कं ततः ॥ क्षालनं पितृ पादानां गेहा दक्षिणतस्सदा ॥

१६० ॥ अथ चित्रारंभः ॥ हस्तत्रयेऽनुराधान्त्ये मृगेऽश्विन्यां श्रवत्रये ॥ पुनर्भे रोहिणी

पुष्ये पूर्वापादाभिधे तथा ॥ १६१ ॥ नंदायां च शुभे वारे प्रकुर्य्याद्राज वेश्मनि ॥ चित्रं-

नाना विधं रम्यं शिल्पी रामायणं विना ॥ १६२ ॥ अथ गेहोपस्करण चुल्ही कृत्यम् ॥ पूर्वार्द्रा

रोहिणी पुष्ये उत्तरा त्रितये श्विभे ॥ स्थितिर्म्महानसस्येष्टा गेहोपस्करणे स्तुह ॥ १६३॥

सूर्य्यर्क्षाद्र सभे वंधो नृप सुखं वेद र्क्ष संख्यो सुखम् ॥ ताराचाष्ट मितार माग्निरुभयो श्चु-

ल्ह्यां सदा शाखयोः ॥ मध्ये पंच भवेद्गृहे प्रारमणी नाशोऽग्निके चाध्ययस्ततं स्यात्सततं ३११

विचार्य मतिमान् चुल्हीं गृहे स्थापयेत् ॥ २६४॥ अथ गृह समीप फलम् ॥ सचिवालयेऽर्थनाशो धूर्त गृहे सुत वधः समीपस्थे ॥ उद्वेगो देव कुले चतुःपथे भवति चाकीर्त्तिः ॥ २६५॥ चैत्ये भयं गृहं कृतं वल्मीके स्व कुले विपदम् ॥ गर्त्तायां तु पिपासा कूर्म्माकारे धन विनाशः ॥ २६६॥ अथ गृहांगणे शुभ वृक्षाः ॥ पुंनागश्चंपकोऽशोकः पिप्पली दाडिमी शमी ॥ वकुलस्तिलको द्राक्षा पिचुमंदोऽमरा जपाः ॥ २६७॥ नारिकेलं तथा जाती पाटला गेह मल्लिका ॥ मल्लिका पूग वंधूकाः पनसः सरसी रुहम् ॥ २६८ ॥ एते गृहांगणे वृक्षाः आरोप्या मंगल प्रदाः ॥ अथ गेह प्रदेशात्प्रतिदिशं वृक्षारोपणम् ॥ न्यग्रोधं रोपयेत्प्राच्यां गेहाद्याम्यामुदुंवरम् ॥ उदक् प्लक्षं च कर्कंधुः प्रतीच्यां कुंज रारावम् ॥ २६९॥ अथ गृहांगणे अशुभ वृक्षाः ॥ मातुलुंग स्नुही रंभा हरिद्रा च वक द्रुमः ॥ एते दुःख प्रदा गेहे संजाता रोपिता अपि ॥ २७०॥ अथ केषांचिन्मते सर्वेऽपि वृक्षा गृहांगणे निषिद्धाः ॥ केचिद्वदंति नारोप्यो निजवास गृहांगणे ॥ कोऽपि वृक्षो यतः स्वर्ग द्रुमोऽपि न शुभो मतः ॥ २७१ ॥ अथ द्वारस्य

प्राकारादीनां निर्म्माणे सूत्र साधनम् ॥ प्राकार पत्तन ग्रामनिर्म्मितौ सूत्र साधनम् ॥ प्रशस्त-स्याच्छुभे काले गेहारम्भोक्तभादिषु ॥ १७१, अथ देवालये मठाद्यारंभः ॥ गृहारंभोक्त-नक्षत्रैर्मठं कुर्य्यात्तु साश्विभैः ॥ सर्वदेवालयन्त्वेस्तु पुनर्भ श्रवणान्वितैः ॥ १७२॥ अथ जैन्यालय प्रपादीनामारम्भः ॥ पूर्वार्द्राभरणीधिष्ण्ये रोहिण्यां च स्थिरे दये ॥ शुभाहे जैन्यगेहस्य प्रपादर्य्यां कृतिश्शुभा ॥ १७३॥ अथ कूपखनन प्रदेशः ॥ ऐश्वर्य्यं पुत्रहानि-श्च स्त्रीनाशो निधनं भवेत् ॥ संपच्छस्त्रु भयं सौख्य पुष्टिः प्रागादितः क्रमात् ॥ १७४॥ कूपे कृते मध्य देशे धनहानिर्हि वास्तुनि ॥ अथ जलाशयारंभः ॥ अनुराधा मघा हस्ते रेवती युत्तरा त्रये ॥ रोहिणी युगले पुष्ये धनिष्ठा द्वितये तथा ॥ १७५॥ पूर्वाषाढाभिधे भेच शुभे नास्ति शुभे दिने ॥ वापी कूप तडागानामारंभः कथितो बुधैः ॥ १७६॥ अथ कूपारंभे वार फलम् ॥ रवि वारे जलं नास्ति सोमे पूर्णं जलं भवेत् ॥ वालुका भौम वारे तु बुधे बहु जलं भवेत् ॥ १७७॥ गुरोश्च मधुरं तोयं शुक्रे क्षारं प्रजायते ॥ शनैश्चरे जलंना-

त्ति कीर्तितं वारजं फलम् ॥ १७८॥ रोहिराव सीम्येम भात्सूर्य्य भाच्च राह्णे ऽस्सा द्भएय
ते कूप चक्रम् ॥ यस्मिन्काले सर्वसे तत्र प्रस्तं तस्मिन्मू मो निर्जले सज्जल त्वम् ॥
१७९॥ अथ रोहिण्यृक्षात्कूपचक्रम् ॥ रोहिण्यादि लिखेच्चक्रं यावत्तिष्ठति चंद्रमाः ॥ एकंम-
ध्ये त्रयं पूर्वेत्ततयं चाग्नि कोण के ॥ १८० ॥ याम्ये तु वाण संख्यं स्यान्नै र्ऋत्ये रस मेवच
॥ पश्चिमे युगलं वायो युग्मं च त्रय मुत्तरे ॥ १८१ ॥ ईशाने त्रीणि दातव्यं भस्त्रऽसा दनु
क्रमात् ॥ मध्ये शीघ्रं जलं स्वादु पूर्वे सू.मो च खंडनम् ॥१८२॥ आग्नेय्यां सजलं प्रोक्तं
याम्ये च निर्जलं भवेत् ॥ नैर्ऋत्ये सजलं प्रोक्तं पश्चिमे क्षार मेवच ॥ १८३ ॥ वायव्ये चै-
व पाषाण मुत्तरे च समुद्रवत् ॥ ईशाने कटुकं वारि कूप चक्रं विचारयेत् ॥१८४॥ अथ भौ-
मभात्कूपचक्रम् ॥ प्राधि प्रोरेयु त्रि द्वयाब्धि गुणाब्धयः . वध जलं च सुसिद्धिरभंग दम॥ह
जम सिद्धि यशो ऽर्थ प्रसिद्धिदं जल विभंग करः कुजभादिति ॥ १८५॥ अथ सूर्य्यभात्कूपच-
क्रम् ॥ सजल खंड जले सजला जले शुभजलं लवणं च शिला जलम् ॥ लवण मुसक-

राहुभादिति नवकलानि विदुस्त्रिनयोडुभिः ॥ १८६॥ अथ राहुभात्कूपचक्रम् ॥ राहुऋक्षा-
त्त्रयम्पूर्वे त्रय मष्टौ ततः क्रमात् ॥ मध्ये चत्वारि देयानि फलं वाच्यं शुभाशुभम् ॥ १८६॥
पूर्वे शोककरो राहुः अग्न्यां जलसंपदा ॥ दक्षिणे स्वामिमरणं नैरृत्ये दुःखदायकम्
॥ १८७॥ पश्चिमे सजलं प्रोक्तं वायव्ये वालुका तथा ॥ उत्तरे निर्ज्जलं वारि ईशाने च स-
मुद्रवत् ॥ १८८॥ मध्ये स्वल्पजलं वाच्यं नान्यथा रुद्रभाषितम् ॥ अथ जलज्ञानम् ॥ नक्ष-
त्रवारौ तिथिसंप्रयुक्तौ वेदाहृतं त्र्यङ्गणकेन कार्य्यं॥ एकावशिष्टे च जलं हि नागे द्वाभ्यां च
शेषे सलिलं हि स्वर्गे ॥ त्रिशून्य शेषे भुवि संस्थतोयं प्रजापतीनां खनने जलाश्रयः ॥ १८९॥
अथ कूपे निर्झरविचारः ॥ वर्त्तमान तिथि वार तारका वारि राशि सहिता वसूद्धृता ॥ शेष तुल्य-

| रोहिणपूषात २७ | | | भोमभात २७ | | | सूर्य्यभात २७ | | | राहुभात २८ | | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| ई ३ अ | २ अशु | २ शु | १ अशु ४ | १ शु | ५ शु | अशु २ | ३ १ शु | ३ शु | ३ अशु | १ ३ शु | ३ शु |
| व ३ शु | शु भ | वा २ इ | शु ३ | | ५ शु | शु २ | ३ शु | ३ अशु | ३ १ अशु | ४ १ अशु | ३ १ अशु |
| वा २ अ | अ ३ ५ | श ३ नै | शु ४ | २ १ शु | ३ १ शु | शु २ | ३ १ अशु | ३ १ अशु | ३ अशु | ३ शु | ३ अशु |

दिशि पूर्वतः क्रमान्निर्झरो भवति कूपकर्म्मणि ॥ १९० ॥ अश्वि-
न्यादौ शशि र्य्यत्र तिथिभिश्च स

मन्वितम् ॥ चतुर्भिस्तु हरेज्ञागं शेषांके फलमादिशेत् ॥ १९१ ॥ सदे जलं रोवे विन्द्या-
त् द्विके पाताल मेवच ॥ त्रिभिः क्षारं विजानीयाच्छून्ये शून्यं विनिर्दिशेत् ॥ १९२ ॥ अथ
नेवारिचक्रम् ॥ निर्वारे पूर्वत स्त्रीणि त्रीणिच सव्यतः ॥ मध्ये च त्वादि धिस्रानि रद्रुमाद्
णाये बुधः ॥ १९३ ॥ मध्ये पूर्वे जलं सौख्य मुत्तरे धन वर्द्धनम् ॥ याम्य नैरृत्ययो दुःखं अप
मृत्यो परे कास्रम् ॥ १९४ ॥ अथेष्टकारम्भः सुधालेपश्च ॥ उत्तराश्विश्रवे पुष्ये ज्येष्ठाच्ये रो-
हिणी करे ॥ स्थिरेऽह्नेऽर्के गुरौ मन्दे दृष्टिकारम्भणञ्चरेत् ॥ १९५ ॥ तथा गेहे सुधाले
पः दृष्टिकारंभणादिषु ॥ १९६ ॥ अथ दृष्टिकाचक्रम् ॥ दृष्टिचक्रं प्रवक्ष्यामि भौम नक्षत्र
प्रयत्नतः ॥ पंचत्रीणि त्रिकं पंच सप्त पंचावनी जभात् ॥ १९७ ॥ शुभाशुभं क्रमे णै
व दृष्टिका स्थापने मतम् ॥ अथाग्निदानम् ॥ सप्त पञ्च मुनि वेद पंचभिः शोकलाभरु-
ज भीति सुखाप्तिः ॥ स्थापनेऽग्नि किल दृष्टिका गृहे भौम भादिति बुधाः प्रवदन्ति ॥
१९८ ॥ अथ तडागचक्रम् ॥ सूर्यभा च्चन्द्रभं यावद्गणये त्सर्वदा बुधः ॥ दिक्षु दिक्षु द्वयं

न्यस्य मध्ये पञ्च नियोजयेत् ॥ १९९ ॥ पट्टचवारवाहच फलं तस्य विचारयेत् ॥ पूर्वस्यां वारि शोषः स्यात् आग्नेय्यां सलिलं बहु ॥ २०० ॥ दक्षिणस्यां वारिनाशो नैर्ऋत्यामसृतञ्जलम् ॥ पश्चिमायां जलं स्वादु वायव्यां वारि शोषणं ॥ २०१ ॥ उत्तरस्यां स्थितं तोय मैशान्यां कुत्सितञ्जलम् ॥ मध्ये पूर्णं जलं दुग्धं वारि चामृत मेवच ॥ २०२ ॥ तडागेषु सर्वेषु चक्र मे तद्विचारयेत् ॥ द्विवेदि कुल संभूत शम्भू हतसंग्रहे ॥ शिरोमणौ समाप्तेयं प्रभेयं विंशति श्शुभा ॥ २०३ ॥ इति श्री संग्रह शिरोमणौ वास्तु कथनं नाम विंशतिः स्त्रभा ॥ २० ॥ अथ गृहप्रवेश प्रकरणम् ॥ प्रवेशो नव गेहस्य कुर्य्यात्सौम्यायने नृपः ॥ प्रारम्भो दि त मासेऽपि ज्ञात्वा प्रावारस्तु पूजनम् ॥ १ ॥ माघ फाल्गुण वैशाख ज्येष्ठा शस्ता नवे गृहे ॥ प्रवेशो श्रावणे मार्गे कार्तिकेऽपि प्रशस्यते ॥ २ ॥ पुनर्विनिर्म्मिते जीर्णे गृहे युक्त स्तथै वहि ॥ प्रवेश स्त्वात्र गेहस्य प्रत्सादि प्रविचारणात् ॥ ३ ॥ स्युत्तरे चानुराधायां रेवत्यां रोहिणी द्वये ॥ चित्रायां प्रविशेद्गेहं द्वारभे तु विशेषतः ॥

४ ॥ द्वारभेति ॥ यस्मिन्गृहे प्रवेशः कर्त्तुमिष्यते तस्यय स्यान्दिशि मुखं तद्दिङ्क्षत्रैः पूर्वादिषु चतुर्दिक्षु सप्त सप्ता नल सत दत्या युक्तैः मृदुध्रुव नक्षत्रैः प्रवेशं नं स्यात् ॥ यदि गृहार् मंदिरं तादृ गृक्षे रुत्त क्षैःस्यात्त प्रवेशो न सर्वै रिति वशिष्ठोक्तेः ॥ अर्कानिला- र्यादिति द्स्र विस्नुत्वरस्त प्रविष्टं नव मंदिरं यत् ॥ अब्दत्रया त्तत्पर हस्त यातं शेषेष्ठ धि- स्नेषु च मृत्यु दं स्यात् ॥ ५ ॥ अथ जीर्ण गृह प्रवेशः ॥ धनिष्ठा द्वितये पुष्ये त्र्युत्तरे रोहिणी द्वये ॥ चित्रास्वात्यानुराधान्त्ये प्रवेशो जीर्ण मन्दिरे ॥ ६ ॥ अथ प्रवेशे अन्यनक्षत्र फलम् ॥ श्रवणा दित्रये ऽश्विन्यां स्वातौ पुष्ये तथा करे ॥ पुनर्वस्वोः पुनर्यात्रा राजा नाशो शताभिधे ॥ ७ ॥ पूर्वा त्रये भरण्यां च विशाखायाञ्च धूक्षयः ॥ ज्येष्ठा श्लेषा रव्य मूलार्द्रे कुमारो ना शमाप्नुयात् ॥ ८ ॥ कृत्तिकायान्दहे देहं प्रवेशे नव मन्दिरे ॥ तथा यात्रा निवृत्तौ च भूपानां फलमीदृशम् ॥ ९ ॥ अथ वारफलम् ॥ गुरु शुक्र बुधाख्येषु वासरेषु सुखार्थदम् ॥ प्रवेशे तु शनौ स्थैर्यं किञ्चि चौरभयम्भवेत् ॥ १० ॥ वशिष्ठः ॥ नव प्रवेशे ह्यथ काल मुद्दिर्न हन्द

... दिन सु लग्न वास्तु श्चेन पूर्ववदेव कुर्य्यात् ॥
११ ॥ नित्ययाने गृहे जीर्णे प्राशने परिधानके ॥ वधूप्रवेशे मांगल्ये न मौढ्यं गुरुशुक्रयोः ॥ १२ ॥ अथ प्रवेशे त्याज्यः ॥ चैत्रो मासः कुजार्कौ च ऋक्ता दग्धा तिथिस्त्वमा ॥ दुष्टचन्द्रा दृशो वर्ज्या नव गेह प्रवेशने ॥ १३ ॥ अथ लग्नबलम् ॥ चरे लग्ने चरांशे च प्रवेशो न शुभावहः ॥ शुभांशेन युते चोपचयस्थे ऽपि चरे ऽपि सत् ॥ १४ ॥ शुभैः केंद्रत्रिकोणस्थैर्यदि गैरायत्रिषष्ठगैः ॥ पापैर्ष्वष्टे ऽष्टमे तुर्ये रविर्जन्माष्टमेंगके ॥ १५ ॥ शुभे भकूटके गेहे विधायाग्रे द्विजन्मनः ॥ जलपूर्णं घटं दीपं वेदघोषैर्गृहं विशेत् ॥ १६ ॥ लग्नात्सुत्राहनादायात्पंच स्वर्के स्थिते क्रमात् ॥ पूर्वाशादिमुखं गेहं विशेद्वामो भवेद्यदि ॥ १७ ॥ अष्टम पंचम द्वितीये कादश स्थानेभ्यः पंचसु स्थानेषु स्थिते रवौ सलिशाग्वदनादि मंदिर प्रवेशे कर्तुर्वामो रविर्भवेत् ॥ यथा ॥ यस्मिन् लग्ने गृहप्रवेशः कर्तुं क्रियते तस्माद्दशमं स्थानं ततः पंचसु स्थानेष्वर्के सति पूर्वाभिमुखे गृहे प्रवेशे कर्तुः वामः सूर्य्यः स्यात् ॥

तथा लग्नात्पंचम स्थानं ततः पंच सु स्थानेषु रवौ स्थिते दक्षिणाभिमुखे वामोऽर्कः ॥
तथा लग्नात्पंचम स्थानं ततः पंच सु स्थानेषु रवौ स्थितः पश्चिमाभिमुख वामोऽर्कः
तथैव लग्नाद्य द्वितीय स्थानं ततः पंच सु स्थानेषु रवौ स्थिते उत्तराभिमुखे गृहे प्रवे-
तथैव लग्नाद्य देकादश स्थानं ततः पंच सु स्थानेषु सूर्य्ये स्थिते उत्तराभिमुखे
श कर्त्तु र्वामः सूर्य्यः ॥ अथ गृह द्वारवशात्तिथयः ॥ प्रवेशे प्राङ्मुखे पूर्णानन्दा याम्यमुखे
शुभा ॥ भद्रा प्रत्यङ्मुखो ऽथोदङ्मुखे गेहे तथा जया ॥ १८ ॥ अथ गेहे तत्प्रवेशे च विशेषः ॥
चेत्स कृत्यं दिवा शस्तं प्रवेशो रजनी क्वचित् ॥ सतीन्द्वर्कबले यात्रा द्वादश्यां न भृगौ नि-
शि ॥ १९ ॥ अथ गृहप्रवेशे कलशचक्रम् ॥ अर्कभाद्भूमिते १ चक्रे वन्हि दाहः प्रवेशने ॥ उद्वा
सो ऽब्धि मितैः ४ प्राच्यां याम्यां लाभोऽब्धि ८ संमितैः ॥ २० ॥ पश्चिमेऽब्धिमिते १२ लक्ष्मीरु
द्ग्वेद मितैः १७ कलिः ॥ नाशो युग मिते २१ र्मध्ये ऽधः कण्ठत्रि २४ त्रिभैः २७ शुभम् २१ ॥
अथ तदेव स्पष्टयति ॥ भान्यष्टौ ८ सूर्य्य भात्यष्टा ६ द्वाविंशाच्चैव भानि षट् ६ ॥ कुम्भचक्रे वरिष्ठा
नि गेहं प्रविशतां नृणां ॥ २२ ॥ अथ प्रवेश विधिः ॥ यथोक्त समये प्राच्या वितानैस्तोरणैर्ध्वु-

तम् ॥ वेदमंगलनिर्घोषैः स्संप्रविश्य गृहं शुभम् ॥ २३ ॥ शिल्पिनं ग्रणतं ... ।
धिविद्वं पुरोधसम् ॥ पूजयेच्च यथा देवं हेमरत्नैस्तथांबरैः ॥ २४ ॥ कृत्वागतो द्वि-
जवरानथ पूर्णकुंभं दध्यक्षताम्रदलपुष्पफलोपशोभम् ॥ दत्वा हिरण्य वस-
नानि तथा द्विजेभ्यो मांगल्यशान्तिनिलयं स्वगृहं विशेच्च ॥ २५ ॥ गेहोक्तहोम
विधिना बलिकर्म कुर्य्यात् प्रासाद वास्तु शमने च विधिर्य उक्तः ॥ सन्तर्पयेद्द्विज
वरानथ भक्ष्यभोज्यैः भुक्त्वा वरः स्वभवनं प्रविशेत्स्वरूपम् ॥ २६ ॥ अथ प्रवेशस्त्रि-
विध. ॥ अपूर्वसंज्ञः प्रथम प्रवेशो यात्रावसाने तु स पूर्वसंज्ञः ॥ द्वन्द्वाभयस्त्वग्नि-
भयादिजातस्त्वेवं प्रवेशस्त्रिविधः प्रदिष्टः ॥ २७ ॥ आरम्भोदिनमे भूपैः कार्यो पूर्वप्रवे-
शकः ॥ पूर्वा पूर्वो ऽश्विनी मूलश्रवो पेतैः करस्थितैः ॥ २८ ॥ सपूर्वस्तू त्तराचित्राऽनु-
राधारेवती मृगे ॥ रोहिण्यां कथितः प्राज्ञैः प्रवेशस्त्रिविधो गृहे ॥ २९ ॥ अथ वास्तुपूजादि
कं विना प्रवेशो निषेधः ॥ गृहास्तु पूजा रहितं त्वदत्तबलिं त्वनाच्छन्न गृहं विरूपं ॥ कपाटही-

नं न विशेद्य नक्षत्रसर्वापदा मालय मेव तत्स्यात् ॥ ३० ॥ अथ वास्तुपूजनम् ॥ श्रवाश्वि-
ने मृगे मूलेऽनुराधान्त्ये करत्रये ॥ पुनर्भे श्युत्तरे पुष्ये रोहिण्यां मण्डिभे तथा ॥ ३१
॥ वास्तोरभ्यर्चनं शस्तं बलिदान पुरस्सरम् ॥ अथ नव दुर्ग पुर प्रवेशः ॥ रोहिणी रेवती ह-
स्त त्रये पुष्ये श्रवत्रये ॥ अनुराधोत्तरे नव्ये पुरे दुर्गे प्रवेशनम् ॥ ३२ ॥ अथ जितस्य शत्रोः
पुरप्रवेशः ॥ विशाखा कृत्तिका पूर्वोत्तरा षाढे भिधे तथा ॥ शत्रोर्ज्याद्वे जितस्यारे दि-
जयी नगरं विशेत् ॥ ३३ ॥ द्विवेदि कुल संभूत सरयू कूल संगृहे ॥ शिरोमणौ समा-
तेयं प्रमेयं चैक विंशतिः ॥ ३४ ॥ इति श्री संग्रह शिरोमणौ गृह प्रवेश कथनं ना
म एक विंशतिः प्रभा २१ ॥ अथ देवालयादिप्रतिष्ठाप्रकरणम् आराम सागर योः काव्यां प्रतिष्ठा
चोत्तरायणे ॥ तथा जलाशयारामोत्सर्गप्रशस्तो विचैत्रके ॥ १ ॥ चैत्रो मासः प्रति
ष्ठायां बुधैः कैश्चिद् दितीरितः ॥ शुक्ल पक्षेऽनुराधान्त्ये पुनर्भे रोहिणी मृगे ॥ २ ॥ श्र-
व त्रयोत्तरा हस्त त्रये पुष्ये विधौ शुभे ॥ स्ववारक्षण नक्षत्र तिथिषु स्थापनं स्मृतम् ॥ ३

३॥ विश्वादि देव मुख्यानां विलग्ने शुभ लोकिते ॥ अथ देवता विशेषेण नक्षत्र विशेषः ॥ वि-
ष्णोः पूर्वोदिते मैत्रानुराधा शिवयोः शिवम् ॥ रोहिण्यां श्रवणे ज्येष्ठा पुष्ये चाभिजि-
दीरितम् ॥ ४ ॥ विधि वासवयोस्तस्य प्रतिष्ठापनमार्य्यकैः ॥ ५ ॥ भानोर्हस्तेऽनु-
राधायां कुवेरस्कन्दयोरपि ॥ मूले दुर्गादिकानांच श्रवणे सुगतस्य हि ॥ ६ ॥ रेवत्यां ध
र्म्म हेरंब फणि प्रथम राक्षसाम् ॥ यक्ष भूता सुराणाञ्च वाग्देव्याः स्थापनं स्मृतम् ॥ ७
व्यासागस्त्य महर्षीणाञ्च वाल्मीके. पुष्यमेतथा ॥ यत्र सप्तर्षयो यान्ति धिष्ण्ये तेषाञ्च तत्र
च ॥ ८ ॥ सर्वेषामेव देवी हि रथा मुत्तरा त्रितये तथा ॥ धनिष्ठायान्दिगीशानां प्रतिष्ठाप-
नमीरितम् ॥ ९ ॥ अथ देव विशेषे लग्न विशेषः ॥ सिंहे सूर्य्यः शिवो द्वन्द्वे लग्ने स्यात्स्त्रि
यां हरिः ॥ कुम्भे वेधाश्चरे क्षुद्राः द्व्यंगे देव्यस्स्थिरेऽखिलाः ॥ १० ॥ गण परिवृढ रक्षो
यक्ष भूता सुराणां प्रथम फणि सरस्वत्यादिकानांच पीठे ॥ श्रव सि सुगत नाम्नो ब्रा-
सर्वे लोकपानां निगदित मखिलानां स्थापनं हि स्थिरेषु ॥ ११ ॥ अथ वार फलम् ॥ प्रति-

शोया तथा क्षेमा वन्हि दा वरदा दृढा ॥ आनन्द दायिनी कल्य स्या थिन्य कोदिवा सरे ॥ मदि ॥ १२॥ अथ देव विशेषेण मासस्थनम् ॥ याम्यायने ऽपि वाराह मातृ भैरव वामनान् ॥ १३ ॥ विशेषः॥ श्रावणे स्थापये ल्लिंग मा श्विने पासुरहन्त्री च नृसिंहं स्थापये द्बुधः ॥ १४ ॥ अथ प्रतिष्ठायां लग्नं जगदं विकास्तु ॥ मार्ग शीर्षे हरिं चैव पौषे सर्वास्तु केचन ॥ आयारिगे सुते श्वर्य्य प्रस्तलम् ॥ केन्द्र कोण द्विला भस्थैः शुभैः पापैश्च सेन्दुभिः ॥ शिवो स्तगो समाते देवाः प्रतिष्ठिताः ॥ २५ ॥ द्विवेदि कुल संभूत सरयू छत संग्रहे ॥ इति श्री संग्रह शिरो मणौ प्रतिष्ठा कथनं नाम षाप्रमेयं च द्विविंशतिः ॥ २६ ॥ अथ मिश्र प्रकरणम् ॥ तत्रादावंग स्फुरण फलम् ॥ अंग स्फुर्ति फ द्वाविंशतिः प्रभा २२ ॥ लं वक्ष्ये दक्षिणांग समुद्भवं ॥ पुरुषाणान्तु तज्ज्ञेयं वाम भागे मृगीदृशाम् ॥ १ ॥ पृथ्वी लाभ शिरःस्थाने धन लाभो ललाटके ॥ प्रियाप्तिः स्याद्भुवो र्मध्ये भ्रुवो र्युग्मे सुख वहा ॥ २ ॥ शुभा वार्त्ता श्रुतो कर्णे लोचने प्रिय दर्शनम् ॥ दृक्कोण भागयो र्लक्ष्मी र-

धः पक्ष्मणि सज्जयः ॥ ३ ॥ गण्डदेशे स्त्रिया सौख्यं नाशायां गंधजं सुखम् ॥ उत्तरो-
ष्ठेतु वाग्वाद श्चुंबनं चाधरे स्त्रियाः ॥ ४ ॥ हनुदेशे भय ञ्ज्ञेयं मुखे मधुर भोजनम् ॥ भू-
षाप्तिः कंठ देशे स्यात् ग्रीवायां रिपु जं भयम् ॥ ५ ॥ ज्ञेयः पराजयः पृष्ठे स्कन्धे मित्र-
समागमः ॥ प्रियाप्ति र्दोर्दु देशे स्यान्मध्ये वाहोर्धनागमः ॥ ६ ॥ द्रविणाप्तिः करे विद्याद्वि
जयं वक्षसि ध्रुवम् ॥ प्रमोदं च वलं कक्षायां ज्वंशीति मनुत्तमम् ॥ ७ ॥ स्थानात्प्रचल-
नं नाभौ कोश वृद्धि स्त्वान्त्रके ॥ कोशाप्ति रुदरे नार्य्या जघने पति संगमः ॥ ८ ॥ स्फिग्यु
ग्वाद नाप्ति स्स्यात् लिंगे योषित्समागमः ॥ वृषणे पुत्र लाभ श्चाभ्युदयो वस्तिदेश
के ॥ ९ ॥ ऊरौ सद्वाससां प्राप्ति रिपु संधिस्तु जानुनि ॥ कचिद्धानिस्तु जंघायां स्थाना
प्ति श्चरणोपरि ॥ १० ॥ पादाधो लाभदं यानमङ्गस्फूर्तिफलं त्विदम् ॥ वामस्यं सां-
फलं चेत द्वधे ज्ञेयं विपर्य्ययात् ॥ ११ ॥ नारीणां दक्षिणांगे स्यादङ्गस्य स्फुरणे तथा
॥ अंग स्फुर्तिः समा ज्ञेया लांछणे मशकादिना ॥ १२ ॥ कराङ्गुति दक्षिणो पाणौ·

मु० चि० नृपाणां स्तुभदा स्मृता ॥ अन्येषां लाभदा पादतले गमनकारिणी ॥ २३ ॥ अथ पल्लीप-
१५६ तनफलम् ॥ तत्राशुभाशुभतिथिवारनक्षत्राणि ॥ भू १ नेत्रा २ ग्नि ३ शरां ५ ग ६ शा १० विश्वा
१३ दित्य १२ घ्न ११ संमिताः ॥ तिथयश्चाशुभदा पल्लीपातेऽन्यास्तु शुभा मताः ॥ २४
॥ सौम्या वारा शुभा प्रोक्ताः पापा दुष्टफलप्रदाः ॥ पुष्याश्विरोहिणीद्वन्द्वं पुनर्भं फल्गु-
न्यस्यम् ॥ २५ ॥ धनिष्ठान्त्यानुराधा स्वं शतभं च शुभप्रदम् ॥ दृतोऽन्यद्धि निषिद्धं स्या
त्पल्लीपाते नृणां सदा ॥ २६ ॥ दक्षिणाङ्गेऽखिले पुंसां वामाङ्गे च स्त्रियां शुभम् ॥ नाभौ हृ
घुदरे चैव मस्तके हनु वर्जिते ॥ २७ ॥ पल्लीपातः शुभो ज्ञेय स्ततोऽन्यत्र न शोभनम् ॥
यत्फलं पतने पल्ल्याः शरटारोहणेऽपि तत् ॥ २८ ॥ शरटस्य प्रपाते च पल्ल्यारोहे तथा फ-
लम् ॥ स्नातव्यं स्पर्शने पल्ल्याः शरटस्य सदा समा ॥ २९ ॥ जन्मर्क्षे मृत्युयोगे च द-
ग्धे विष्ट्यादिदूषिते ॥ लग्ने पापयुते चन्द्रेऽशुभे रिष्टं प्रजायते ॥ ३० ॥ तत्र शान्तिं जु-
पं होमं रुद्रं मृत्युञ्जयादिकम् ॥ पंचगव्ययुतं स्नानं कुर्यादाज्यावलोकनम् ॥ ३१ ॥ ३५६

अथ खञ्जन दृष्टिफलम् ॥ वित्तं च लाभ कार्य्य सिद्धि र् तुला प्राच्ये कृता शो भयं याम्ये रोगभ
यं सुरारि कल हो वित्तं समुद्भ्रालये ॥ वायव्ये वर वस्त्र यान शयनं दिव्यांगना चोत्तरे
ईशाने मरणं ध्रुवं निगदितं दिग् लक्षणं खञ्जने ॥ २२॥ अपां समीपे गज मस्तके वा
सूर्य्या स्थे वारण सन्निधौ वा ॥ आकाश मार्गे गहने वने वा धन्यो नरः पश्यति खञ्जरीट
म् ॥ २३ ॥ अथ खञ्जन शकुने वसंत राजः ॥ अश्वे षु गोषु गज वाजि महोरगेषु राज्य प्रदः
कुशलदः शुचि शाद्वलेषु ॥ भस्मास्थि काष्ठ न विद दन्ति उलूक केषु सद्यो ददाति
मरणं खलु खंजरीटः ॥ २४ ॥ यः कंधरोरः शिरसा समंतात् विभर्त्ति कायञ्च समंत
भद्रः ॥ आकाश वद्यो गल मात्र कृष्णः शितानना यः खलु कार्य्य नाशः ॥ २५ ॥सा
र्प्योहरिद्रा रस सन्निभो यो गो मूत्र भाभः खलु खंजनो धमः ॥ सर्वत्र कार्य्यं विपुलांच ल
क्ष्मीं स मंत भद्रः प्रददाति भद्रम् ॥ २६ ॥ खरोष्ट्र केष्वेव च पृष्ठ यातः छिद्रं-
स्य पक्षौ विदधाति मृत्युं ॥ पक्षे विधुन्वन्दिवसस्य चान्ते दृष्टो मृतो वान शुभः कदा-

चित् ॥ २७ ॥ यादृश्य वस्था शकुनेर मुष्य शुभाशुभा वा मणमेन्हि दृष्टा ॥ स्वस्था
पिता दृश्युप लक्षणी यात द्विस्तरेणा लभिष्ठा परेण ॥ २८ ॥ अथ क्षुतम् ॥ औषध्य भ्य-
यनें वा देवा र्चने शयने ऽशने ॥ बीज वापे बुधैः प्रोक्तं शोभनं सत्त सु क्षुतम् ॥ २९ ॥
मृत्युर्वन्हि भयं हानि स्तुष्टि र्द्रव्या गम स्सुखम् ॥ क्लेशो ऽर्था गमनं प्रोक्तं दिक्षु क्षि-
ता फलं क्रमात् ॥ ३० ॥ अत्रोदाहरणम् ॥ यामाद्रू सन्न्यूना द्दालो दिक्चेद्यं च पृथक् पृथ-
क् ॥ प्राग्रे ऽर्ड प्रहरे प्राच्यां द्वितीये ऽग्नि दिशि क्रमात् ॥ ३१ ॥ तृतीये याम्यत श्चैव
फल मुक्तं विचक्षणैः ॥ वामे च पृष्ठे शुभदं फलं च स्या द्दक्षिणे ऽग्रे फल मत्र चिंत्यम् ॥
३२ ॥ स्थानोप विष्टस्य वृथा क्षुतं स्यादुठा त्क्षुतं भले क्ष भवच्च वृद्धात् ॥ स्याद्भोजने
वा शयने तथा दौ स्थानांतरे शोभन मत्र नान्यत् ॥ ३३ ॥ अत्यर्थ निंद्यं क्षुत मत्र वाच्यं-
नहर्ष वृत्या श्च कुमारि कायाः ॥ मद्यस्य कर्तुः प्रमदा जनानां स्याच्च र्भिकायाः स्थव-
स्य कन्याः ॥ ३४ ॥ प्रयोजने यत्र कृते ऽपि जातं क्षुतं क्षणात्तद्धि निहन्त्य वश्य म् ॥

कार्य्योत्सुकेनापि मनागपीत्थं तस्मादुपेक्ष्यं न विचक्षणेन ॥ ३५ ॥ होमपूजाश्वान-
क्षेमधर्म्मान्नेच भवेच्छुतम् ॥ सविशेषं तदा कार्य्यं पुनर्व्याहृत्य जायते ॥ ३६ ॥ अथ
श्वानफलम् ॥ वामान्दिशं दक्षिणभूमिभागाद्गच्छन्प्रयाणे शुनकः प्रशस्तः ॥ वाम
प्रदेशात्स पुनः प्रवेशे प्रशस्यते दक्षिणभागगामी ॥ ३७ ॥ मूत्रं च कृत्वाभिमुखं प्र-
याति यो जागरूकः शुभदस्स पुंसाम् ॥ कार्य्येषु सर्वेष्वपि सर्वकालं न मूत्रयन्ती शु-
नकी प्रशस्ता ॥ ३८ ॥ ध्वजे सुरस्ता यदि मूत्रयित्वा सदैव तत्सिध्यति कार्य्यमिष्टम् ॥
मिष्टान्नभोज्यं यदि गोमये तु शुष्केन शस्तं स जले प्रशस्तम् ॥ ३९ ॥ आयाति रुष्टो
ऽभिमुखो यदि श्वा क्रीडां प्रकुर्वन्विलुठन्धरित्र्याम् ॥ शीघ्रं नदानी भुवमध्वगानां-
ध्रुवं प्रभूतो धनधान्यलाभः ॥ ४० ॥ नृणां प्रयाणे भवनागमे वा श्वानो रमन्ते यदि स
प्रमोदाः ॥ तदेष्टकार्य्येऽपि भवेत्प्रमोदः समागमश्च स्वजनैः स्तमं स्यात् ॥ ४१ ॥
श्वा वेपुरस्तादवनीं विलिख्य यातुर्मुखं पश्यति चेत्तदानीम् ॥ तत्रैव देशेऽह्नि विशा

स्य लाभं व्रजन्ति कार्य्येन हि संशयोऽत्र ॥ ४२ ॥ फलं गृहीत्वा सहसा निवासं-
श्चा वै विशेज्जल्पति पुत्रलाभम् ॥ यो ऽभ्येति दृष्ट्वाभिमुखं प्रयातुः शीघ्रं प्रकु-
र्य्याद्धनधान्यलाभम् ॥ ४३ ॥ अथ काकशकुनानि ॥ वामेन गत्वा विनिवृत्य मार्गे
काको यदा दक्षिणभागगस्स्यात् ॥ यातुः प्रकुर्य्याद्धितकार्य्यसिद्धिं क्षेमं च सि-
द्धिं पुनरागमं च ॥ ४४ ॥ कृत्वा रवं यः पुरतः प्रयाति पुरःस्थितो ऽधो मृदमादधाति
॥ कण्डूयते यश्च शिरोऽघ्रिणा शः पुंसां तदाभीष्ट फलं ददाति ॥ ४५ ॥ केंकेमि
ह स्त्री घाते योषिदास्ये यो गायं कों को मिति शब्दितं स्यात् ॥ अपत्यलाभः कुकु
हेत्यनेन गन्तं फलं कंक कदृत्यनेन ॥ ४६ ॥ कोंकोमितीदं सुखलाभकारी क्रुंक्रुं
निनादः प्रियसंगमाय ॥ मैत्र्यामये स्यात्कद्धलीव शब्दं कनेव वाणी धनहानि
कर्त्री ॥ ४७ ॥ अथ काकस्पर्शफलम् ॥ मस्तके वायसस्पर्शे दारिद्र्यं मरणं कालैः ॥ क
र्णौ स्कन्धे महाभीतिरिष्टं पृष्ठाङ्गकेष्वपि ॥ ४८ ॥ योषितां मस्तके भर्त्री ॥ ॥

श्व० सुतस्य च ॥ अथकाकस्पर्शदोषाभाव ॥ हस्ताधो वाप्यसिद्धान्नभस्य दध्या दियो गतः

३३१ ॥ ४९ ॥ काकस्पर्शो न दोषाय ह्य कस्माद्दूषणं न्तदा ॥ षण्मासाभ्यन्तरे मृत्युः काक

मैथुन दर्शने ॥ ५० ॥ दिवा वाय दिवा रात्रौ यः पश्येत्काक मैथुनम् ॥ सनरो मृत्यु

माप्नोति ह्यथवा स्थान नाशनम् ॥ ५१ ॥ काक घात व्रतं यद्वा विदधीता यवत्स

रम् ॥ पितॄन्देवान्द्विजान्भक्त्या भत्यहं वा भिवादयेत् ॥ ५२ ॥ जितेन्द्रियो जितक्रो

धस्तन्य धर्म परायणः ॥ तद्दोष प्रशमनार्थाय शान्ति कर्म समारभेत् ॥ ५३ ॥

कपोतो वायसः पक्षी शरदो मूर्द्धि चेत्यतेत् ॥ षण्मासाभ्यन्तरे तस्य स्वामिनोवा

मृतिस्तदा ॥ ५४ ॥ अथपिंगला ॥ गृहोपरि गृह द्वारि पिंगला यस्य रोदिति ॥ हानि

स्तस्य गृहस्यैव न शुभा तस्य सा स्मृता ॥ ५५ ॥ प्रशान्तायां दिशि वृक्षेषु शुभे

षु यदि पिंगला ॥ रौति भव्यं तु तत्रेति नाशुभं तत्र भाषितम् ॥ ५६ ॥ पृथिव्यां

कीचि कीची तिचि लिचीति जलोद्भवम् ॥ शब्दितं शुभ द्वेयं पिंगलाया बुधा

गृहस्थो परिभाष मारो दुःखाय स स्यात्खलु विदुः ॥ ५७ ॥ अथोलूकः ॥ गृहस्य नाशाय च सप्त रात्रा त्सायं च राज्ञो द्विगुणानुबंधी ॥ ५८ ॥ त्र्य मृत्युवे च ॥ गृहस्य नाशाय च सप्त रात्रा त्सायं च राज्ञो द्विगुणानुबंधी ॥ तस्मिन्त्र देशे निशि नाहं गृहद्वारि चरत्युलूको हरन्ति चौराः द्रविणं प्रसह्य ॥ तस्मिन्त्र देशे निशि मां- सयुक्त स्तद्दोष नाशाय वलिः प्रदेयः ॥ ५९ ॥ घूघू शब्द स्यात्सदा शान्त रूपः ग्लू ग्लू शब्द स्तादृश श्चैव वेद्यः॥ अन्ये शब्दा निंदिता एव वेद्याः पूर्वाचार्यैः सूर्यभीतस्य चोक्ताः॥ ६० ॥ शान्ता यान्दिशि वृक्षेषु ग्रामा द्दूरे च शब्दितः ॥ घूका त्स्यात्सर्व लोकानां वृद्धि वृद्धि सुखार्थकृत् ॥ ६१ ॥ अथ स्वस्यारिष्टज्ञानम् ॥ यस्य स्य स्वरोऽजस्रं षोडश हं वहे तदा ॥ सद्यो मृत्युस्ततो न्यूने न्यूनाह मिति मासकं ॥ ६२ ॥ एवं वाम स्वरे सौख्यं तयोर्न्नाशे मृतिः क्षणात् ॥ यस्य चन्द्रायते सूर्य श्चन्द्र स्सूर्यायते नरः ॥ ६३ ॥ अहो द्वयं त्रयं तस्य परमा सायं तरे मृतिः ॥ निष्प्रभं भास्करं पश्ये न्न्रयते दशभिर्दिनैः ॥ ६४ ॥ जाग्रत्पश्यति यः स्वप्नं सोऽपि वर्षं न

जीवति ॥ न विन्देत्कर्णघोषं यो नाघ्राणं रसनां भ्रुवम् ॥ ६५ ॥ मेढ्रं वामं न पश्येद्यस्त्व रमासात्स न जीवति ॥ मणिबंधं ललाटस्थं यदि सूक्ष्मं न पश्यति ॥ ६६ ॥ यो दुर्गंधिर्विना हेतुः श्रीको वा हृति दीप्तिमान् ॥ कृशांगः स्थूलदेहः स्यात् सरक्तस्सन रवोऽपि वा ॥ ६७ ॥ सतद्वा मे क्षणो वापि मासषट्कं न जीवति ॥ ध्रुवं विष्णोः पदं चैवारुन्धतीं मातृमंडलम् ॥ ६८ ॥ अमालां चंद्रगं चिन्हमपश्यन्नैव जीवति ॥ कपोमज्जन्ति यस्याशु पंकादौ खंडितं पदं ॥ ६९ ॥ स्नातस्यपा गुरु शुष्येद्वृनालिस्स्याच्च मूर्द्धनि ॥ नो सुभुक्तो ध्वनिं धत्ते स्थूलदेहकृशस्तथा ॥ ७० ॥ अथ संग्राम शुभचिन्हं ॥ जिव्हाशोफः सदं पश्च तांबूले रागहीनता ॥ वाणी सगद्गदा यस्य तस्य मृत्यू रणे भवेत् ॥ ७१ ॥ अथ युद्धजय लक्षणम् ॥ प्रफुल्लितवपुः कायो रोमांची स्थिरदृग्भटः ॥ धैर्यान्वितस्य मुत्साही विजयी स रणे भवेत् ॥ ७२ ॥ अथ छाया पुरुषदर्शनप्रकारं तत्फलं च ॥ प्रातः पृष्ठगते सूर्ये स्नात्वा मत्युदङ्मुखो नरः ॥ तिष्ठन्नानाविधे देशे पश्येच्छायां निजां ततः ॥ ७३ ॥ हृत्कंठ

विदुः ॥ ५७ ॥ [illegible] मपतयान्विरम् ॥ ततो द्रागम्बरे पश्ये च्छाया पुरुष मात्मनः ॥७४
मृत्यु वे [illegible] वर्त्त चेत्सं सुखे श्वेत मीक्षते ॥ यावदब्दं सुखं क्षेमं विजयं प्राप्नुया त्तदा ॥
[illegible] ॥ दृष्टे तस्मिन्निशिरो हीने मास षट्कं न जीवति ॥ विकर्णे हायनं चैकं व्यंसे वै सप्त मा-
[illegible] ॥ ७६ ॥ सरंभ हृदये सप्त दश मासान्वि हस्तके ॥ विपार्श्वे त्रीन्व्युरस्के द्वौ व्यास्ये
मासं हि जीवति ॥ ७७ ॥ द्विदेह दर्शने मृत्युः सद्य एव न संशयः ॥ मित्र नाशो विपादे च
वंधुनाशो विहस्तके ॥ ७८ ॥ आत्मनाशो विशीर्षे स्यात्सर्वाभावे कुलक्षयः ॥ दुर्भि
क्षं दारुणं देशे कर्बुरे च पराङ्मुखे ॥ ७९ ॥ विवरे भूम्रके रुक्षे भिन्ने छिन्ने विघातनम् ॥
पीते रुजोऽरुणे हानिः कृष्णे मृत्युः प्रजायते ॥ ८० ॥ अथ स्वप्न दर्शन फलम् ॥ आद्ये यामे नि-
शि स्वप्नो वर्षेण फलदो भवेत् ॥ द्वितीये मास षट्केन त्रिभिर्मासै स्तृतीयके ॥ ८१ ॥ प्रा-
त स्सद्य फलः स्वप्नः स्नात्वा सुप्यान्न चेन्नरः ॥ रोग चिंतोद्भवा व्यर्था या चैव दिवे क्षि-
ता ॥ ८२ ॥ अथ शुभफलदा स्वप्नाः ॥ सद्राजा ब्राह्मणा देवा सिद्ध गंधर्व किन्नराः ॥ गुरुः श्वेता

स्वरानारी तेषां चेद्दर्शनं शुभम्॥ ८३॥ प्रासाद गुरु शैलानां श्वेतो ह्य गज वाजिनाम्॥ दर्शनं रोह
णं लाभः सिंह स्यारोहणं तथा॥ ८४॥ ध्वजं छत्रं सुवर्णाब्ज रत्न रौप्य दधीनि च॥ यव गोधू
म सिद्धार्था फलं दीपश्च कन्यका॥ ८५॥ स्त्री घंटाक्षत दूर्वाश्च दर्पणः पुष्पितो द्रुमः॥ ला-
भेदा दर्शने चैषां लाभः सौख्यं भवेद्ध्रुवः॥ ८६॥ भोजनं रोदनं वीणा वादनं नौ प्ररोहणम्
॥ अगम्या गमनं विष्ठा लेपनं शस्त्र मारितम्॥ ८७॥ आरूढो यो हि जागर्त्ति स पुष्पं फलितं
द्रुमम्॥ दंष्ट्रः श्वेताहि नादंशे करे स्यात्स महाधनः॥ ८८॥ रुधिरस्नान पाने च सर्प्प दंशो मृ-
तिर्निजः॥ शय्या हर्म्या शनं गानं ज्वलनं स्वशिर श्छिदा॥ ८९॥ रक्ता श्रावो जलैः स्नानं मरणं
मांस भक्षणम्॥ सुरायाः पयसः पानं प्रशस्तं पायसाशनम्॥ ९०॥ कदली कल्प वृक्षाश्च ती-
र्थं गंगादिकं सरित्॥ तोरणं भूषणं राज्यं स्वांते च ग्राम वेष्टनम्॥ ९१॥ वेदवाद्यादि निर्घोषग
नोग्नि स्मरणं तथा॥ दंशो वृश्चिक कीटानां तडागो द्यान दर्शनम्॥ ९२॥ पीतं रक्तं फलं पुष्पं स्वप्ने प्राप्नोति यो
नरः॥ लभते सोऽचिरात्स्वर्णं पद्मराग मणिं तथा॥ ९३॥ जयो द्यूते रणे वादे पुरुहूत ध्वजेक्षणम्॥ आत्मनोवं

सं.टी. नं शीर्षवन्हं राव मनुत्तमम् ॥ ९४ ॥ अभिषिंचकरो विप्रो देवो वा स्तत्र धारणात् ॥ कुरुते म-
ख.४ हिषी व्याघ्री गो सिंही स्तन्यपानकम् ॥ ९५ ॥ स्वनाभौ तृण वृक्षांश्च पुष्पाणामुद्भव स्त-
था ॥ भुवो भूमिधरस्यापि क्रमेणो क्षेपणो भुगः ॥ ९६ ॥ सरिसो दधि शैष्याणां पात्रे वा
भोजिनी दले ॥ योऽश्नाति पायसं स्वप्ने स राज्यमधिगच्छति ॥ ९७ ॥ गो लिङ्गि ब्राह्मं-
णो राजा पिता मित्रं च देवता ॥ यद्ब्रूते तद सत्स्वप्ने तत्तथैव प्रजायते ॥ ९८ ॥ पूजितं शिव
लिंगं च देवता वा तथा विधा ॥ स्वप्ने दृष्टा प्रयच्छंति नराणां विपुलं धनम् ॥ ९९ ॥ त्य-
क्त्वा तक्रास्थि कर्पासं श्वेतं सर्वं शुभं मतम् ॥ सर्वं कृष्णमसद्धित्वा गो देवा श्व गज द्विजान् ॥
॥ १०० ॥ अथाशुभ स्वप्नाः ॥ तैलाभ्यक्तोऽथ दिग्वासा आरूढं महियं स्वरम् ॥ उष्ट्रं व्रजन् द-
क्षिणं चास्य याम्यां गच्छन्न जीवति ॥ १०१ ॥ पाकस्थाने वने उक्तपुष्पो वै सूतिकागृहे ॥
विकलां गो विप्रो त्स्वप्ने सोऽशुभिर्वि प्रयुज्यते ॥ १०२ ॥ उपद्रवं तियं स्वप्ने श्रृंगिणो दंष्ट्रि-
णोऽपि वा ॥ वानरो वा वराहो वा स वै द्राज्य कुलांतक : ॥ १०३ ॥ जतुकौंकुमसिंदूरध

तवोयस्य मन्दिरे ॥ पतान्त नरो तत्तस्य गृह
गान्मेवुत्तरा पुष्य द्रुमो द्रुमः ॥ खरोष्ट्र कपि सर्व्वाद्यै र्यानं स्नेहस्य भक्षणम् ॥ १०५
॥ कलुषेणाम्बुना मध्या कर्दमे गोमयेन च ॥ स्नेहेनव पुषोलेपः कर्दमेवि निमज्जन
म् ॥ १०६ ॥ प्रातो दन्दंत हस्तानां जिह्वायाश्चांत्रयोस्तथा ॥ एते शोक प्रदाः स्वप्ना
दृष्टा हानि करा अपि ॥ १०७ ॥ स्वप्ने सान्दोलनं गीतं क्रीडितं स्फोटितं तथा ॥ हसितं
भूषितं कोतो वहन्नीरे रथो गतम् ॥ १०८ ॥ सूर्येन्दुध्वज ताराणां पात स्त्वस्य चिता
पिवा ॥ रज्वा छेदः शिरो भागे कांस्य चूर्णस्य धारणं ॥ १०९ ॥ प्रवेशो जननी गर्भे हृ
षमेत दरिष्ट दम् ॥ करवीर मपुष्पो कंच लता पाशेन बंधनम् ॥ ११० ॥ कृष्णां वरधरा
योषा लिंगनं मृत्यु कारणाम् ॥ मारुह्य पुष्पिता न्वृक्षान्यो विचिंत्य निजं वपुः ॥ १११ ॥
भूषयत्य रुणैः पुष्पैः सोऽपि प्राणै र्वियुज्यते ॥ धृत रक्तां वराश्लिष्टो हत्या माप्नोति मान
वः ॥ ११२ ॥ यस्तु धूमित मात्मानं व्याप्तं धूमेन वेक्षते ॥ भस्माज्य लोह लाभं च स्व ल-

स्त्या वियुज्यते ॥ ११३ ॥ क्रोष्टु कुक्कुट मार्जार गोधावभ्रुभुजंगमाः ॥ जम्बुका वृश्चि-
दंशाश्च दृष्टास्स्वप्नेन शोभनाः ॥ ११४ ॥ रत्न द्रव्यायुधोपानत् शय्या भूषाश्च योषि-
ताम् ॥ सवस्त्रादि प्रिय वस्तूना सहारोऽर्थनाशकः ॥ ११५ ॥ विवाहोत्सवयो श्शो-
के भ्रंशे वान स्वके गयोः ॥ कशाधवयवानां तु छेदने स्वप्न नाशकः ॥ ११६ ॥ वपनं
श्मश्रु केशानां नेत्र रुक् खंजनं तथा ॥ कूप गर्त दरि ध्वांत विवरेषु न शोभनम् ॥
११७ ॥ कपोतश्श्येन गृध्राद्या ऋक्ष कौशिक वायसाः ॥ शृगाल शशक श्वानो दृष्टाः
स्वप्नेन शोभनाः ॥ ११८ ॥ शष्कुली कृशरान्नानां गुड पूपादि भक्षणम् ॥ गोमयं
चोष्ण पानीयं स्वप्ने पीतं न शोभनम् ॥ ११९ ॥ रक्ते पुरुष मूत्रे वा श्रवन्मृत्यु मवाप्नुयात्
रक्त कृष्णानि वासांसि पुष्पाणि च विभर्त्ति यः ॥ १२० ॥ पितृकार्य्यं प्रकुर्वाणो म्रियते स
न संशयः ॥ भूत प्रेत पिशाचाद्यैः श्वपचैस्सह संगतः ॥ १२१ ॥ आहूतो बाध्यते-
ऽसौ स्त्री स्वल्पाहे म्रियते नुसः ॥ असूर्य्यं दिवसं रात्रिं विचंद्रां गत तारकाम् ॥ १२२ ॥ रूपं

यो कोलजां पश्येत्स्वप्ने सोऽपि विनश्यति ॥ सीसपित्तलकस्तीरं कांसताम्रायसं वपुः ॥ १२३ ॥ शुष्क वृक्षौषधं शिल्पी दृष्ट्वा स्वैतेन शोभनाः ॥ प्रासादस्तत्र भूमीद्ध्रिरदरणां ध्वजस्यच ॥ १२४ ॥ पतनं शक्रचापस्य नराङ्कस्य विनाशकृत् ॥ तारकोलाहलाह्वानिंदा क्रोधादिसंभवः ॥ १२५ ॥ विद्याद्राज्यभयं दृष्टि श्टंगी केशादिविद्वात् ॥ अथ स्वप्नफलव्यवस्था ॥ येदृष्टा स्वप्नति स्वप्नाः स्वस्यैव फलदास्मृते ॥ १२६ ॥ परं प्रति चते तस्य फलदाः किंचिदात्मनि ॥ अथ दुष्ट स्वप्नदर्शन दोष शान्तिः ॥ दुष्ट्वा लौकिते स्वप्ने निवेद्यो ब्राह्मणाय तत् ॥ आशीर्भिस्तोषितो विप्रैः पुनःस्सुप्यान्नरे श्वरः ॥ १२८ ॥ नब्रूयाच्च पुनस्स्वप्नं संस्नायात्पुण्य वारिभिः ॥ मृत्युञ्जय जपो होमः शांतिस्स्वस्त्ययनादिकम् ॥ १२९ ॥ सेवाश्वत्थ गवां प्रातर्दानं स्वर्णादि शक्तिच ॥ श्रवणम्भारतादीनां स्वप्नदोषप्रशान्तये ॥ १३० ॥ अथोत्पाताः ॥ उत्पातास्त्रिविधाज्ञेया दिविभौमांतरिक्षजाः ॥ भेषुदिव्यास्तथा वृक्षध्वजादावन्तरिक्षजाः ॥ १३१ ॥ भूमौ भौमाः क्रमादुग्रमध्यमाल्पफ-

लप्रदाः ॥ अथोत्पातानां संग्रहः ॥ भूमिकंपो दिशां दाहो निर्घातो धूलिवर्षणं ॥ उल्कापा-
तस्तरुच्छेदो नभसो वृष्टि रक्तसनाम् ॥ १३२ ॥ अंधकारो दिवा विद्युत्पातोऽऋतु विपर्य्य
यः ॥ प्रकृतिप्रसवो जन्तो रवीन्द्रोश्च विपर्य्ययः ॥ १३३ ॥ ग्रहाणां वा युतिर्युद्धं स्वका-
ले यत्र जायते ॥ वर्षाकालं विना दिवो रवीन्द्वोः परिमंडलम् ॥ १३४ ॥ अकस्मात्तु स्थ
लार्द्रत्वं च ग्रासं ग्रहण ह्यसु ॥ बालस्त्रीद्विजवर्य्याणां वधः पीडा जनस्य च ॥ १३५ ॥ प्रा
सादस्य च देवस्य ध्वंसः पातो ध्वजस्य च ॥ ग्रहाः वक्रातिचारस्थाः सर्वे वास्तंगताः खगाः
१३६ ॥ सर्वेऽप्येकर्क्षगाः खेटाः एकर्क्षेऽर्कि बृहस्पती ॥ शुक्लपक्षे भृगो रक्तो दृश्यो वा
केतुदर्शने ॥ १३७ ॥ मुशलं खगपंक्तिस्थं ध्वजादि चंद्रार्कि दर्शनम् ॥ चुल्ल्यामग्न्यु-
द्भवोऽकस्मात् जले धूमादिकं भवेत् ॥ १३८ ॥ उलूखलघरट्यादि चलनं स्फोटनं तथा
॥ प्रतिमायाः प्रकंपो वा हसनं रोदनं तथा ॥ १३९ ॥ भुवो विवरदृत्याद्या उत्पाता स्त्वप
रेऽपि च ॥ ग्रंथांतराच्च ते ज्ञेयाः फलमेषां ब्रवीम्यथ ॥ १४० ॥ अथोत्पातज्ञानाय चतुर्विध-

३५

मण्डलानि ॥ कृत्तिकाभरणीपुष्यं मघापूर्वाविशाखिका ॥ पूर्वाफाल्गुणिके तानि भानि सप्ताग्नि मंडलम् ॥ मूलाश्लेषा शताद्री न्योत्तराभाद्रपदस्तथा ॥ पूर्वाषाढाशिधैतानि सप्त वारुण मंडलम् ॥ १४१ ॥ पुनर्वो फाश्विनी हस्तं नित्यं मृगशीर्षकं ॥ वायु मंडलस ज्ञानि भानि सप्त स्मृतानि च ॥ १४२ ॥ अभिजिच्चोत्तरा स्वाढा नुराधा श्रवण द्वयम् ॥ ज्येष्ठा च रोहिणी भानि सप्त चैन्द्रस्य मंडलम् ॥ १४३ ॥ भूकंपादि महोत्पाता जायंते यत्र मंडले ॥ तत्तत्स्वभावजं द्रव्यं जंतु देशं च पीडयेत् ॥ १४४ ॥ दिनेश मण्डलके तद्वत्तत्स्थान निवासि नाम् ॥ छिन्ने खंड फलं चाति दूरे नास्ति फलं त्विदम् ॥ १४५ ॥ श्वेते भव्यं च पीते तु वृष्टि नील गुणो रुजः ॥ रूक्षे भूप क्षयो धूम्रे नीहारः परिधे भवेत् ॥ १४६ प्रावित् कालं विना न्यत्र परिधिश्चेत्तदा त्विदम् ॥ तस्मिन्काले तु वृष्टिः स्यात् परिधोरूसतादिते ॥ १४७ ॥ अकाले फल पुष्पाणां मुद्भवे धान्य नाशनम् ॥ जलाद्भवे स्थले च्छिन्नं हृती परि कीर्त्तिता ॥ २४८ ॥ स्त्रीवधे चाति दुर्भिक्षं विप्र बालवधेऽपितत् ॥ द्वयधं

सेच्च देशस्य राजध्वंसः प्रजायते ॥ १४९ ॥ सर्वग्रासे ग्रहे सर्व वस्तूनां च महर्घता ॥ दु-
र्भिक्षं कुरुते खेटा सौम्या वा वक्रगामिनः ॥ १५० ॥ अतीचारगता स्सर्वे स्वर्क्ष स्वोच्च ग-
ताश्शति ॥ ज्ञेया भव्य फलास्त्वेकराशिस्था देशनाशकाः ॥ १५१ ॥ स्याता मस्तो दयो
शुक्ले पक्षे चेद्भार्गवस्य च ॥ राजयुद्धं तथा घोरं वृष्टिः स्यात्तु निरंतरा ॥ १५२ ॥ जीवार्के
पुत्रयो र्योगे दुर्भिक्षं विग्रहस्तथा ॥ संग्रामश्चाति दुर्भिक्षं जायते भुशालोदये ॥ १५३
॥ अथ केतवः ॥ मुशला इति धूम्राभा दीर्घ पुच्छनिभाश्चये ॥ तथा श्वेत शिखाकारा
विद्युल्लोतो निभाश्चये ॥ १५४ ॥ इत्याद्याः केतव स्सर्वे राष्ट्र भंग करा मताः ॥ धू-
म के तूदये मृत्यु र्जायते पृथिवी पतेः ॥ १५५ ॥ शिखाः श्वेतो निभाः केचिच्छोभ-
नाः परिकीर्तिताः ॥ सितः स्निग्धोऽल्पको दीर्घः शीघ्रोऽतीव शुभप्रदः ॥ १५६
॥ वन्हि भीरग्नि रक्ताभो रूक्ष वर्णो मृतिप्रदः ॥ शक्रध्वज समो नेष्टः धूम्रवर्णोऽपि
तद्विधः ॥ १५७ ॥ नेष्टो द्वित्रि चतुः शूला द्युत्यन्तिः कथिता बुधैः ॥ रक्त पंक्ति निभे स्व-

र्तावर्गोमागपरोदये ॥ १५८ ॥ नृपनाशस्तथै शान्यांते तालाशोमहर्घता ॥ नाशाद्धत्काथि-
तस्य ग्रंथस्लोऽयोतारकाभ्रमः ॥ १५९ ॥ तावंध सदृशो याम्यां दुःखदो भूमिचारिणाम् ॥
यावद्दिवसमुत्पातःसमुदेति नभःस्थले ॥ १६० ॥ तावन्मासं फलन्धत्ते मासे र्वर्षाणि संव-
देत् ॥ अथान्योत्पात फलानि ॥ आरण्य पशवो ग्रामे चेद्विशंते निजेच्छया ॥ कुर्वंति चश-
हं शून्य मुलूकी च गृहं विशन् ॥ १६१ ॥ वल्मीकं क्षौद्रजालं वा यस्य सद्मनि जायते
॥ तदा गेहपतेर्न्नाशः कपोते वा गृहं गते ॥ १६२ ॥ ह्यादिचंद्रार्कबिंबे स्याद्रोगभी-
तीरणो मृतिः ॥ गृहाभावे फलं नेष्टं ह्यादिजीवे तु शोभनम् ॥ १६३ ॥ धरणी विवरोद्दे-
शे नृप नाशो रिपोर्भयम् ॥ त्रयो दश दिनः पक्षो यस्मिन्नब्दे भवेत्तदा ॥ १६४ ॥ प्रजाना-
शोऽथ दुर्भिक्षं तथा भूमिभुजांक्षयः ॥ अथ निर्घात स्वरूप तत्फलं च ॥ प्रचण्ड वात सञ्जात निर्घा-
त पतनं भुवि ॥ पक्षि दीप्ते ऽरुणे नेष्टं नृपहा भास्करोदये ॥ १६५ ॥ निर्घातश्चंड शब्दोः
थगाच्छन्तो नाशयेद्द्विशम् ॥ घोर चौर द्विजान्वै स्यान्न्यायाभेः क्रमाद्दिवा ॥ १६६ ॥

ग्रस्ते वान्त्यजान्यौम्ये हरे च्छ्रस्या क्रमात् ॥ याम्यिन्यां धान्यपैशाद स्तम्भे स्मतु रंगमान् ॥ १६९ ॥ अथोल्कालक्षणं तत्फलंच ॥ धरणी भाग संचार घोर रावास निर्म्मला ॥ तटत्तट ध्वा विधुक्तुलली दीर्घ वक्रगा ॥ १७० ॥ अल्प पुच्छाग्निभा तद्भवद्धि हस्ताय सपत्रगा ॥ तिर्य्यगूर्द्ध्वगता श्वेता रक्ता तन्वी तु तारका ॥ १७१ ॥ उल्कातु विविधाकारा कृत्स्न पुच्छाति दारुणा ॥ अथ दिग्दाह फलम् ॥ दिग्दाहः पीत वर्णश्चे द्भूमि पालं निहंतिसः ॥ भाविवर्णो निजं देशं वर्णानुत्तरतः क्रमात् ॥ १७२ ॥ धूम्रो ऽल्य भामतां कुर्य्याद् रुक्षो देशं तु निर्द्धनम् ॥ प्राच्यां भूमि भुजान्हन्या दैशान्यां विदिशः क्रमात् ॥ १७३ ॥ वैश्यान् शिल्पविदश्चोरान् तुरगान् क्रमतस्त्वथ ॥ निशि स्वर्णनिभः सव्यवायो खे विमले शुभः ॥ १७४ ॥ अथ भूकंप फलम् ॥ भूकंपो याम्यतो वर्णान् क्रमाद्धन्या दिवा निशि ॥ वायु मंडलजो भूप ग्रस्यां वुम गधंतया ॥ १७५ ॥ पामान्त मुदके वन्हि मंडलस्थो निहंतिचं ॥ चन्द्र मण्डलयो भूपांस्तथा गुर्ज्जर देश कान् ॥ १७६ ॥ भूपालांश्चीन-

देशी यान्त्रचेता मण्डलाद्भवः ॥१७७॥ पर्जन्याद्यः ॥ रजोश्च धूम्रावृत्तं भवेदनुरुपं-
न्नृपभीस्तथा ॥ भयंतद्दिग्विधूम्रा भेतस्मिन्कूले रुजां भयम् ॥१७८॥ रजः स्सूर्योद-
ये व्योम छादये द्दिव्यहंयदा ॥ तदा रोगाः प्रभूता स्स्युर्न्निशायामे तु भूपहृत् ॥१७९॥
॥ नित्यं रात्रि द्वयं नेष्वं क्षुद्भयं त्रिचतुर्द्दिनम् ॥ पञ्चाहं चेद्भयं घोर मृते कालं च षेष्टिर
म् ॥१८०॥ अथ गंधर्वनगरं तत्फलंच ॥ गंधर्वनगरं हंति वर्णान्श्वेतादि वर्णकम् ॥ क्र-
मात्सूर्वदिग्गो भूपा मात्य सैन्य पुरोहितान् ॥१८१॥ सध्वजं निर्द्दनं कुर्य्यी दायु धाग्नि-
निभं भयम् ॥ अथैषामुत्पातानां फलपाक समयः ॥ षड्भिर्म्मासैर्भुवः कंपो जायते फ-
लमुक्तवत् ॥१८२॥ दिग्दाहे विकृतौ सूतौ केतु निर्घातयोस्त्रिभिः ॥ रजो ऽभिवर्षणे
सद्य उत्पाते ऽन्यत्रहायनात् ॥१८३॥ अथ वृष्टिविकृतिस्तत्फलम् ॥ अकाले रुक्नृपा-
र्तिश्च सप्ताहं व्यभ्रके ऽपि च ॥ वर्षणे वा रजो वृष्टो नेष्वं मासादिभिर्मृतिः ॥ १८४॥
भयमंगारकेद्यन्यैः फलाद्यैस्स्यान्नसंशयः ॥ देशनाशः सुको स्यांवुस्त्र वृष्टौ-

प्रजायते॥१८५॥ दीप्ते सूर्ये प्रतीपं स्यात् छादिते भीतिरीतितः॥ दंड्रचापेऽति दृष्टिस्स्या
द्दोभ्मिचण्डां शुदीप्ति॥१८६॥ अथपक्षिमृगादि विकृति स्तत्फलमपि ॥ ग्रामारण्या स्तथा नी-
रस्थलजाश्च निशाचराः॥ आशिनो व्यत्ययं जातास्स्व चक्रं पीडयंत्यमी॥१८७॥ संध्या
कालेऽथ दीप्ता यादिशो मार्गे पतत्रिणः॥ क्रोशंति जंबुकादीनां संघा द्वारं च तद्दिशि
॥१८८॥ विहंगा वियति व्यस्त चक्राभा तद्वत्स्ततः॥ कुक्कुटोऽस्तेच गोन्ते हंसन्ते
रोति कोकिलः॥१८९॥ स्वराश्च्वानोऽथवा स्वैरं प्रक्रीडंति परस्परम्॥ इत्यादि विकृतौ
धत्ते पीडा भवति भूयसी॥१९०॥ माघे वुधेतु महिषी श्रावणे वडवा दिवा॥ सिंहे गावः
प्रसूयंते स्वामिनो मृत्यु दायिकाः॥१९१॥ अथान्येऽप्यशुभोत्पाताः॥ अस्थिक्षिपति गेहेश्वा
सन्मुखोऽस्ते च रोदिति॥ यस्य तद्गेह नाशः स्यात् परमासाभ्यन्तरे तदा॥१९२॥ रोति
सूर्योदये श्वा चेद्ग्रामांते सूर्य दिङ्मुखः॥ भूप नाशस्तदा चास्ते कृषी शानाश माप्नुयुः
॥१९३॥ स्तंभद्वार निपातश्चेद्भूमौ त्पतति विनाग्निना॥ युद्धान्ते वालकास्स्वैरं काष्ठलो-

वः परस्परम् ॥ १९४ ॥ तदाभूप भयङ्घोरं विज्ञेयं दीर्घदर्शिभिः ॥ अंगना बालका मन्ना-
न्नूयंते यत्स्वभावतः ॥ १९५ ॥ सत्यं तज्ज्ञायते तस्माद्गूढा चेयं सरस्वती ॥ अथोत्पातदोषापवा-
दः ॥ स्वस्व शान्त्या महोत्पाता विनश्यंति च सर्वशः ॥ सप्ताहाभ्यन्तरे दृष्ट्या शुभाये
वन दुःखदाः ॥ १९६ ॥ अथोत्पातानामुपहारः शान्तिश्च ॥ धूम्रकेतुर्म्महीकंपो दिग्दाहो धूलि
वर्षणम् ॥ भुवो गर्त्तश्च निर्घात उल्कापातादयोऽपरे ॥ १९७ ॥ यस्मिन्देशे प्रजायंते म-
होत्पाता महाभयाः ॥ प्रजापीडा भवेत्तत्र विनाशः पृथिवीपते ॥ १९८ ॥ तदा शान्ति
र्विधातव्या देशे ग्रामे पुरेऽखिलैः ॥ शान्त्या दोषा विनश्यंति त्वन्यथा दोषमद्भुतम् ॥
इत्युत्पाताः अथ महर्घकाण्डम् तत्रादौ वर्षराजादिविचारः ॥ चैत्रमासि शिते पक्षेऽर्कोदये प्र-
तिपत्तिथौ ॥ यो वासरस्स राजा स्यात् तस्मिन्वर्षे ततः फलम् ॥ १९९ ॥ मेषेऽर्कस्य प्र-
वेशो यो वारो मंत्री स कथ्यते ॥ चापे धान्यपतिर्ज्ञेयः आर्द्रायां जलदाधिपः ॥ २०० ॥
रसाधिपस्तुलायां स्यात्कर्कस्य पतिस्तथा ॥ मकरे स्वर्णरत्नादिनीरसेशो बुधैः स्मृतः

ति ॥ २०१ ॥ अथ विशोपकापनयनम् ॥ शाके त्रिघ्ने हृते शैलैर्लब्धं स्थाप्यं पृथक् क्वचित् ॥ शे-
षं द्विघ्नं शरैर्युक्तं वर्गास्याच्च ततः पुनः ॥ २०२ ॥ लब्धं शाकं भकल्प्यैव कर्तव्या शेषवर्ति
या ॥ तृष्णा निद्रा तथालस्य मुद्यमः शांतिरेव च ॥ २०३ ॥ क्रोधो दंभो ऽथ मित्रत्व मुत्सवः
पाप पुण्यके ॥ अथ प्रकारान्तरेण क्षुधाद्यानयनम् ॥ शाके वेदैर्हृते शैलैर्भक्ते लब्धं च पूर्वव-
त् ॥ शेषे च द्विगुणे सैकं क्षुधा तृष्णा सुषुप्तिका ॥ २०४ ॥ आलस्य मुद्यमः शांतिः क्रोधो
लोभो ऽथ वेदकः ॥ दंडो ऽथ मैथुनं चौर्यं रसनिः पत्तिरेव च ॥ २०५ ॥ फलनिःपतिरुत्सा-
हः पुण्यं पापं तथैव च ॥ सर्वनिः पत्तिरित्येवं संपत्तिश्च यथाक्रमात् ॥ २०६ ॥ अथोत्पत्त्यानय-
नम् ॥ शाकश्चाष्टगुणः खेटै र्भक्तो लब्धं च पूर्ववत् ॥ द्विघ्न शेषं त्रिभिर्युक्तं मुत्सवश्च र-
सोद्भवः ॥ २०७ ॥ फलोत्पत्तिस्तथा व्याधिरोगनाशस्तथैव च ॥ आचारश्चाप्यनाचारस्त-
तिर्जन्म ततः परम् ॥ २०८ ॥ चौरो पशमनं वन्हेर्भीति रश्मि शमक्रमात् ॥ अथ शालभाद्यानय-
नम ॥ शाके त्रिघ्ने हृते नंदैर्लब्धं स्थाप्यं तदुक्तवत् ॥ द्विघ्ने शेषं त्रिभिर्युक्तं शलभो मूषक

स्तथा ॥ दैविकं पीतताम्रं च स्वचक्रं परचक्रकम् ॥ २०८ ॥ अथ प्रकारान्तरेण शल्यानयनम् ॥
शेल घ्नोनव हृच्छाकः शेषद्विघ्नं युतं त्रिभिः ॥ शल्य भो मूष को दैवं पीतं ताम्रं स्वचक्रक-
म् ॥ २०९ ॥ परचक्रागमश्चैव क्रमादेवं च पूर्ववत् ॥ अथोद्भिदादिप्राण्यानयनम् ॥ शाके वाणै-
र्नगैरग्नेरी शैन्निघ्ने पृथक् पृथक् ॥ सप्तभक्ताव शेषं यत् द्विघ्नं पंचयुतं क्रमात् ॥ उद्भि-
ज्जः स्वेदजश्चैव जरायुप्रभवोंडजः ॥ २१० ॥ अथ युगानां प्रमाणम् ॥ द्वात्रिंशति सहस्रैश्च
युक्तं लक्षचतुष्टयं ॥ प्रमाणं कलिवर्षाणां प्रोक्तं पूर्वैर्म्महर्षिभिः ॥ २११ ॥ युगानां कृत
मुख्यानां क्रमान्मानं प्रजायते ॥ कलेर्म्मानं क्रमान्निघ्नं चतुस्त्रिद्विमितैस्तदा ॥ २१२
कृतमानं १७२८००० त्रेतायाः १२९६००० द्वापरमानं ८६४००० कलिमानं ४३२००० ॥
अथ गतकलिमानम् ॥ खगशैलेन्दुरामाढ्ये शाके ऽब्दास्ते कलेर्गताः ॥ ते विहीनैः क-
लेर्म्मानं शेषे शेष कलेर्स्थितिः ॥ २१३ ॥ अथ धर्म्मानयनम् ॥ स्वाश्राश्रां केश्च वेदैश्च-
कलि शेषस्समायुतः ॥ कलिमानेन संभक्ताद्यल्लब्धं धर्म्मस्वसः ॥ २१४ ॥ प्राक्ताद्यैच

युतं जीव राशिभिस्तद्धतेऽ शके ॥ लब्धं पुरायंतु तन्न्यूना विंशतिः पाप मुच्यते ॥ २१५॥ अथ व्ययानयनार्थं भुवांकाः ॥ रस ६ स्तिथ्यो १५ गजा ८ श्चैरल चंद्रा १७ नंदेरव १९ स्तथा ॥ स्व र्गा २२ दिशः १० क्रमात् ज्ञेया रव्यादीनां भुवा इमे ॥ २१६॥ निज राशि युते वर्षे स्वामिनो- भवयोग के ॥ त्रिभि र्वाण युते भक्ते तिथि भिश्शेष संमिते ॥ २१७॥ आया स्स्युस्त्रि गुणे लब्धे पञ्चयुते तिथिभि र्हृते ॥ शेषे व्ययाः क्रमात्स्व स्व राशीनां कथिता वुधैः॥ २१८॥ अथ शकात्सु- भिक्षज्ञानम् ॥ शके त्रिघ्ने हृते वाणैः शैलै र्भक्तेऽथ शेष के ॥ क्रमान्मध्यं सुभिक्षं च दुर्भि- क्षं च सुभिक्षकम् ॥ २१९॥ महर्घं समता ज्ञेयाश्चैक तो रौरवं तु खे ॥ अथ संवत्सरात्सुभिक्षादि ज्ञानम् ॥ त्रिघ्ने संवत्सरे युक्ते शरै र्भक्तेऽथ सप्तभिः ॥ चतुर्द्वि त्रि मिते शेषे सुभिक्षं विपुलं भवेत् ॥ २२० ॥ निरं व के च दुर्भिक्षं षट् भू संख्ये च मध्यसमम् ॥ शून्ये तु रौरवं ज्ञेयं फलं वर्षे वुधैः सदा ॥ २२१ ॥ अथा परः प्रकारः ॥ द्विघ्न संवत्सरो रामैर्हृतो भक्तो नगै स्तथा ॥ शेषे- वाण मिते युग्मे सुभिक्षं हायनं भवेत् ॥ २२२ ॥ वेद चंद्र मिते ज्ञेयं दुर्भिक्षं खलु रौरवम् ॥ २-

सा न त्तु मिते मध्यमे तदर्धं फलं बुधैः ॥ २२४ ॥ अथ राजादीनां वह्निसंक्षेपात्फलम् ॥ राजामात्यनृपादीनां वह्निसंक्षेपतः फलम् ॥ गुरुशुक्रादयो ऽधीशाः संति चेज्जनसौख्यदाः ॥ २२५ ॥ सुभिक्षं शोभना वृष्टिर्देशस्वास्थ्यं प्रकुर्वते ॥ शनि भौमौ प्रकुर्वाते दुर्भिक्षं विग्रहं भयम् ॥ २२६ ॥ अल्पसौख्यप्रदः सौम्यः स्वल्पदुःखप्रदो रविः ॥ फलं सविस्तरं चैषां विज्ञेयं संहितादिषु ॥ २२७ ॥ अथ दीपमालायां नक्षत्रयोगफलम् ॥ यदि भवति कदाचित्कार्त्तिके नष्टचंद्रे शनिरविकुजवारे स्वातिवायुक्ष योगे ॥ गगनचरपशूनां जंगमस्थावराणां नृपतिजनविनाशो राज्यभंगस्तु चोक्तः ॥ २२८ ॥ अथापरेऽपि ॥ दर्शे वायुक्षतो स्वातौ पापाहे मासि कार्त्तिके ॥ प्रदेशे चेत्प्रजापीडा राजयुद्धादुपद्रवाः ॥ २२९ ॥ अथ ज्येष्ठप्रतिपदादियोगः ॥ ज्येष्ठे शुक्लतिथावाद्ये चन्द्रेज्यभृगुवासरे ॥ सुभिक्षं शोभना वृष्टिर्दुर्भिक्षं पापवासरे ॥ २३० ॥ अथाषाढद्वितीयानवमीयोगः ॥ आषाढे शुक्लपक्षे च द्वितीया नवमीदिने ॥ चन्द्रेज्यभृगुवारे स्यात्सुवृष्टिश्च समर्घता ॥ २३१ ॥ बुधे साम्यं रवौ तापः कुजे वृष्टिर्न जायते ॥

शनिवारे प्रजा पीडा दुर्भिक्षं रौरवं तदा॥ २३२॥ अथ शनिचारफलम् ॥ गुर्ज्जरे ऽजे शनौ-
पीडा प्रभासार्बुदयो वृषे ॥ मरुस्थले च युग्मे स्यात् कर्के काश्मीर मंडले॥ २३३॥ प्राक्प्र-
स्येच्च सिंहे स्यात् कन्यायां मालवे तथा ॥ तुलादित्रि पृथिव्यां च दुर्भिक्षो जनपीडनम् ॥
॥२३४॥ सुभिक्षं च मृगे कुंभे मीने सर्व प्रजा क्षयः ॥ अथ कूर्म्मचक्रम् ॥ कूर्म्मचक्रे शनिर्म्म-
ध्ये ततः प्राच्यादिषु क्रमात्॥ २३५॥ नाशयेत्क्रमतो देशान् कृत्तिकाद्यैस्त्रिभिस्त्रिभिः ॥
निजाधिष्ठित भैर्ई शानं तर्वेदि मुखाःस्तत॥२३६ मागधाद्यान् कलिंगादीनावंतिकमु-
खांस्तथा ॥ ततो कोंकन पौड्रा दीन् सिंधुसौराष्ट्रकादिकान्॥ २३७॥ पौलिंद चीनका-
घांश्च कुरुकाश्मीर मत्स्यकान् ॥ खलवाल्हीकपाटांश्च नव खंडानि शांस्तथा॥ २३८॥
दृष्ट्या स्वाधिष्ठिता हे शादीशान्यां यसदिगातान् ॥ अथ गहचार प्रशान्मह र्घादिः ॥ मेषे गुरौ
सुभिक्षं च सुवृष्टिश्च सुखी नरः ॥ वृषे गुरौ स्वल्पवृष्टिः प्रजा पीडा च विग्रहः॥ २३९॥ अना
वृष्टिः प्रजानाशो रौरवं मिथुने गुरौ ॥ कर्के गुरौ महावृष्टि रछत्र भंगो महर्घता॥ २४०॥

सिंहे गुरौ सुभिक्षं च सुवृष्टिश्च प्रजा सुखं ॥ कन्या गुरौ रोग पीडा दुर्भिक्षं स्वल्प जन्म च॥
२४१ ॥ तुले गुरौ स्वल्प शस्यं वहु क्षीरं प्रजायते अलौ जीवे च दुर्भिक्षं राज चौर रणा
द्भयम्॥२४२॥ चापे गुरौ सुधा वृष्टिः शुभं शस्यं सुखी जनः ॥ दुर्भिक्षं मकरे जीवे राजयु-
द्धं पशुक्षयम् ॥२४३॥ कुंभे गुरौ सुभिक्षं च धातु मूलं महर्घता ॥ दुर्भिक्षं दक्षिणे दे-
शे नान्य देशे झषे गुरौ ॥२४४ ॥ अथाषाढी पूर्णा विचारः ॥ आषाढी पूर्णिमायां च वाय-
व्ये यदि मारुतः ॥ मशका मूषका कीटा जायंते शलभा स्तथा॥२४५॥ आषाढी पूर्णि-
मायां चेद् निलो वाति नैऋते ॥ अनावृष्टि र्धान्य नाशो जलं कूपेन दृश्यते॥ २४६ ॥ आ-
षाढी पूर्णिमायां स्यादुत्तरे यदि मारुतः ॥ धर्म्म शीला स्तथा लोका धनं धान्यं गृहे गृहे॥
२४७॥ आषाढी पूर्णिमायां चे दीशाने यदि मारुतः ॥ सुखिनो हिनदा लोका गीतं वाद्यम-
होत्सवे॥२४८॥वन्हि कोणे वन्हि भीतिः पश्चिमे च जला द्भयम् ॥ अन्यत्र यदि वायुस्स्या
सुभिक्षं जायते सदा॥२४९ ॥ आषाढ्यो भास्करा स्ते सुर पति ककुभो वाति वाते सुवृष्टिः

शस्य ध्वंसं प्रकुर्य्याद्यदि दह्नदिशो मन्द दृष्टि र्यमेन ॥ नैर्ऋत्या मन्न नाशो वरुण व-
हुजलं वायुना वायु कोपः कौवेर्य्यां च भवति वसुमती त हूदीशान कोणे॥ २५०॥सर्व मा-
से पूर्णिमाया भूमिकंपो यदा भवेत् ॥ उल्का तारा वज्र पातः परिधिः शशि सूर्य्य योः ॥
२५१ ॥ धूम्र केतुः शक्र चापं ग्रहणं वहुधा तथा ॥ तदा सकल वस्तूनां ज्ञायते च महर्घ-
ता ॥ २५२॥ अथ प्रतिमासे दर्श फलम् ॥ शुभ वारान्विते दर्शे सुभिक्षं च प्रजा सुखम् ॥ पापवा
रान्विते दुःखं तदा धान्य महर्घता ॥ २५४॥ रवि वारेण संयुक्ता यदा स्यात्पौष ज्येष्ठयोः ॥
अमावास्या तदा पृथ्वी रुंड मुंडा च जायते॥ २५५॥ चैत्रस्य शुक्ल पंचम्यां पूर्वे वायुर्द्दना गमः ॥
भाद्रे गुण त्रयं मौल्यं शस्या ना ज्ञायते तदा॥ २५६॥ ज्येष्ठस्य शुक्ल पंचम्यां दृष्टिः पश्चिम मारु
तः ॥ तदा चतुर्गुणं मौल्यं धान्यानां कार्त्तिके भवेत्॥ २५७॥ श्रावणे शुक्ल पंचम्यां दृष्टि र्वा-
तो दिन द्वयम् ॥ दक्षिणे पश्चिमे ज्ञेयं दुर्भिक्षं धान्य संक्षयः २५८ अथ ग्रह चारवसात्सर्व वस्तूनां म-
हर्घताज्ञानम्॥ यदि तिष्ठति भौमस्य क्षेत्रे को ऽपि ग्रहस्तदा ॥ षण्मासं तु च धान्यानां

सं.टि

३५५ जायते च महर्घता ॥२५९॥ शुक्र क्षेत्रे कुजे मासं द्वयं सर्व महर्घता ॥ चंद्रेत्त दिन नाथे च स-
र्व रोगो ऽशुभं तदा ॥२६०॥ शनौ राहौ सर्व धान्य महर्घं राज विग्रहः ॥ शुक्र क्षेत्रे च चंद्रे च
चंद्र क्षेत्रे भृगो स्सुते ॥२६१॥ पाषंडानां भवेद्वृद्धिर्धान्यानां च महर्घता. रवि क्षेत्रे भृगोः पुत्रे प-
शूनां च महर्घता ॥२६३॥ वुध क्षेत्रे शनौ चन्द्रे सर्व धान्य महर्घता ॥ शुक्र क्षेत्रे गुरौ भौमे कर्प्पा-
सादि महर्घता ॥२६४॥ भौम क्षेत्रे शनौ राहौ ताम्रादीनां महर्घता ॥ शनि क्षेत्रे शनौ रा-
हौ सुभिक्षं चंद्र भास्करे ॥२६५॥ पशुनाशो धान्य वृद्धि गुडादीनां महर्घता ॥ गुरु क्षेत्रे शनौ
राहौ पशुनाश स्तृण क्षयात् ॥२६६॥ भौमे राज विरोधश्च वुधे वृष्टिश्च भूयसी ॥ भौम क्षे-
त्रे यदा संति राहु भौमार्क भार्गवाः ॥२६७॥ षण्मासे गुड कर्प्पास घृत क्षीर महर्घता ॥ मंद
क्षेत्रे यदा संति मन्दराहु वुधा स्तथा ॥ २६८ ॥ चतुःपदानां नाशश्च द्विपदानां च जायते ॥
भौम क्षेत्रे यदा संति शुक्र भौम निशा कराः ॥२६९॥ तदा मुक्ता पशूनां च शंखस्य च महर्घ-
ता ॥ शुक्र भौमौ गुरु क्षेत्रे प्रजा पीडा च जायते ॥२७०॥ ग्रह राशि समायोगे फलमेतत्प्र-

कीर्त्तिवर्म् ॥ अथ राशि परत्वेन ग्रहोदय फलम् ॥ चंद्रोदये कुजक्षेत्रे तुषधान्यस्य चक्षयः चंद्रोदयो भृगुक्षेत्रे स्वल्प वृद्धिः क्रियादिके॥ २७१॥ प्रजापीडा वुधक्षेत्रे सोमभृगुको दये भवेत् ॥ रविक्षेत्रे तुला वृद्धिः शनि सोम भृगूदये॥२७२॥ चंद्र क्षेत्रे राहु चंद्र वुधाना मुदयो यदि ॥ षण्मासं स्याच्च दुर्भिक्ष मति वृष्टिश्च जायते॥ २७३॥ उदितो वुधक्षेत्रे च यदि राहु शनैश्चरौ ॥ पशुक्षयः प्रजा पीडा धान्यानां च महर्घता॥२७४॥ शुक्र क्षेत्रे सोम सूर्य्य सूर्य्यपुत्रो दयो भवेत् ॥ उदयास्तमनं पीडा जायते च महर्घता ॥ यदोदयः शनि क्षेत्रे भौम भास्करयो भवेत् ॥ घृतानां च तदा वृद्धि गुडानां रक्त वाससाम्॥ २७६॥ यदा समुदयं याति शनि क्षेत्रे शनैश्चरः ॥ तदा त्वणानां काष्ठानां लोहानां च महर्घता॥ २७७॥ अथ नक्षत्र स्थित ग्रह वसान्महर्घता ज्ञानं॥ गुरुर्यदा विशाखायां तदा धान्य महर्घता ॥ मंगलस्य च कालस्य शनौ सर्वत्र मंगलम्॥ २७८ ॥ अश्विन्यां यदा द्रायां शनि स्थे स्तदा भयम् ॥ वुधे भाद्रे च दुर्भिक्षं सुभिक्षं भृगुनंदने ॥

॥ २७९ ॥ सुभिक्षं चानुराधायां यदि शेषग्रहाः स्थिताः ॥ कल्याणं चैव सौभिक्ष्यमल्प
पा संस्थिते गुरौ ॥ २८० ॥ कर्प्पासा बहवो मंदे भौमे कटकपीडनम् ॥ बुधे तिलाश्चमा
षाश्च महर्घं वर्षकालतः ॥ २८१ ॥ सूर्ये सर्वाणि धान्यानि महर्घाणि भवंति च ॥ शु-
क्रे च महती वर्षा शस्यानि सकलानि च ॥ २८२ ॥ मूले गुरौ कुलत्थानां मुद्गानां व-
हुधा भवेत् ॥ भौमे मूलस्य चापस्य बुधे च सर्वसंपदः ॥ २८३ ॥ पूर्वाषाढागते भौ-
मे पीडा स्यात्पशुपक्षिणाम् ॥ केतौ महर्घता धान्ये पूर्वाषाढ गते भवेत् ॥ २८४ ॥
उत्तराषाढके जीवे गुडानां च महर्घता ॥ भौमे च पुष्पजातीनां जायते च महर्घता
॥ २८५ ॥ अभिजिन्नाम्नि नक्षत्रे यदा छाया सुतो भवेत् ॥ सर्वशस्यानि जायंते सुभि-
क्षं च कुजे तथा ॥ २८६ ॥ श्रवणे च यदा जीवस्तदा स्युः सर्वसंपदः ॥ बुधे नाशश्च भू-
पानां शनौ भूरि उसीरकः ॥ २८७ ॥ कृत्तिकायां च रोहिण्यां यदा जीवो हि तिष्ठति ॥
मध्यमानि च शस्यानि तदा वृष्टिश्च मध्यमा ॥ २८८ ॥ आर्द्रायां मृगशीर्षे च यदा वाक्-

स्पतेः स्थितिः ॥ सुभिक्षंच सुवृष्टिश्च प्रजानांच सदा शिवम् ॥ २८९ ॥ पूफाल्गुणी
द्वये हस्ते मघायां च यदा गुरुः ॥ सुभिक्षंच सुवृष्टिश्च प्रजानां स्यादरोगता ॥ २९०
चित्रास्वात्यो र्यदा जीव स्तदा चित्राः पयोधराः ॥ विचित्राणि भवन्त्येव शस्यानि च
क्वाचित् क्वचित् ॥ २९१ ॥ विशाखा मैत्रयो र्जीवे धान्यं वर्षाच मध्यमं ॥ ज्येष्ठा मूले मास
युग्मं विष्टिर्मास द्वये न च ॥ २९२ ॥ पूर्वाषाढोत्तराषाढे स्थितो यदि बृहस्पतिः ॥ तदा रोगं
सुभिक्षंच सुवृष्टिश्च प्रजायते ॥ २९३ ॥ अनावृष्टिश्च दुर्भिक्षं रेवत्यां संस्थिते गुरो ॥
धनिष्ठायांच मृत्रेच पीडा भवति हस्तिनाम् ॥ २९४ ॥ क्रूरा वक्र गताः खेटा स्तौ स्याः य-
द्यति चारगाः ॥ तदा भूपक्षयो युद्धं जगद्घोर भयार्दितम् ॥ २९५ ॥ अथैकमासे पंच वार फल
म् ॥ शुक्लाद्ये मास के पंच पाप खेटस्य वासराः ॥ प्रजा पीडा भवेत्तत्र धान्यस्यापि म-
हर्घता ॥ २९६ ॥ मासे पंच शुभा वारा यद्येकस्मिन्प्रजायते ॥ सुभिक्षं सर्व शस्यानां नरा
च सुखिनो जनाः ॥ २९७ ॥ पौषे पंच शनिश्चैव माघे पंच रवि स्तथा ॥ फाल्गुने पंच भौम-

कश्चि श्च महीनाशाय केवलम् ॥ २९८ ॥ अथ चंद्रस्य शृंगोन्नतिस्तत्फलम् ॥ चंद्रो याम्योन्नतो म-
३५९ नमेष गोऽभ्युदितो मतः ॥ समशृंगो वृषे कुंभे शेषभेषूत्तरोन्नतः ॥ २९९ ॥ याम्योन्नते
च दुर्भिक्षं विरुद्धं स्यात्समे विधौ ॥ सुभिक्षं सौम्यदिग्भागे चोन्नते मृगलांछने ॥ ३०० ॥ मू-
ला कारे विधौ भीतिः प्रोदितो महतो रुजः ॥ अथ प्रति मास संक्रांतिवशात्समर्घमहर्घज्ञानम् ॥
सुभिक्षं संक्रमे सौम्ये वारेऽधिक मुहूर्तके महर्घं पापवारे वा मुहूर्ते चाक्षभूमिते ॥ ३०१ ॥
पूर्वसंक्रमभाद्धि त्रिमिते च संक्रमे रवेः ॥ सुभिक्षं स्याच्चतुःपंचमिते भे तु महर्घता ॥ ३०२ ॥
षट्भे संक्रमे चाति दुर्भिक्षं रौरवं भवेत् ॥ अथ ग्रैष्म शारद धान्यनिःपति ज्ञानम् ॥ वृषे संक्रम
णे भानोः केन्द्रस्थांत्यगते शुभैः शारदी धान्यनिष्पत्तिरुत्तमा हायने मता ॥ ३०३ ॥ पापै
रेवं स्थितैः स्वल्पा मिश्रैर्मिश्रा प्रकीर्तिता ॥ पापाद्यून गते नष्टे द्भुमन्नमपि शास्य कम् ॥
द्यून शत्रु गते पापे निष्पत्ति स्वल्पिका भवेत् ॥ इत्थं वृश्चिक संक्रांतौ विज्ञेयं ग्रैष्म
धान्यकम् ॥ ३०५ ॥ चापादि त्रितये सूर्ये सौम्यैर्युक्ते सिते ग्रहैः ॥ सरद्धान्यं ३५९

सं० वि० समर्घं स्यात् ग्रासं तद्धान्य जीविभिः॥ ३०६ ॥ पापैर्युक्ते क्षिते धान्ये महर्घं जायते ऽखि-
३८७ लम् ॥ एवं मेषात्त्रिगे ग्रैष्मे धान्यं ज्ञेयं विचक्षणैः ॥ ३०७ ॥ अथ संक्रांतिवशाद्दर्शपौर्ण-
मास्यो रुत्पात दिवसात् धान्यादीनां समर्घ महर्घ ज्ञानम् ॥ ग्रैष्मे शस्यं १ ततो मूलं २ रस धा-
न्यं ३ घृतादिकं ४ हेमाद्यं ५ तुरगो ६ वस्त्र ७ मणि ८ कान्ता ९ वु १० धान्यके ११ ॥
३०८ ॥ मूलं च १२ क्रमतो ज्ञेयं मेषाद्यर्के याते क्षिते ॥ दर्शे वा पौर्णिमायां चेद्रुपरा-
गोऽति वर्धनाम् ॥ ३०९ ॥ परिवेषस्तथा दंड उल्कापाताद्युपद्रवाः ॥ जायंते ऽत्र तदा ते-
षां वस्तूनां च महर्घता ॥ ३१० ॥ रवौ सौम्ये क्षिते ज्ञेया उत्पाते ऽत्र महर्घता ॥ अथ वृक्षादि-
पत्र पुष्प फलाद्यै धान्यादिनि ष्पत्ति ज्ञानम् ॥ वृक्षादौ वहुभिः पुष्पै र्महा वृष्टिः प्रजायते ॥ पत्रै-
स्त्वल्पतरा वृष्टिः दूर्वा भिश्च त्वयोऽधिकाः॥ ३११ ॥ मधुके वहुगो धूमा जवाऽसुर्घटजैः
फलैः ॥ सुभिक्षं नाग निंबैः स्या च्छाल वृक्षैश्च शालयः॥ ३१२ ॥ अश्वत्थाद्धिकं धा-
न्य मर्जुनाद्धिकं जलम् ॥ क्षेमं साग्रैश्च पालाशैः कोद्रवा जंबु तस्तिलाः॥ ३१३॥ दुर्भि-

सर्वि स्त्रं खदिरै रोगः कुटजैः परिकीर्त्तितः ॥ इतिसमर्घकांडसमाप्त ॥ अथ वृष्टि ज्ञानार्थं मेघ गर्भज्ञानम्
मार्गे शुक्ला दितो ज्ञेयो मेघ गर्भ समुद्भवः ॥ फाल्गुणे ताम्र वर्णा कांत्स्निग्धा श्राच्च ख-
रानिलात् ॥ ३१४ ॥ चैत्रेतु परिघे वृद्ध्या वायु नावाभ्रै रेखया ॥ अथकेयांचिन्मतांतरे
केचिन्मार्गादि मासेषु प्रोचु गर्भस्य लक्षणम् ॥ गर्ज्जना त्पवना त्तोय वर्षणा द्विद्यु-
तोऽथवा ॥ ३१५ ॥ अथ शुभ गर्भलक्षणानि ॥ श्वेतनीलांड जाभ्राच्च न चाति विगल
ज्जलाः ॥ प्रास्त गर्भाश्रिते मेघा उद् गीशान पूर्वजाः ॥ ३१६ ॥ पुष्टिं प्रयांति ते ग-
र्भैः विद्यु द्वाता भि वर्ज्जितैः ॥ आर्द्रा षाढ द्वयो त्पन्ना विशाखोत्था वहूदकाः ॥
३१७ ॥ अथ गर्भधारणादिना वृष्टि ज्ञानम् ॥ वृष्टि गर्भा द्दमास्य पक्षे विंश्व १३ मिते-
र्भवेत् ॥ रात्रि गर्भे दिवा वृष्टि र्दिवा गर्भे निशि स्मृता ॥ ३१८ ॥ अथ प्रकारांतरेण गर्भाद्वृ-
ष्टि ज्ञानम् ॥ आरभ्यै कादशीं कृष्णां कृष्णादौ माघमासके ॥ द्वादश स्वपि पक्षेषु विद्यु द्वाता
भि र्वर्ज्जिते ॥ ३२० ॥ रोहिण्यादिषु सूर्य्य स्य भे षु वृष्टि र्भवेत्क्रमात् ॥ अथ पुनरन्य प्र-

॥ त्रि कारेण मेघगर्भज्ञानं दृष्टिज्ञानं च ॥ मूलर्क्षे भास्करे याते तदारभ्य दशाहकम् ॥ ३२०॥
विद्युदभ्रादिना गर्भो यत्र तत्र दिने भवेत् ॥ क्रमादार्द्रादिनक्षत्रे भानौ वृष्टिः प्रजा-
यते॥ ३२१॥ अथ प्रकारांतरेण ॥ मूलभाद्दृणी यावद्भेषु चैकादशस्वपि ॥ पौष मास
दिनर्क्षेषु गर्भस्त्वभ्रादिना भवेत् ॥ ३२२॥ ततश्चार्द्रादिके सूर्ये क्रमाद्वृष्टिः प्रजायते॥
पुनः प्रकारांतरम् ॥ अश्विन्यादिषु धिष्ण्येषु चैत्रे दश सु चेद्भवेत् ॥ अभ्रादिकं तदा गर्भः
आर्द्रादौ वृष्टिदः क्रमात् ॥ ३२३ ॥ मेषार्कदिनमारभ्य ज्ञेयमेवं नभादिदा । अथ नामा-
न्यतो वृष्टिज्ञानम् ॥ यदि साभ्रं नभोमध्यं सुभिक्षं चाग्रिमेऽब्दके ॥ यद्यभ्रं दृश्यते ज्यो-
त्स्नि चैकादश्यां तु कार्तिके ॥ ३२४ ॥ आषाढे मासि वृष्टिश्च तदा भवति भूयसी ॥ मा-
र्गशीर्ष्यां यदा विद्युद्वर्षणं श्रावणे तदा ॥ ३२५ ॥ पौषे कृष्णे दशम्यां चेद्वृष्टिर्भाद्रपदे
तथा ॥ सप्तम्यां माघशुक्लस्य भवेदभ्रादिकं यदा ॥ ३२६॥ ज्येष्ठे मूले न चेद्वृष्टिः सुवृ-
ष्टिर्बहुला मता ॥ अथ ज्येष्ठशुक्लाष्टम्यादि दिनचतुष्टये वायुफलम् ॥ ज्येष्ठेऽष्टम्यां तु

शुक्लायाश्च तुर्यदिवसे युच ॥ श्रावणादौ क्रमाद्वृष्टिर्मन्दा शस्तैः समीरणैः ॥ ३२७ ॥
अथ स्वात्यादिषु दृष्टो श्रावणादावनावृष्टिः ॥ ज्येष्ठे चतुर्षु धिष्ण्येषु स्वातीमारभ्य वर्षणे ॥ क्रमा-
च्छ्रावणके वृष्टिर्न्न भवेत्तत्र तत्र तु ॥ ३२८ ॥ अथाषाढशुक्लद्वितीयादि दिनचतुष्टयफलम् ॥
आषाढे मासि शुक्लायां द्वितीयायां प्रवर्षणात् ॥ तृतीयायां पुरो वायुर्मेघः पूर्वस्या दिशातः
॥ ३२९ ॥ चतुर्थ्यां जलदः प्राच्यां दक्षिणो यदि मारुतः ॥ पंचम्यां पूर्वदिङ्मेघस्तदा श्रा
वणमासतः ॥ ३३० ॥ ध्रुवं वृष्टिः शुभा ज्ञेया क्रमान्मासचतुष्टये ॥ चतुर्ष्वेषु दिनेष्वेव
यदि वृष्टिर्न्निरंतरम् ॥ ३३१ ॥ तदा स्यादति वृष्टिश्च धान्यनाशः प्रजायते ॥ याम्य-
नैर्ऋत्यसंभवे वायौ द्वयं हे दुर्भिक्षमीरितम् ॥ ३३२ ॥ तृतीया पंचमी षष्ठ्येषुदक् पूर्वजो मरु
त् ॥ तदा स्याद्धान्यनिष्पत्तिर्बहुला वृष्टिरुत्तमा ॥ ३३३ ॥ अथ श्रावणशुक्लपंचमीफल-
म् ॥ पञ्चम्यां श्रावणे शुक्ले ह्यदृष्टिर्भवेद्यदि ॥ याम्य नैर्ऋत्यगभवे ह्वायुर्दुर्भिक्षं जायते
तदा ॥ ३३४ ॥ अथ सूर्य्यस्य रेवत्यादिभेषु वृष्टिफलम् ॥ रेवत्यां वर्षणे तोयं नश्येद्धान्यम्

श्चिने ॥ भरण्यां तद्वयं वृष्टिः कृत्तिकायां न चेद्भवेत् ॥ ३३५ ॥ रोहिण्यां गर्जने वृष्टि
ड्डयं मास द्वयोत्तरम् ॥ मृगशीर्षे यदा न स्याद्वृष्टिर्भूयो बहूदका ॥ ३३६ ॥ अथ संक्रांति दिने
वृष्टि फलम् ॥ संक्रांति दिवसे वृष्टौ मार्ग कार्त्तिकयोर्यदा ॥ वर्षन्त न्मध्यमं ज्ञेयं पौषे
माघेऽति चोत्तमम् ॥ ३३७ ॥ सुभिक्षं च सुभा वृष्टिः फाल्गुणादि चतुष्टये ॥ रोगस्त्वाष
ढमासे स्याच्छ्रावणे वृष्टिरुत्तमा ॥ ३३८ ॥ भाद्रे रोगस्तदा सौख्यमाश्विने वर्षणे भवे
त् ॥ ३३९ ॥ अथ काकनीड फलम् ॥ सवृक्षे काक नीडे स्यात्त्रतीच्यां वृष्टिरुत्तमा ॥ उद-
गास्ये भवेन्मध्ये नैऋता वांति मा स्मृता ॥ ३४० ॥ अल्प वृष्टिरथो ज्ञेया सदन्यं स्या
च्छिवेऽनिले ॥ मध्ये मध्याऽथ वृक्षाग्रे बहुला वृष्टिरीरिता ॥ ३४१ ॥ ईति भीति र्महा-
घोरा नीडे सर्व दिशां गते ॥ नीडे संकट के भीति रसानां जायते ध्रुवम् ॥ ३४२ ॥ प्रागुद-
क्यश्चिमा ईस्थे सुवृष्टिः कैश्चिदीरिता ॥ अथ टिट्टिभांड फलम् ॥ स्थिते च्च प्रदेशे युटि-
ट्टिभांडे प्रचोत्तमा ॥ वृष्टिः संजायते मासैर्धो वक्रांड संख्यकैः ॥ ३४३ ॥ निम्न प्रदेश संस्थे

वि० | ष्युस्वल्पा वृष्टिः प्रजायते ॥ वृष्टिर्नैव भवेन्मासे श्चोर्ड्वक्रांडसंख्यकैः ॥ ३४४ ॥

३६१ | अथ रोहिणी चक्रम् ॥ हारूपाकारं लिखेच्चक्रं मेष संक्रांति भादितः ॥ चतुर्दिक्षु समुद्राश्च-

| पर्वत | तट | संधि | समुद्र | संधि | तट | तट | पर्वत | प |
|---|---|---|---|---|---|---|---|---|
| प | ५ | ४ | ३ | २।१ | २८ | २७ | २६ | प |
| त | ६ | | | | | | २५ | त |
| स | ७ | | | | | | २४ | सं |
| सं | ८।९ | | | | | | २२।२३ | सं |
| सं | १० | | | | | | २१ | सं |
| त | ११ | | | | | | २० | त |
| प | १२ | १३ | १४ | १५।१६ | १७ | १८ | १९ | प |

चतुःकोणेषु पर्वताः ॥ ३४५ ॥ समुद्रपार्श्वयो र्द्वौ तटस्तच्छे न्तयो स्तथा ॥ मध्येऽष्टो संध्ययोः स्तत्र साभिजिद्भ गणान्यसेत् ॥ ३४६ ॥ द्वयं द्वयं समुद्रेषु तथैकैकं तटादिषु ॥ रोहिणी संस्थिता यत्र ज्ञेयं वृष्टि फलं तथा ॥ ३४७ ॥ तटेषु शोभना वृष्टि र्महावृष्टिस्तु सागरे ॥ ऊना वृष्टिर्गिरौ देशे खंडे वृष्टिस्तु संधिषु ॥ ३४८ ॥ अथ सप्त नाडी चक्रम् कृत्तिकादि लिखेच्चक्रं साभित्सप्त नाडिकम् ॥ चंडा वायुस्तथा वन्हिः सौम्यानी राज- | ३६१

ला स्मृता ॥ ३४९ ॥ नाडीनां सप्त नामानि ज्ञेयान्येतानि पंडितैः ॥ क्रमान्मंदार्कभौमे-
ज्य शुक्र ज्ञाब्जा स्तदीश्वराः ॥ ३५० ॥ अथैतदेव स्पष्टयति ॥ चंडाख्या भरणी हृद्
विशाखा द्वितयं शनेः ॥ ज्येष्ठाश्वि रोहिणी स्वाती वायु-
नाडी रवेः स्मृता ॥ ३५१ ॥ चित्रा मूलं मृगो त्यं च दहना-
ख्या कुजस्य च ॥ पूर्वाषाढा करो भार्द्रा सौम्या नाडी बृह-
स्पतेः ॥ ३५२ ॥ पूभो पाच पुनर्धिसिं उफानीर भृगोः स्मृ-
ता ॥ पूफा श्रता भिजित्तुष्य जला नाडी बुधस्य सा ॥
॥ ३५३ ॥ श्रवद्वयं मघाश्लेषा इंदोरमृत नाडिका ॥ अ-
चेतासु ग्रह संस्थिते फलम् ॥ ग्रहा यदैक नाडी स्थाः सौम्याः

| अथ सप्त नाडी चक्रम् | | | | | | |
|---|---|---|---|---|---|---|
| चंडा | वात | वह्नि | सौ | नीर | जलं | अमृत |
| कृ | रो | मृ | आ | पु | पु | श्ले |
| वि | स्वा | चि | ह | उ | पू | म |
| अ | ज्ये | मू | पू | उ | अभि | श्र |
| भ | अ | रे | उ | पू | श | ध |
| श | सू | मं | रा | गु | बु | चं |

पापा यथा तथा ॥ तेभ्यो नाडीफलं वाच्यं सदसद्वा विचक्षणैः ॥ ३५४ ॥ चंडा नाड्यां महा-
वातान् वातनाड्यां न यानि लम् ॥ वह्नि नाड्यां स्थितादाहं सौम्य नाड्यां महा [illegible] ॥

॥३५५॥ नीरनाड्यां यदा दृष्टिं जलनाड्यां च वर्षणम् ॥ कुर्वन्ति स्वतनाड्यां च महावृष्टिं नभश्चराः ॥३५६॥ एकोयं निज नाडीस्थो दत्ते तत्तत्फलं ग्रहः ॥ कुजस्तु सर्व नाडीषु स्थितो नाडी समुद्भवम् ॥३५७॥ आर्द्राधर्क्षे गते सूर्य्ये नाडीके फल मुच्यते ॥ यद्यनेके च नाडीस्थाः पापाः सौम्याश्च खेचराः ॥ ३५८ ॥ मिश्राश्चंद्र समायुक्तास्तद्दिने दृष्टिरुत्तमा ॥ तोय राशि गता मिश्रास्ताव दृष्टिं प्रकुर्वते॥३५९॥ यावत्तोया श्रगश्चंद्र केवलः स्वल्प दृष्टिदः ॥ अमिश्रैः खेचरैः सौम्य पापे विद्धो यदा शशी ॥३६०॥ पानीयंच तदा तुच्छं धान्या दीनां च नाशनम् ॥ यस्य खेटस्य नाडीस्थो विधुस्तेन ग्रहेणच ॥ ३६१ ॥ युतश्चे दृष्टिदो ज्ञेयो यदि क्षीणतरो नहि ॥ चंद्रः पीयूष नाडीस्थः मिश्रैः खेटैश्च संयुतः ॥३६२॥ त्रिचतुः पंच सप्ताहं शुभ दृष्टि प्रदो मतः ॥ जल नाडी स्थिते चंद्रे मिश्र खेचर संयुते ॥ दिनार्द्धमर्द्धस्य हु स्वार्द्धिः पश्चाद्ज्ञायते शुभा॥ नीर नाड्यां गते चंद्रे मिश्रैः खेटैश्च संयुते ॥३६३॥ पादोनं तद्दिनं दृष्टिं वैकृतोया भवेद्ध्रुवा॥

नी राख्ये जलपीयूषनाडीस्थाः खेचराः क्रमात् ॥ ३६४ ॥ धृत्य १८ के १२ रस ६ संख्या
कान् वासरान्वहु वृष्टिदाः ॥ सौम्या नाडी स्थिताः सर्वेप्यदं वृष्टि प्रदाः खगाः ॥
॥ ३६५ ॥ चंद्र वाय्वग्नि नाडीस्थाः महा वाता तप प्रदाः ॥ योगे शुभाधिके नाडी नि
र्जला सजल प्रदाः ॥ ३६६ ॥ योगे क्रूराधिके ज्ञेया सजला निर्जला बुधैः ॥ सौम्य नाड्यां
स्थिता पापा भना वृष्टि करा मताः ॥ ३६७ ॥ शुभास्तोयाग्निकाद्ये त्स्यु स्वल्प वृष्टि प्र
दास्तदा ॥ एक नाडी स्थिता भौमजीव चंद्रमसौ यदा ॥ ३६८ ॥ वारि पूर्णा भवेत्पृथ्वी व
हु वृष्ट्या तदा खिला ॥ भृगु सौम्यौ यदैकत्र स्यातां जीवान्वितौ तदा ॥ ३६९ ॥ वृष्टि -
स्याद्बहुला कस्माच्चंद्र योगे विशेषतः ॥ भृगु चंद्रमसौ पापैः खेचरैर्यदि संयुतौ ॥
॥ ३७० ॥ तदा स्वल्पोद का वृष्टिः जलयोगे मह त्यपि ॥ इतिसप्तनाडीफलम् ॥ अथ
शुक्र स्थिति वशाद्ग्रह योगवशाच्च वृष्टि ज्ञानम् ॥ मघादि पंच धिष्ण्यस्थः शुक्रः प्रागुदितोऽनि-
शम् ॥ वृष्टि कृत्पश्चिमाशास्थः स्वात्यादित्रितये स्थितः ॥ ३७१ ॥ वैपरीत्य सितो-

जातो भृगुः कुर्य्याद्वर्षणाम् ॥ कुर्य्यातां बहुलां वृष्टिं बुध शुक्रौ च संयुतौ॥ ३७२॥
समुद्रं शोषयितुं शक्तस्तयोरंतर्गतो रविः ॥ शुक्रात्सप्तमगश्चंद्रो दृष्टिदस्स्याच्छुभेक्षितः
॥ ३७३ ॥ मंदाद्धि धून कोणस्थश्चंद्रमा वृष्टिदस्तदा ॥ ग्रहाणामुदये चास्ते राश्य
न्तर्गतेऽयने॥३७४॥ संयोगे वापि पक्षांते प्रायो वृष्टिः प्रजायते ॥ उदयास्तमनं शु-
क्रो बुधश्च वृष्टिकारकः॥३७५॥ चलत्यंगारके वृष्टिस्त्रिधा वृष्टिः शनैश्चरे ॥ वारि
पूर्णां महीं कृत्वा पश्चात्संचलते गुरुः॥३७६ ॥ शुक्रे चास्तमिते मंदे त्रिविधेऽपि प्रजा-
यते ॥ भौमार्क्की एकराशौ चेदन्योन्यं समसप्तगौ॥३७७ ॥ अथार्द्रादिरविनक्षत्रप्रवेशे-
स्त्रीपुंयोगादौ वृष्टिज्ञानम् ॥ स्त्रीसंज्ञानि दशार्द्रातो भानि प्रोक्तानि कोविदैः ॥ विशा-
खादित्रयं क्लीबं पुंसं ज्ञानीत राशिंच॥३७८ ॥ रवेर्धिष्ण्यप्रवेशस्य काले चंद्रार्कयोर्य
मे ॥ धिष्ण्ये च या दृशो स्यात्तां विज्ञेयं तद्दृशा फलम्॥ ३७९॥ स्त्रीपुंसोस्तु महावृष्टि
रल्पा स्त्रीस्त्रीवयोः क्वचित् ॥ अभ्रछाया स्त्रियोः पुंसोः क्लीवयोर्वा न किंचन ॥

॥३८०॥ तोयवारविलग्ने च वृष्टियोगे यदा रवेः ॥ नक्षत्रं च प्रवेशः स्यात्तदा वृ-
ष्टिस्तु शोभना ॥ ३८१ ॥ निशायाम ईं रात्रे वार वेक्षस्य प्रवेशने ॥ बहुतोया सुवृ-
ष्टिः स्यादन्यथा नैव जायते॥ ३८२ ॥ अथ सूर्य्यर्क्ष चंद्रर्क्षतो वृष्टिज्ञानम् ॥ आर्द्रादि पंचभं
पूभाद्रेवत्यादि चतुष्टयम् ॥ पूर्वाषाढा चतुःकंच चंद्रर्क्षाणि चतुर्दश ॥ ३८३ ॥ शेषा
णि रविधिष्ण्यानि विज्ञेयानि मनीषिभिः ॥ सूर्ये चंद्रर्क्षगे वृष्टिश्चंद्रे सूर्य्यर्क्षगे सं-
ति ॥ ३८४ ॥ पूफादिपंचके सूर्ये चंद्रे चंद्रर्क्षगे ऽपि च ॥ उभौ चंद्रर्क्षगौ स्यातां स्वल्पा
वृष्टिस्तदा भवेत् ॥ ३८५ ॥ तावेव यदि सूर्य्यर्क्षे तदा वृष्टिर्न जायते ॥ अथाढकप्रमाणम्
युग्मा ३ ज १ गो २ मत्स्य १२ गतेशशांके भानुर्यदा कर्कटके प्रयाति तदाप्रताढ
१०० हरि ५ कार्म्मुके ९ ऽर्द्ध ५० तुले ऽ ७ प कन्या ६ मृग १० योरशीतिः ८० ॥ ॥
कुलीर ४ कुंभालि ११।८ गते यदा स्यात्पद्धं शताढं २६ भुवि वारिपातः ॥ ३८६ ॥ अर्द्ध
पर्वतभागेषु तदर्द्धं मारुते गतम् ॥ तदर्द्धं याति मेदिन्यां वाराहेण च भाषितम् ॥

शि शत योजनमुत्तुंगं सहस्रं विस्तृतं ततः ॥ आढकस्य प्रमाणे ऽयं वाराहेण च भाषितम्
१ ॥ ३८८॥ अथ रविनक्षत्र वाहनम् ॥ दिनेश भात्सूर्य्य भं वहि घस्रं विगण्य सप्तोद्धृतमर्क्क
वाहनम् ॥ स्वे तुरंगः शशकश्च शूकरः श्वा च नको गो महिषश्च दर्दुरः॥ ३८९ ॥
अथ वर्षाकाले सद्योवृष्टि लक्षणानि ॥ नभः काकांड भंगाहक्र निभं तित्तिरसंन्निभम् ॥ प्रा-
त्यो जलावा मेघा स्युर्गिरि कज्जल सन्निभाः ॥ ३९०॥ जलजंतु समाकारा मूलाभ्रा
स्तव्य गा अपि ॥ गिरयो ऽजन संकाशा सवाष्पाः शिखि नर्त्तनम् ॥३९१॥ शुभ्र नेत्र
निभः क्षौद्र सन्निभः स लिलप्लुतः ॥ सन्निधौ परि वेषाद्य श्चंद्र मार्श्च घट स्थिकृत ॥
॥३९२॥ विकृतिर्स्त्र वर्णे वाला स्सेतु बंधोद्य माऽप्यथि॥ जले मीनोत्प्लवो रावो भेकानां
नीरसं जलम्॥ ३९३॥ व्यालानां मैथुनं दृष्टा चारो हः पशवस्तथा ॥ मक्षिकानल्यतां
याति सांद्रास्या स्तु पिपीलिकाः॥ ३९४॥ उत्स्रद्याश्च गृहाद्रा वोनेछंति गमनं वहिः॥
खनंति भूतलं श्वानो मार्ज्जाराःपशवः खुरैः॥ ३९५॥ स्त्रैरायान्त्यं कुरा श्चोर्द्ध प्रर टारो

१ हा । तरौ ॥ त्वणाग्रे वृश्चिका रोहो गावा मूर्द्धनि रीक्षणम् ॥ ३९६ ॥ पक्षिणां धूलिभिः
स्नानं प्रदोषे मेघ गर्ज्जनम् ॥ अपि दण्डा कृति र्मेघः शीतः प्राची भवो मरुत् ॥ ३९७ ॥
मत्य गिंद्र धनुः संध्या रागो ऽधो मेघ गर्ज्जनम् ॥ प्रागुदक् सैव दिक्रूया तारका सौ
दामिनी तथा ॥ ३९८ ॥ मध्ये नी व्रात पश्चान्हि नरा निद्रालवो भृशम् ॥ विज्ञेया ल-
क्षणो रेभि स्त घो वृष्टि र्घना गमे ॥ ३९९ ॥ नो माघे हिम वर्षणं न मरुत श्चंडा स्तथा फा-
ल्गुने चैत्रे वृष्टि विवर्ज्जितं तु गगनं मेघेन पूर्णो रविः ॥ वैशाखे न घनो पलस्य पत-
नं ज्येष्ठे न चण्डो रवि र्वृष्टि स्वल्प तरा सदैव कथिता वर्षासु नित्यं बुधैः ॥ ४०० ॥
इति वृष्टि काण्डः ॥ अथो पश्रुति शकुनाः ॥ गणाधीशं प्रपूज्यादौ कार्य्यं तस्मै निवेद्य च ॥
साक्षतं स फलं तोयं पात्र मादाय संव्रजेत् ॥ ४०१ ॥ उप श्रुते श्च वायाय चाण्डालादि
गृहे वहिः ॥ निशि सुप्त जने तत्र स्थित्वा स्तुत्वा क्षतान् क्षिपेत् ॥ ४०२ ॥ अथोपश्रुति
मंत्राः ॥ ॐ उपश्रुति र्म्महालक्ष्मी श्चाण्डाल गृह वासिनी ॥ यन्मया चिंतितं कार्य्यं सत्यं. २०२

वर सुरेश्वरि ॥ ४०३॥ ब्राह्मणानां शतं दत्वा कपिलानां शतत्रयम् ॥ तेन पापेन लिप्ता-
सि यदि सत्यं न भाषसे ॥ ४०४ ॥ पंचानां पांडुपुत्राणां ज्येष्ठो भ्राता युधिष्ठिरः ॥ ते-
न सत्येन धर्मेण सत्यं ब्रूहि नमोऽस्तु ते ॥ ४०५ ॥ भवत्या विदितं सर्वं सर्वकार्ये वि-
शेषतः ॥ इत्युक्त्वा शृणुयाद्वाणीं श्रद्धा वाक्यत्रयान्विताम् ॥ ४०६ ॥ प्रास्थित्य चल-
लं तत्र सभा गच्छेत्स्वमालयम् ॥ तद्वाक्यस्यानुसारेण फलं ज्ञेयं यथार्थतः ॥ ४०७
॥ वार विशेषे नाप श्रुति निवासः ॥ चांडाली भवने सूर्ये चन्द्रे नापित मन्दिरे ॥ रजक्या
मन्दिरे भौमे बोधने वैश्य मन्दिरे ॥ ४०८ ॥ ब्राह्मणी मन्दिरे जीवे भार्गवे पण्य यो-
षितः ॥ दास्या द्वारिणा नो याया च्छ्रोतु चोप श्रुतिं शुभाम् ॥ ४०९ ॥ अथ रघुवंशा-
दि शकुनाः ॥ रघुवंशस्य दुर्गायाः पाठस्य निगमस्य च ॥ पूजितं पुस्तकं पुष्पै रक्षि-
तैश्च फलादिभिः ॥ ४१० ॥ शनौ संस्थाप्य संपूज्य प्रातरेवं विलोकयेत् ॥ कुमा-
र्युक्त प्रमाणेन निःकास्य श्लोक मुत्तमम् ॥ ४११ ॥ विज्ञेया शकुनास्तस्माद्यथार्थे

वचनाहिते ॥ अविसर्गान्त पूर्वार्द्धस्तवर्गे तरपंचमः॥ स्तुति लिङ्गर्जितश्श्लोक
श्शकुने च शुभावहः ॥४१२॥ अथागविद्या प्रश्नः ॥ शिरो मुखं कर्ण नेत्रं स्पृष्ट्वा पृच्छ-
ति चेज्जनः ॥ सुवर्ण धन धान्यानां लाभ स्तस्य न संशयः॥ ४१३ ॥ स्कंधग्रीवा कण्ठ
हृस्त स्पर्शे लाभो हि दुःखतः ॥ कुक्षिनाभिसमालंबे भक्ष्य पानादि सिध्यति ॥
॥ ४१४ ॥ जंघा लिंग कटि स्पर्शे कन्या लाभ स्सुतोद्भवः ॥ जानु गुल्फ पद स्पर्शे महान्
क्लेशः प्रजायते॥ ४१५॥ केश स्पर्शे भवेन्मृत्युः फलादि स्पर्शने शुभम् ॥ तृणांगार
क संस्पर्शे कार्य्यसिद्धिर्न्न जायते॥ ४१६ ॥ काष्ठ पंक पट स्पर्शे गृह पीडा मनो भयम्
॥ भृगा रामान्न भांडादि स्पर्शे सिद्धिः प्रजायते ॥ ४१७ ॥ शून्यालये स्मशाने वाशु
ष्क काष्ठे क्षते तरौ ॥ गुल्म वस्त्राधम स्थाने न्यस्ते क्लेशः प्रजायते॥ ४१८॥ देव गेहे
नदी तीरे दिव्य स्थाने शुभं वदेत् ॥ शुभदिक्षु स्थिते सिद्धि र्विदिक्षु न प्रजायते॥ ४१९ ॥
स्वांगविद्या॥ अथ सर्व प्रश्ननिर्णयः ॥ प्रश्नाह काले फल नाम वर्णा न्नक्षत्र निघ्नान्तिथिवार

न्न स्तैः ॥ योगैश्च युक्ता नवनीश २६ भक्तानुरूपे फलं प्राहुरुग्या तनूजः ॥ ४२६॥ एकावशेषे द्रविणस्य धान्यराशेस्तथा स्यात्सदनस्य लाभः ॥ नेत्रावशेषे सुजनस्य संगो भ्रातुस्सुतस्यैव विनाशनं च ॥ ४२७॥ त्रिशेषके नेत्रशिरोदरेषु रोगोद्भवो वस्त्रविनाशनं च ॥ वेदावशेषे नृपदर्शनं स्यादश्वस्य लाभो नृपतेः सकासात् ॥ ४२८ ॥ शरावशेषे निजवस्तुहानिः प्रियावियोगस्सुतबंधुनाशः॥ रसावशेषे रथवाजिलाभो रिपोर्भयं चौरभयं तथा स्यात् ॥ ४२९ ॥ स्वरावशेषे रिपुभिश्च युद्धे जयो भवेद्दासजनस्य लाभः ॥ वस्त्रस्य लाभः कृपतश्च लाभो मातंगशेषे च कलत्रलाभः ॥ ४३०॥ नवावशेषे मठसद्मलाभः स्वसमस्य हानिः पुरराजपूजा ॥ दशावशेषे नृपतेः सकाशाद्दण्डश्च वाच्यः स्वसुतस्य नाशः ॥ ४३१॥ भवावशेषे कृषितोन्नलाभो लाभः प्रियायाः पृथिवीशलाभः ॥ सूर्यावशेषे गजरोहणं स्याद्भृत्यस्य लाभस्तु विदेशगस्य ॥ ४३२॥ विश्वावशेषे बहुदूरदेशे यानं तथा क्लेशयुतं च शस्त्रात् ॥ इंद्रावशेषे बहुराज्यपूज्यस्तथा धनाप्तिस्त्वजनेन

संगः ॥४३३॥ पंचेन्दु शेषे त्वशनस्य लाभो धनस्य लाभश्च गृहस्य लाभः ॥ भूपा-
वशेषे वपनेन मैत्रं लाभस्तु तस्मात्स्वजने प्रतिष्ठा ॥ ४३४ ॥ पृच्छा तनूजस्य मतं विशेषा
त्त्वपंच कैस्तस्य गदः प्रतिष्ठम् ॥ विचार्य्यवाच्यं गणकेन साधुना साधु नूनं सुतरां च श
स्तत् ॥ ४३५ ॥ अथनक्षत्रप्रश्नः ॥ मघादि अर्य्यमांतं च समीपे वस्तु दृश्यते ॥ हस्तादि-
वसु पर्य्यंत मन्य हस्ते च दृश्यते ॥ ४३६ ॥ भूतताराद्य मांतं तु स्वगृहे वस्तु दृश्यते ॥ अश्व्या
दि अर्य्य पर्य्यन्त मदृष्टं दूरगं तथा ॥ ४३७ ॥ तिथिं वारं च नक्षत्रं प्रहरेण समन्वितम् ॥ दिक्
संख्यया हतं चैव सप्तभिर्विभजेत्पुनः ॥ ४३८ ॥ एकेन भूतले द्रव्यं द्वयं चेन्नांड संस्थितम् ॥
तृतीये जल मध्यस्थ मन्तरिक्षे चतुर्थके ॥ ४३९ ॥ तुषस्थं पंचमे तत्स्यात् षष्ठे गोमय
मध्यगम् ॥ सप्तमे भस्म मध्यस्थ मित्येतत्प्रश्नलक्षणम् ॥ ४४० ॥ अथगुणप्रश्नः ॥ ति-
थिप्रहर सयुक्तं तारका वार मिश्रितम् ॥ अग्निभिस्तु हरेद्भागं शेषं सत्वं रजस्तमः ॥ ४४१ ॥
फलं ॥ सिद्धिस्तात्कालिकी सत्वे रजसा तु विलंबतः ॥ तमसा निःफलं कार्य्यं ज्ञातव्यं प्रश्न

कोविदैः ॥ ४४२ ॥ अथांगतुकप्रश्नः ॥ तिथि प्रहर संयुक्ता तारका वार मिश्रिता ॥ सप्तभि
स्तु हरे द्भागं शेषं तु फलमादिशेत् ॥ ४४३ ॥ फलं ॥ एक शेषं तथा स्थाने द्वितीये प-
थि वर्त्तते ॥ तृतीये ऽर्द्ध मार्गे तु चतुर्थे ग्राम नादिशेत् ॥ ४४४ ॥ पंचमे पुनरा वृत्तिः
षष्ठे व्याधि युतं वदेत् ॥ शून्यं द्वेयं सप्तमे वै चैतत्प्रश्नस्य लक्षणम् ॥ ४४५ ॥ अथ
गर्भिणी प्रश्नः ॥ तिथि भवाल वधू शुभ साक्षरं मुनियुतं त्रिगुणं मुनि भाजितम् ॥ स-
कल शास्त्र विचार विचक्षणो विषम पुत्र समे खलु कन्यका ॥ ४४६ ॥ गृहनष्ट पशुला
भप्रश्नः ॥ घुमणि भान्तव भेषु वने स्थितं तदनु षट् सुपकर्ण पथे स्थितम् ॥ अचल-
७ भेषु गतं गृहमागतं द्वय गतं गत मेव मृतं त्रिषु ॥ ४४७ ॥ अथ सामुद्रिक परीक्षा ॥ त्रि-
पाल भाल वक्षा क्षि वक्षो बाहु करांघ्रिवान् ॥ सुदृढ मस्तकं नाभि गंभीरा नाशि को-
न्नता ॥ ४४८ ॥ स्निग्ध दंतत्व चः केशाः रुक्षाः स्निग्धाश्च कुंचिताः ॥ नेत्र प्रांते ऽरुणं
स्निग्धं विशालं कृष्ण तारकम् ॥ ४४९ ॥ रुक्षा वर्ताधि पूर्णो वा स्निग्ध गंभीर निःस्वनः ॥

सफेण सूत्रकौ धन्यो नरो नोत्पलपार्श्विकः ॥ ४५०॥ नरो मातृ सुखो धन्यो नारी पितृ सुखीन
या ॥ रक्त मोष्ट मुखं पाणी पाद युग्म तलं तथा ॥ ४५१॥ औदार्य्य धैर्य्य गांभीर्य्य महारंभ
यशः प्रियः ॥ प्रसन्न वंदनो वंश्या भिमानी प्रिय सत्यवाक् ॥ ४५२॥ नीतिमान् गुरु वाक्य
स्थः शुचि दक्षो ऽथ पापभीः ॥ इत्यादि गुण संपन्नो नरो भवति भाग्यवान् ॥ ४५३॥ रेखा
यात र्जनी याता निर्य्यक्ता पुण्य संज्ञका ॥ तर्ज्जन्यं गुष्ठयो र्मध्ये तिर्य्यक्से श्वर्य्य संज्ञका
॥ ४५४॥ मणिबंधत ऐश्वर्य्य रेखा मूलं द्वियाति या ॥ सा रेखा पितृ वंशाख्या व्युद्धिना गेह
सौख्यदा ॥ ४५५॥ समायोगवती चैया पितृवंश विवर्द्धिनी ॥ आयुः कनिष्ठयो र्मध्ये ए
कांत कला क्रिया ॥ ४५६॥ करभात्ये गता रेखा सा तु मातुल वर्गिका ॥ सूक्ष्मा भाव्य वसुः स्थू
ला मातुलस्यैव मन्यतः ॥ अंगुष्ठ मूल रेखाभि र्निर्दिष्टा सन्ततिर्बुधैः ॥ सूक्ष्माभिः कन्यका पु
त्र स्थूलाभिश्च तथाविधा ॥ ४५७॥ अच्छिन्नाभि र्न रेखाभि स्सन्त तिर्दीर्घजीविनी ॥ रेखाया
नासिका मूलं यशः पुण्याभिधा तु सा ॥ ४५८॥ धन रेखा तु सा याता अणि बंधात्तु मध्य-

ना ॥ स्यान्नेदखंडिता पूर्णा सोर्द्धरेखा तु राज्यदा॥४५८॥ गंभीरास्तु दृढाः स्निग्धाः सु-
भद्रा मनुपिंगलाः॥ दक्षिणे तु करे पुंसां वामा स्त्रीणां तु वामके॥४६०॥ अंगुष्ठस्तज-
वो यस्य स भवेद्राज्यभाग्नरः॥ श्रीवत्साम्बरथादर्शध्वजस्तंभगिरिस्रजः॥४६१॥
हस्तिच्छत्रांबुजः कुंभः श्रीवत्सः कुलिशांकुशम्॥ अंगारो व्यजनं वीणा जवो मत्स्या-
दिकं तथा॥४६२॥ कर पाद तले यस्य स भवेद्धरणीपतिः॥ खल्वाटस्तु धनी विद्वान् दं-
तुरस्संहतांगुलिः॥४६३॥ धनाढ्यो ल्पवयः प्रोक्त उदारो विरलांगुलिः॥ तिलः पाद-
तले हस्ते नाभ्रगयां दृष्टिगोचरः॥४६४॥ हृदि भजन ने भाले धन भाग्यप्रदो नृणाम्॥
रेखाः कर तले चेत्स्युरक्ता भ्यस्त्वधिका तथा॥४६५॥ ह्रस्वा सूक्ष्मा सिताः छिन्नास्तदा [illegible]
स्य दरिद्रता॥ स्थूलं भजं ननं दीर्घकेशं वानेकधारकम्॥४६६॥ यस्य चेत्स दरिद्रः [illegible]
त शुभलक्षणवानपि॥ दरिद्रः कारयुग्मेन कंडूयति शिरस्तु यः॥४६७॥ अथ स्त्रीणां-
विशेषः॥ शुभानि यानि चिन्हानि पुंसां प्रोक्तानि सूरिभिः॥ तान्येव योषितां योत्र विशेषः प्रो-

ऊर्जित वचनं चेत स्योन्नतं सुभगं वपुः ॥ पापभीरुमति श्चेत्स्त्रिं चिन्हे रन्धैश्च योषितास्म् ॥ ४७८ ॥ अथापरचिन्हानिस्त्री पुंसोरशुभानि ॥ हस्त छेदी भिणानां सुविल ख लिखनं पादयो रल्प पूजा ॥ दंता नासल्य शैच्यंव सन मलिनता रुक्षता मूर्द्धजानामूर्द्ध सन्ध्ये चापि निद्रा वि वसन शयनं ग्रा सहासावलोके स्वांगे पीठे चवा द्यं विल रति हर ते के शव स्यापि लक्ष्मीम् ॥ ४७९ ॥ द्विवेदि कुल संभूत सरयू कृत संग्रहे ॥ शिरोमणौ समाप्तेयं त्रयो विंशति का सभा ॥ ४८० ॥ इति श्री संग्रह शिरोमणौ मिश्र कथनं नाम त्रयो विंशतिः सभा २३ अथ तिथ्यो विध्युक्त कर्मानुष्ठान फल सिद्धार्थं तदंगत या निर्णीयंते ॥ अत्यंताप्राप्त प्रापणं विधिः ॥ तदुक्तं मीमांसायां ॥ विधिरत्यं तम प्राप्तौ नियमं पाक्षिके सति ॥ तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते ॥ १ ॥ सच विधिर्वेद वाक्यं स्मृति पुराणादि वाक्यं च ॥ वेद वाक्य प्रामाण्यं सिद्धमेव ॥ तन्मूल त्वात्स्मृति पुराणादीनामपि प्रामाण्यम् ॥ २ ॥ तत्रगर्गः ॥ सविधिर्द्विविधः प्रवर्त्तको निवर्त्तकश्च ॥ प्रवर्त्तकस्तु ॥ दर्शे स्नात्वा पितृ-

भ्यो योदद्यात्कृष्ण तिलोदकं ॥ अन्नंच विधिवद्द्या त्संतति स्तेन वर्द्धते ॥ ३॥ निवर्तकस्तु ॥ आमायांच नगच्छेत प्राप्त कालमपि स्त्रियम् ॥ अमावास्यायां नार्थी यी तना श्री पयेदिति ॥ ४ ॥ तिथिनक्षत्र वारादि साधनं पुण्य पापयोः ॥ प्रधान गुणभावेन न स्वातंत्र्येण ते स्त्रमाः ॥ ५ ॥ अतश्च तिथयो विध्यं गत्वेन निर्णेतव्याः ॥ तत्र कास्तिथयः ॥ प्रति पदाद्याः षोडश एव तत्रा होरात्रेण सूर्य्य मंडला च्चंद्रस्य प्रथम कलानिर्गमे शुक्ल प्रति पद्भवति ॥ एवं द्वितीया हो रात्रेण द्वितीया कला निर्गमे द्वितीया भवति ॥ एवं तृतीया दयो द्रष्टव्याः ॥ एवं पंच दशे ना हो रात्रेण पंच दश्याः कलायाः निर्गमे सूर्य्याच्चन्द्रमसो रत्यंत दूरात्पूर्णिमा ॥ एवं अस्यां पूर्णिमायां संपूर्णमंडलस्येन्दोः षोडशे ना होरात्रेण एक कलाया रवि मंडल प्रवेशे कृष्ण प्रति पत् भवति ॥ एवं क्रमेण द्वितीयाद्याः ॥ एवंत्रिंशत्तमे नाहो रात्रेण पंचदश्याः कलायाः प्रवेशात् सूर्य्या चंद्रमसोरत्यंत सन्निकर्षादमावास्या भवति ॥ नन्वेवंति थीनां विध्यंगत्वे

न विधि नैव सिद्धत्वात् तन्निर्णयस्याप्रयोजनम् ॥ सत्यं ॥ षष्टिघटिकात्मकत्वाच्चवि-
न्नानां तिथीनां संपूर्णत्वेनानिर्णयत्वेऽपि यत्र तिथे र्वृद्धि ह्रासौ भवतस्तत्रैकस्यास्तिथे-
र्द्दिनद्वय व्यापित्वेन तत्तिथौ विहितं कर्म्म कुत्र कर्तव्यमिति संशये ॥ अवश्यं निर्णयः
कर्त्तव्यः ॥ सा तिथिस्त्रिधा ॥ पूर्वो दृश्यः ह्रिंसा चेति सर्वः समा तिथिः दृश्यः वृद्धिः ह्रिंसा-
क्षयः ॥ यदाह बौधायनः ॥ सर्वो दृश्यस्तथा ह्रिंसा त्रिविधं तिथिलक्षणं ॥ सर्वो दृश्यौ परौ
पूज्यौ हिंसा स्यात्पूर्वकालिकी ॥ तत्र तिथीनां वेधनिर्णयमाह ॥ सर्वास्तिथयः पक्षद्वयेऽ
पि सामान्येन पूर्वया परया च तिथ्या त्रिभिर्मुहूर्तैर्विद्धास्स्युः ॥ यदाह पैठीनसिः ॥ पक्ष-
द्वयेऽपि तिथयस्तिथिं पूर्वां सपोत्तराम् ॥ त्रिभिर्मुहूर्तैर्विध्यंति सामान्योऽयं वि-
धिः स्मृतः ॥ न त्वयं वेधतिथिस्सामान्यविषये न भवति ॥ तथा चस्कांदे ॥ नागो द्वाद-
श नाडीभिर्दिक्पंच दशभिस्तथा ॥ भूतोऽष्टादश नाडीभिर्दूषयत्युत्तरां तिथिम् ॥
सप्तम् ॥ अयं विशेषवेधउत्तरतिथिविषयः ॥ सामान्यवेधस्तु त्रिमुहूर्त एव पूर्वेति-

थिविषयः ॥ तदुक्तंकौर्मे ॥ चतुर्दशी पंचमीच तथाच दशमी तिथिः पूर्वान्तिथिंदू-
जयंति त्रिभिरेव मुहूर्त्तकैः ॥ अयंच त्रिमुहूर्त्तादिवेधःउदयादूर्द्ध पूर्वतिथ्याअस्त
मयात्प्राक् परतिथ्या चेत्यव गम्यते ॥ कुतः वचन वलादेव ॥ देवलः ॥ उदय न्नेव स-
वितायां तिथिं प्रति पद्यते ॥ सातिथि स्सकला ज्ञेया दाना ध्ययन कर्म्मसु ॥ साति
थि स्तदहो रात्रं यत्रास्तं याति भास्करः ॥ उदिते दैवतं भानौ पैत्र्यं चास्तं गते रवौ ॥
त्रिमुहूर्त्त महो यासा तिथिर्वैहव्य कव्ययोः ॥ अतः उदयात्रिमुहूर्त्त व्यापिन्यां दैवतं
कर्म्म ॥ अस्तमया त्रिमुहूर्त्त व्यापिन्यांपित्र कर्म्मकार्य्यम् एकभक्त व्रतादिषु भिन्नोवेध
स्यविचारः ॥ एकादशी व्रतादिषु च तिथ्यो ऽ वश्यं ह्रास्य वृद्धापि निर्णयाः ॥ अथतिथी
नां घटिका लव त्वात् घटी निर्णीयते ॥ सूर्यसिद्धांते ॥ षड्भिः प्राणै र्विनाडी स्यात् तत्य षष्ठा भाग
उच्यते ॥ अस्यार्थः ॥ दशगुर्व क्षरोच्चारणा कालःप्राणः ॥ कंकंकं कं कं कं कं कं कं कं
इति ॥ विनाडी कला तस्याः साधकः ॥ श्लोको यथा ॥ लोक क्षेमा यासीन्म त्स्यःकू-

म्नः कालः पुंसि ह्रौ ह्रस्वा कारो रामो रामः   ह्रसो वौद्धः कल्कीचेत् ॥ एवं नाना कारं
ज्ञाना रूपं नानानामानं योगि ध्येयं देवानां देवं वंदेतं गोविंदम् ॥ षष्टि कलाभि
र्भागो घटी   अन्योऽपिप्रकारः ग्रंथान्तरे ॥ ताम्रस्य षड्भिः पलै र्भाजनम् ॥ त्रिंशदंगुल
विस्तार मुच्छ्रितं चतुरंगुलम् ॥ स्वर्ण माषेन कृत्वा च चतुरंगुल कंटिका ॥ मध्यभागे
तथाविद्धं घटिका तु प्रजायते ॥ तद्रंध्रेणांभसा पात्रं यावत्कालेन पूर्यते ॥ स कालोघ
टिका यास्तु पूर्वाचार्यै रुदाहृतः ॥ एकभक्तादि व्रतां गत्वा देकभक्तादि व्रतानां स्व-
रूपं कालश्च निरूप्यते ॥ तत्रतानि ॥ व्रतान्येकभक्तनक्तायाचितोपवास भेदेन चतु-
र्द्धा भवंति ॥ तत्रैक भक्तं नाम दिनार्द्ध रूपं मध्यान्हा दुपरि नियमेन भोजनम् ॥ दि-
नार्द्ध समयेऽतीते भुज्यते नियमेन यत् ॥ एक भक्तमिति प्रोक्तं मतस्तस्याद्दिवे व-
हि ॥ तच्चैक भक्तंस्तु मध्यान्ह व्यापिन्यामेव ॥ तदाह बौधायनः ॥ उदयेतु यदा तस्य-
ङ् नक्तस्यास्तमये तिथिः ॥ मध्यान्ह व्यापिनी ग्राह्या एक भक्त व्रते तिथिरिति ॥

कालोऽत्र पंचविधः ॥ प्रातः संगव मध्यान्हा परान्ह सायान्ह भेदात् ॥ यदाह व्यासः ॥ मुहू-
र्त्तं त्रितयं प्रात स्तावानेव तु संगवः ॥ मध्यान्ह स्त्रि मुहूर्तस्याद परान्हश्च तादृशः ॥
सायान्ह स्त्रि मुहूर्तश्च सर्व कर्म्मसु गर्हितः ॥ एवं त्रयोदशी घटिका मारभ्या ष्टाद-
शी घटिका यावत्तु षट् घटि का धिको मध्यान्हः ॥ तत्राप्युत्तर स्त्रिन् घटि कात्रये
एक भक्तं कर्त्तव्यं ततः सूर्य्यास्त पर्य्यन्तं गौणः ॥ तत्र पूर्वे द्युर्व्याप्तिः परे द्युर्व्याप्तिस्तदुभयोर्व्या
प्ति स्तत्रापि साम्यं वैषम्य मिति षट् पक्षाः ॥ तत्राद्ययोः संदेह एव ॥ तृतीये तु पूर्वेन्हि
गौण मुख्य व्याप्तेः सत्वात्पूर्वेति ॥ माधवः ॥ युग्म वाक्यान्निर्णयः ॥ इति हेमाद्रिः ॥ च-
तुर्थ पक्षे परे वसं कल्प काले सत्वादिति केचित् ॥ गौण काल व्याप्तेश्च तुर्थ पक्षे स-
त्वात् ॥ वैषम्येण प्राव्याप्तौ याधिका सा ग्राह्या साम्ये पूर्वा ॥ अयं च स्वतंत्रैकभक्त निर्णयः
॥ अन्यांगे उपवास प्रति निधौ तदनुसारेण निर्णयः ॥ तथा चोक्तं ॥ कर्म्मणो यस्य यः
कालः तत्काल व्यापिनी तिथिः ॥ तया कर्म्माणि कुर्वीत ह्रास वृद्धी न कारणम् ॥ अप-

स्त्व ॥ योयस्य विहितः कालः कर्म्मणस्तदुपक्रमे ॥ विद्यमानो भवेद्रंगो नोज्झितः प्रक्रमस्तोतु इत्येकभक्तनिर्णयः ॥ अथनक्तंतिथिनिर्णयः ॥ नक्तंनाम दिवाशनं वर्ज्जयित्वा रात्रौ भोक्तव्यमिति ॥ दिवारात्रिव्यापिन्यामेवतिथौ कार्य्यं कोऽर्थः प्रदोषव्यापिन्यामेव ॥ तथाचस्कांदे ॥ दिवारात्रिव्रतं यच्च एकमेव तिथौ स्मृतम् ॥ ताभ्यामुभयव्यापिन्यां कुर्य्याद्देवव्रतं व्रती ॥ ग्रन्थोभय व्यापिन्यामेव ॥ तथाच कौर्मे ॥ प्रदोषव्यापिनी यत्र त्रिमुहूर्ता यदा भवेत् ॥ तदा नक्तं व्रतं कुर्य्यात्स्वाध्यायस्य निषेधवत् ॥ वत्सोक्तिरपि ॥ प्रदोषव्यापिनी ग्राह्या तिथिर्नक्तव्रते सदा ॥ प्रदोषस्तु ॥ उदयात्प्राकृतनी संध्या घटिकात्रयमिष्यते ॥ सायं संध्या त्रिघटिका अस्तादुपरि भास्वतः ॥ त्रिमुहूर्त्तं प्रदोषस्याद्भानावस्तं गते सति ॥ नक्तं तत्रतु कर्त्तव्यमिति शास्त्रस्य निश्चयः ॥ इतिमदनरत्ने व्यासोक्तिः ॥ ननु षड्घटिकात्मके प्रदोषे आद्यं घटीत्रयं संध्याकालः ॥ तदतिक्रम्य उत्तरस्मिन् घटिकात्रये नक्तव्रतनिमित्तं भोजनं प्राप्तमिति ॥ तस्मिन्का-

ले भोजनाभावा इति निषिद्धम् ॥ तथाच स्मृतावपि ॥ चत्वारि मानि कर्म्माणि संध्यायां परिवर्ज्जयेत् ॥ आहारं मैथुनं निद्रां स्वाध्यायं च चतुर्थकम् ॥ संध्याकाले भोजन निषेधे नैव त्रिघटिकात्मक संध्या ग्रहणे संध्या नाम दिनरात्र्योः संधौ उपाशनादि क्रियैव ग्रेष्ठा ॥ संधिश्च खंड मार्त्तण्डो पलाक्षितः काल स्तस्याल्पत्वात्क्रिया याश्च वितत्वेन स्वल्प काले कर्त्तुमशक्यत्वात् ॥ मुख्यार्थ वाधे सति संध्या शब्देन संधि शब्दः ॥ पूर्वापरो वा क्रिया पर्य्याप्तिः कालो लक्ष्यते ॥ यतः स्मृतौ ॥ प्रात स्संध्या स नक्षत्रा मध्यान्हे मध्य भास्करा ॥ ससूर्य्या पश्चिमा संध्या संध्यात्रय मितीरिता ॥ अतो मुख्य काले संध्या वंदनं दैवान्न कृतं तत्र गौण काले घटी त्रयात्मके कर्त्तव्यता मभ्यनुज्ञापनार्थं संध्या गर्ज्जितादिना विहिता नध्ययनादि परश्च नक्तव्रत विहित भोजनं नक्षत्र दर्शने एव कर्त्तव्यम् ॥ तथाच भविष्ये ॥ मुहूर्त्तोनं दिनं नक्तं प्रवदन्ति मनीषिणः ॥ नक्षत्र दर्शनान्नक्त महं मन्ये गणाधिप ॥ नक्षत्र दर्शनादिति स्वप

लोपे पंचमी ॥ अतश्च नक्षत्र दर्शनं प्राप्य नक्तविहित भोजनं विधेय मित्यर्थः ॥ मुहू-
र्तोनंदिनं तु यति परम् ॥ यदाह देवलः ॥ नक्षत्र दर्शनान्नक्तं गृहस्थानां स्मृतं बुधैः ॥
यते र्दिनाष्टमे भागे तस्य रात्रौ निषिध्यते ॥ सौरनक्त विषयेतु ॥ आत्मनो द्विगुणां छा-
यां यदा संतिष्ठते रविः ॥ सौरं नक्तं विजानीयान्न नक्तं निशि भोजनम् ॥ इतिनृसिं-
हपुराणे अत स्सुमंतूक्तिरपि ॥ त्रिमुहूर्त स्पृगेवाह्नि निशिचैतावतीतिथिः ॥ तस्यां सौ-
रं भवेन्नक्त मह न्येव तु भोजनम् ॥ तथाच स्कांदे ॥ नक्तं निशायां कुर्वीत गृहस्थो वि-
धि संयुतः ॥ यतिश्च विधवा चैव कुर्य्यात् तत्स दिवाकर मिति ॥ पुत्रवांस्तु रात्रावे-
व ॥ हरिनक्ते विशेषः ॥ कालादर्शे स्कांदे ॥ उदयस्था सदा पूज्या हरिनक्त व्रते तिथिः ॥ अ-
न्य नक्तं तु संक्रांत्या दौ रात्रावेव ॥ निषेधस्य राग प्राप्त भोजन गोचरत्वेन बाधकत्वा-
त् ॥ दिन द्वय व्याप्तौ परा ॥ उभयोर्व्यां दिवा तिथ्योः प्रदोष व्यापिनी तिथिः ॥ तत्रोत्तरं तु
नक्तं स्यादुभयत्रापि सायतः ॥ इति कालादर्शे जाबालि वाक्यम् ॥ अन्य पक्षेतु एकभक्तवन्निर्ण-

क ॥ मन्त्रविशेषोमदनरत्नेगारुडे ॥ हविष्य भोजनं स्नानं सत्यमाहार लाघवम् ॥ अग्निका-
र्य्ये मधः शय्यानक्त भोजी षडाचरेत् ॥ अग्निकार्य्यं व्याहृतिहोमः ॥ इति नक्त तिथि
निर्णयः ॥ प्रसंगान्नक्षत्रव्रत कालः ॥ तत्र सूर्य्यास्तसमय व्यापिनि नक्षत्रे नक्षत्रव्रतं कार्य्यंसू
र्य्यवा त्यंत क्षय गामि नक्षत्रं दिन द्वये प्य स्तकाल व्यापिन भवति ॥ तदार्द्ध रात्राद
र्वाक् चन्द्र युतेन सत्रे कार्य्यम् ॥ तदुक्तं विष्णु धर्म्मे ॥ उपोषितव्यं नक्षत्रं यस्मिन्नस्त-
मियाद्रविः ॥ युज्यते यत्र वा तारा निशीथे शशिना सह ॥ माधवीये स्कंदेच ॥ तत्रै तोप-
वसे हस्ते यन्निशीथा दधो भवेत् ॥ उप वासेय हस्तं स्या त्तद्धि नक्तै कभक्तयोः ॥ इतिन-
क्षत्रव्रत निर्णयः ॥ अथायाचितव्रतनिर्णयः ॥ न विद्यते याचितं यस्मिन्नभ्यवहरणे तद
याचितम् ॥ अभ्यवहरण ॥ भक्ष्य भोज्य लेह्य पेय चोष्य भेदेन पंच विधः ॥ तत्र ॥ दं-
तैरेव खंडयित्वा यन्निगीर्य्यते तद्भक्ष्यम् ॥ यदंत खंड व्यातिरेकेण मुख व्यापारेणानि
गीर्य्यते तद्भोज्यम् ॥ लेह्यन्नास जिह्वया ग्रहीत्वा यदं तर्गिल्यते ततःपेयंप्रसिद्धनीर

दि ॥ चौर्य्यं नाम द्रव्यो तर्गत सारं ॥ दंतेन मुख व्यापारेण वा गृहीत्वा याद्रुल्यत असा-
रमन्यत्त्यज्यते ॥ यथा म्रफले क्षुदंडादिः ॥ अस्य च सामान्यत एक भक्त रूप त्वात् ॥
एक भक्त वदेव मध्यान्ह व्यापिन्या मेव तिथौ सति संभवे विधेयं ॥ पर प्रार्थनया दिने
भोजना संभवे सति ॥ रात्रौ वा पर प्रार्थन या भोक्तव्यम् ॥ अन्यथा ॥ ओक्षे ह मेवेति सं
कल्य भंगः स्यात् ॥ एतेषा मेकभक्तादि व्रतानां खंड तिथिं विज्ञाया खंड तिथावेवो प-
क्रम समाप्ती कुर्य्यात् ॥ या तिथीरुद् यारभ्य दिनार्द्ध व्यापिनी भवेत् ॥ सा खंड तिथिः ॥
तस्यां व्रतानां प्रारंभ समाप्तिं च न कुर्य्यात् ॥ यदाह सत्य व्रतः ॥ उदय स्थार विर्या-
ह्नि न भवे द्दिन मध्यगा ॥ ता खंडा न व्रतानां सा तत्प्रारंभे समापने मिति ॥ अथ व्रत परिभा-
षा व्रताधिकारिणो मदन रत्ने भविष्ये ॥ अनग्नय स्तु ये विप्रास्तेषां श्रेयो विधीयते ॥ व्रतोप
वास नियमै र्नाना दानै स्तथा नृप ॥ उप वासं तु सनग्नि ब्राह्मण पर न् ॥ अत एव देवलः ॥
साग्नि ता ग्निरनग्नीश्च ब्रह्मचारी तु ते त्रयः ॥ अभ्यंतर एव सिध्यन्ति नेषां सिद्धि रन सन-

ताम् ॥ एका दप्यारवपितुश्राद्धाच्छूद्रस्याप्यधिकारः ॥ यथा ॥ शूद्रो वर्णश्चतुर्थोऽपि-
वर्णत्वाद्धर्ममर्हति ॥ वेदमंत्रस्वधास्वाहावषट्काराादिभिर्विनेति ॥ व्यासः॥प्राच्यास्तु॥
वैश्यशूद्रयोर्हि रात्र्यधिकोपवासनिषेधः ॥ यत्तु ॥ वैश्याः शूद्राश्च ये मोहादुपवास
मकुर्वते ॥ त्रिरात्रं पंचरात्रं वा तेषां शुद्धिर्न्न विद्यते ॥ इतिहेमाद्रिः एवं स्त्रीणामपितु स्कांदे
नास्ति स्त्रीणां पृथक् यज्ञो न व्रतं नाप्युपोषणम् ॥ भर्तृशुश्रूषयैवैता लोकानिष्टान्
व्रजंतिहि ॥ अन्यत्रापि ॥ यद्देवेभ्यो यच्च पित्रादिकेभ्यः कुर्य्याद्भर्त्ताभ्यर्च्चनं सत्क्रियां
च ॥ तस्यार्द्धं साफलंनान्यचित्ता नारी भुंक्ते भर्तृशुश्रूषयैव ॥ आदित्यपुराणे ॥ नारी
खल्वननुज्ञाता भर्त्रा वापि सुतेन वा ॥ विफलं तद्भवेत्तस्याः यत्करोत्यौर्द्ध्वदैहिकम् ॥
और्द्ध्वदैहिकं पारलौकिकं तत्रतु स्नुज्ञा विषयं ॥ अत्र विशेषो हरिवंशे ॥ स्नानं च कार्यं शि-
रसस्ततः फलमवाप्नुयात् ॥ स्नाता स्त्री प्रातरुत्थाय पतिं निद्रापयेत्सती ॥ तथाच ॥
गृही त्वौदुंबरं पात्रं सकुंभं साक्षतं तथा ॥ गोशृंगं दक्षिणे सिंच्य प्रगृह्णीयाच्च तज्जलम् ॥

औदुंबरताम्रमयं ॥ ततोभर्तुस्ततो दद्यात्तत्तस्य प्रयतस्य च ॥ आत्मनंश्चाभिषेक्तु-
श्च ततश्शिरसि तज्जलम् ॥ उपवासेषु कर्त्तव्यमेतद्धि व्रतकेषु च ॥ सर्वव्रतेषु संकल्प-
विधिश्च ॥ भारते ॥ गृहीत्वौदुंबरं पात्रं वारिपूर्णमुदङ्मुखः ॥ उपवासंतु गृह्णीयाद्यद्वा सं-
ल्पयेद्बुधः ॥ हस्तेनैवेत्यर्थः एवं यथाविहितकाले व्रतारंभः ॥ व्रतारंभेच विशेषो मदन-
रत्ने ॥ सत्यव्रतदेवलौ ॥ अभुक्त्वा प्रातराहारं स्नात्वाचम्य समाहितः ॥ सूर्याय देवताभ्यश्च
निवेद्य व्रतमाचरेत् ॥ भविष्ये व्रतकर्तुर्नियमाः ॥ क्षमा सत्यं दया दानं शौचमिंद्रियनिग्रहः ॥
देवपूजाग्निहवनं संतोषस्तेयवर्ज्जनम् ॥ सर्वव्रतेष्वयं धर्म्मः सामान्यो दशधा स्मृतः
॥ अग्निहोमस्तु दैवत्यो व्याहृतिहोमो वा ॥ विष्णुधर्मेऽपि ॥ तज्जप्यजपन ध्यानं तत्क-
थाश्रवणादिकम् ॥ तदर्च्चनं च तन्नामकीर्त्तनश्रवणादयः ॥ उपवासकृतामेते
गुणाः प्रोक्ता मनीषिभिः ॥ कौर्म्मे ॥ वहिर्ग्रामांत्यजान्सूतिं पतितं चरजस्वलाम् ॥
न स्पृशेन्नाभिभाषेत नेक्षेत व्रतवासरे ॥ पृथ्वीचंद्रोदयेऽग्निपुराणे ॥ स्नात्वा व्रतवता-

सर्व व्रतेषु व्रत मूर्त्तयः ॥ पूज्याः सुवर्ण रूप्याद्या यथा त्वा वै भूमि पाधिनः ॥ जपो होम
श्च सामान्यं व्रतानां दान मेवच ॥ चतु र्विंशद् ब्राह्मणा वा पंच वा एक एव वा ॥ विप्राः पू-
ज्या यथा शक्त्या तेभ्यो दद्याच्च दक्षिणाम् ॥ अत्र विप्रा इति पुल्लिंग निर्देशा त्पुमां स ए-
व भोज्या न तु स्त्रियः ॥ व्रत मूर्त्तयो व्रत देवता प्रतिमाः ॥ प्रतिमा स्वरूपं मदन रत्ने ॥ अनुक्ते
द्रव्य तत्संख्या देवता प्रतिमा नृप ॥ सौवर्णी राजती ताम्री वृक्षजा मार्त्तिकी तथा ॥ चि-
त्रजा पिष्ट लेख्यो स्या निज वित्तानु रूपतः ॥ आमाषात्पल पर्य्यंतं कर्त्तव्या शाठ्य वर्ज्जि-
तैः ॥ तत्रैव प्रासे ॥ आज्यं द्रव्य मनादेशे जुहोति षु विधीयते ॥ मंत्रस्य देवता यास्तु प्रजा-
पति रिति स्थितिः ॥ मंत्रानुक्तौ समस्त व्याहृति रूपो मंत्रः ॥ प्रजापतिश्च देवतेति ॥ कल्प
तरुः ॥ अनुक्त संख्याय त्रस्यात्स्व तमष्टोत्तरं भवेत् ॥ उपवासं द्विजः कृत्वा ब्राह्मणा नां
च भोजनम् ॥ कुर्य्यात्तेनास्य सगुण उपवासो विधीयते ॥ व्रतोद्यापनानुक्तौ पृथ्वी चंद्रोदये नंदि
पुराणे ॥ कुर्य्या दुद्यापनं तस्य समाप्तौ यदु दीरितम् ॥ उद्यापनं विना यत्तु तद्व्रतं निःष्फलं-

भवेत् ॥ यदि चोद्यापनं नोक्तं व्रतानु गुणतश्चरेत् ॥ वित्तानुसारतो दद्यादनुक्तोद्या-
पने व्रते ॥ गाश्चैव कांचनं दद्याद्व्रतस्य परिपूर्तये ॥ अशक्तो नारदीये ॥ सर्वेषामप्यला-
भे तु यथोक्तकरणं विना ॥ विप्रवाक्यं स्मृतं शुद्धं व्रतस्य परिपूर्तये ॥ वृथा विप्र वचो
यस्तु गृह्णाति मनुजः शुभम् ॥ अदत्वा दक्षिणां पापः स याति नरकं ध्रुवम् ॥ भारतेऽदोडए
नंदे देवीपुराणे ॥ व्रते च तीर्थेऽध्ययने श्राद्धेऽपि च विशेषतः ॥ परान्नभोजनाद्देवि यस्या
न्नं तस्य तत्फलम् ॥ आग्नेये ॥ नित्यस्नायी मिताहारो गुरुदेवद्विजार्चकः ॥ क्षार-
क्षौद्रं च लवणं मधुमांसानि वर्ज्जयेत् ॥ क्षारास्तु तत्रैवोक्ताः ॥ तिलमुद्गादृते शिम्ब्यं धा-
न्ये गोधूमकोद्रवौ ॥ धान्यं कदेवधान्यं च शमीधान्यं तथैव च ॥ स्विन्नधान्यं तथा
पण्यं मूलं क्षारगणाः स्मृताः ॥ गोधूमान्नं तु तत्रैव प्रशस्तम् ॥ व्रीहि षष्टिक-
मुद्गाश्च कपालाः सतिलं पयः ॥ श्यामाकाः शालिनीवाराः गोधूमाद्या व्रते हिताः ॥
कूष्मांडालाबवृंताकपालंकीज्योत्स्निकाः त्यजेत् ॥ चरुभैक्ष्यं शक्तुकणाः शाकं दधि-

घृतं मधु ॥ श्यामा का: शालिनी वार: पावकं मूल तंदुलम् ॥ हविष्यं व्रत नक्ता दावग्नि
कार्य्यादि के हितम् ॥ मधु मांसं विहायान्य द्व्रते च हित मीरितम् ॥ शामी धान्यं माषादिः
पालं की मध्य देशे पोई इति प्रसिद्धा ॥ ज्योत्स्निका कोशातकी ॥ मिताक्षरायां गोतमः
चरुभैक्ष्य शक्तु कण यावक शाक पयो दधि ॥ घृत मूल फलोद कानि हवीष्युत्तरोत्तर प्र-
शस्तानि ॥ पयो दधि घृतं च गव्य मिति ॥ गृहीत व्रतत्यागे तु मदन रत्ने तु छाग लेपः ॥ पूर्वं व्रतं
गृहीत्वा योना चरेत्काम मोहितः ॥ जीवन् भवति चांडालो मृतः श्वा चाभिजायते
॥ प्रायश्चित्तं तु पृथ्वी चंद्रोदये आग्नेये गारुडेऽपि ॥ क्रोधात्प्रमादा ल्लोभा द्वा व्रत भंगो भवे
द्यदि ॥ दिन त्रयं न भुंजीत मुंडनं शिर सोऽथवा ॥ यत्तु ॥ प्रायश्चित्तं ततः कृत्वा पुनरे
व व्रती भवेदिति वचनं ॥ अति क्रांतमपि व्रतं कार्य्य मेवेति ॥ शूलपाणिः ॥ तन्मध्ये तु
व्रत शेष सत्वे ज्ञेयम् ॥ एतच्च शक्तविषयं ॥ अशक्तौ तु कालहेमाद्रौ पुराणां तरे ॥ उ-
पवासा समर्थश्चेदेकं विप्रं तु भोजयेत् ॥ ता वद्धनादि वाद्यद्वा द्भुक्ताद्द्विगुणं तथा ॥

मुक्तः कृत भोजनः ब्राह्मण भोजनं विनेति शेषः ॥ सहस्र सम्मितां देवीं जपेद्द्वादशा
संयमान् ॥ कुर्य्याद्द्वादशसंख्याकान् यथा शक्त्यातु यो नरः ॥ इति शुद्धितत्त्वे मात्स्ये ॥ उप-
वासेष्व शक्तानां नक्त भोजन मिष्यते ॥ मदनरत्ने वायवीये ॥ द्रव्य दानोपवासस्य फलं-
प्राप्नोत्य संशयम् ॥ अपरार्के देवलः ॥ ब्रह्म चर्य्यं तथा शौचं सत्यमामिष वर्ज्जनं ॥ व्रते-
ष्वेतानि चत्वारि श्रेष्ठानीति विनिश्चयः ॥ मात्स्ये ॥ तस्मात्कृतोपवासेन स्नानमभ्यंगपू
र्वकम् ॥ वर्ज्जनीयं प्रयत्नेन व्रतघ्नं तत्परं नृप ॥ नियमस्तु तत्र चान्द्रेवर्णिताः ॥ अथ
स्त्री व्रतेषु विशेषा उच्यंते ॥ तत्र हेमाद्रौ व्रतकांडे गारुडे ॥ गंधालंकार तांबूल पुष्प मालानु
लेपनम् ॥ उपवासेन दुष्यंति दंत धावन मञ्जनमिति ॥ इदं च सभर्तृकोपवास विषयम् ॥
अंजनं च सतांबूलं कुंकुमं रक्त वाससी ॥ धार्य्ये सोपवासापि अवैधव्य कारणतः ॥ वि-
धवायति मार्गेण कुमारी वाय दक्ष येति ॥ विष्णुधर्मेऽपि ॥ सर्वेषूपवासेषु मान्वाद्य-
सुवासिनी ॥ धार्य्ये इक्त वस्त्राणि कुसुमानि सितानि च ॥ विधवा शुक्ल वसन मेव से-

वद्धि धारयेत् ॥ मनुरपि ॥ पुष्पालंकारवस्त्राणि गंधधूपानुलेपनम् ॥ उपवासेन दुष्यंती
त्यादि ॥ मदनरत्ने व्यासोऽपि ॥ दंतधावनपुष्पादि व्रतेष्वस्नानदुष्यति ॥ यद्यपीदं सर्वोप-
वासविषयं प्रतीयते ॥ तथापि शिष्टाचाराननुमतात् ॥ सौभाग्याद्यर्थक्रियमाण नवरात्र
त्रिरात्राद्युपवासविषयमेव ॥ नत्वेकादश्यादिविषयम् ॥ असकृज्जलपानाच्च सकृत्तां
बूलभक्षणात् ॥ उपवासः प्रणश्येत दिवास्वापाच्च मैथुनात् ॥ इत्यपरार्के देवलेन ॥ तत्र नि-
षेधात् ॥ न चास्य पुंविषये सावकाशत्वात् ॥ स्त्रीणां तांबूलादिरागप्राप्तत्वात् ॥ तांबूला
दिप्राप्तावास्यैवैकादशीतरविषयत्वेनैवोपरीत्यस्यापि सुवचत्वात् ॥ हरिवंशे ॥ अंजनं
रोचनां चैव गंधाः सुमनसस्तथा ॥ व्रते चैवोपवासे च नित्यमेव विसर्जयेत् ॥ शिरसोऽ
भ्यंजनं सौम्य नैवमेतत्प्रशस्यते ॥ न पादयोर्न गात्रस्य स्नेहेनेति स्थितिः स्मृता ॥ तत्रैव ॥
अश्रुपातो रोषश्च कलहस्य कृतिस्तथा ॥ उपवासाद्व्रताद्वापि सद्यो भ्रंशयति स्त्रियम् ॥
स्त्रियमित्युपलक्षणम् ॥ शिवधर्मे ॥ दानं व्रतानि नियमं स्नानं ध्यानं हुतं जपः ॥ यत्ने-

नापि व्रतं सर्वं क्रोधे तस्य वृथा भवेत् ॥ अथ सूतकादौ निर्णयः ॥ तत्र स्मृत्यर्थसारे ॥ शौचयोः सर्वं स्मार्त कर्म्म निवृत्ति निबंधेषु स्यथैव ॥ गौडास्तु सूतकाशौचाद् पिता माहुः ॥ जानूर्द्ध्वं क्षतजे जाते नित्य कर्म्म न चाचरेत् ॥ नैमित्तिकं च तद् यत्र वह्नेर्न चाचरेत् ॥ सूतके च समुत्पन्ने ज्वर कर्म्माणि मैथुने ॥ धूमोद्गारे तथा वांतो नित्य कर्म्माणि संत्यजेत् ॥ द्वये मुक्ते त्व जीर्णे च नैव भुक्तापि किंचन ॥ कर्म्म कुर्य्यान्नरो नित्यं सूतके मृतके तथेति ॥ कालिका पुराणात् वस्तुतस्तु ॥ पूर्वं देवी पूज्योपक्रमांतन्मात्र विषयत्व मस्येति युक्तं प्रतीमः ॥ तथा हेमाद्रौ पाद्मे ॥ गर्भिणी सूतिका दिश्च कुमारी वाथ रोगिणी ॥ यदाऽशुद्धा तदान्येन कारयेत्प्रयता स्वयमिति ॥ तेन यस्मिन्व्रते यत्पूजा युक्ता तदन्येन कारयेत् ॥ शरीर नियमान्स्वयं कुर्य्यात् ॥ शुद्धितत्त्वे विष्णुः ॥ बहु कालिक संकल्पो गृहीतश्च पुरा यदि ॥ सूतके मृतके चैव व्रतं तन्नैव दुष्यति ॥ एतत्काम्य परम् ॥ नित्यं त्वनारब्धमिति कार्य्यमिति ॥ गौडाः ॥ मदनरत्ने ॥ पूर्वसंकल्पितं यच्च व्रतं सुनियतव्रतैः ॥ तत्कर्त्तव्यं नरैः

र्वहि धारयेत् ॥ मनुर्नपि ॥ पुष्पालंकारवस्त्राणि गंधधूपानुलेपनम् ॥ उपवासेन दुष्यंती
त्यादि ॥ गदनरत्ने व्यासोःपि ॥ दंतधावनपुष्यादि व्रतेप्यस्यानदुष्यति ॥ यद्यपीदं सर्वोप-
वास विषयं प्रतीयते ॥ तथापि शिष्टाचाराननुमतात् ॥ सौभाग्याद्यर्थं क्रियमाण नवरात्र
त्रिरात्राद्युपवास विषयमेव ॥ नत्वेकादश्यादि विषयम् ॥ असकृज्जलपानाच्च सकृत्तां
बूलभक्षणात् ॥ उपवासः प्रणश्येत दिवास्वापाच्च मैथुनात् ॥ इत्यपरार्के देवलेन ॥ तत्र नि-
षेधात् ॥ न चास्य पुंविषये सावकाशत्वात् ॥ स्त्रीणां तांबूलादि रागप्राप्तत्वात् ॥ तांबूला
दि प्रापकस्यैवैकादशीतर विषयत्वेनैव परीत्यस्यापि सुवचत्वात् ॥ हरिवंशे ॥ अंजनं·
रोचनां चैव गंधाः सुमनसस्तथा ॥ व्रते चैवोपवासे च नित्यमेव विसर्जयेत् ॥ शिरसो
भ्यंजनं सौम्य नैव मेतत्प्रशस्यते ॥ न पादयोर्न गात्रस्य स्नेहेनेति स्थितिस्मृता ॥ तत्रैव ॥
अश्रुपातो रोषश्च कलहस्य कृतिस्तथा ॥ उपवासाद्धतात्त्वपि सद्यो भ्रंशयति स्त्रियम् ॥
स्त्रियमित्युपलक्षणम् ॥ शिवधर्मे ॥ दानं व्रतानि नियमं स्नानं ध्यानं हुतं जपः ॥ यत्ने-

वेत् ॥ तत्रैव ॥ स्वयं कर्त्तुमशक्तश्च कारयेत पुरोधसा ॥ इदं च सर्व वर्ण साधारणमावेशात् ॥ जपस्तपस्तीर्थ सेवा प्रव्रज्याजपसाधनम् ॥ विप्रैस्संपादितं यस्य सपन्नं तस्य तत्फलम् ॥ अत्र विशेषमाह त्रिकांडमंडनः ॥ काम्ये प्रतिनिधिर्नास्ति नित्ये नैमित्तिके च सः ॥ काम्येऽप्युपक्रमादूर्द्ध्वं केचित्प्रतिनिधिं विदुः ॥ न स्यात्प्रतिनिधिर्मंत्रस्वामिदेवाग्निकर्म्मसु ॥ सदेव कालयोर्न्नास्ति नारणेरग्निरेव सा ॥ नापि प्रतिनिधातव्यं निषिद्धं वस्तु कुत्रचित् ॥ हिरण्यकेशिसूत्रेऽपि ॥ न स्वामिन्स्त्वस्य भार्य्यायाः देशस्य कालस्याग्नेर्देवतायाः कर्म्मणः शब्दस्य च प्रतिनिधिर्विद्यत इति ॥ अथ व्रतादि सन्निपात निर्णयः ॥ तत्र तिथिद्वय सन्निपाते ॥ तत्रोक्तं दान होमादि क्रमेणानुष्ठेयमविरोधात् ॥ इदं पूर्वारब्धेष्वेव ॥ एक मध्येऽन्यकामः कर्म्मारंभस्तु न भवत्येव गुणफला इते ॥ यद्वा व्रतादि कर्म्म मात्रस न गेन व्यवधान दोषस्सर्वत्र साम्यतः ॥ शिष्टास्तु ॥ कार्त्तिक स्नानादिमध्ये लक्ष होम तुला भारत श्रवणादिमाचरंति तन्नित्य मध्ये काम्य मध्येतु नित्यमप्यनेक

शुद्धं दानार्च्चनविवर्जितम् ॥ माधवीये कौर्म्मेऽपि ॥ काम्योपवासे प्रक्रान्ते त्वन्तरा मृतसूत
४० के ॥ तत्र काम्यव्रतं कुर्य्याद्दानार्च्चनविवर्जितमिति ॥ एतेन सांगेऽधिकारान्न कृतांगं देव
पूजादि कार्य्यमिति वर्द्धमानोक्तिः परास्ता ॥ प्रारब्धपूजादि कार्य्यमेव तत्रैव विशेषवक्ष्या
मः ॥ एवं रजस्वलापि ॥ यत्तु सत्यव्रतः ॥ प्रारब्धदीर्घतः पुंसां नारीणां यद्रजो भवेत् ॥ न तत्रापि
व्रतस्य स्यादुपरोधः कदाचन ॥ तत्प्रतिनिधिना कारयेत् ॥ तदुक्तं मदनरत्ने मात्स्ये ॥ अंत
रा तु रजोयोगे पूजामन्येन कारयेत् ॥ प्रतिनिधयश्च निर्णयामृते ॥ पैठीनसिः ॥ भार्य्या पत्यु
र्व्रतं कुर्य्याद् भार्य्यायाश्च पतिर्व्रतम् ॥ असामर्थ्ये ऽपरस्ताभ्यां व्रतभंगो न जायते ॥
स्कांदेऽपि ॥ पुत्रं वा विनयोपेतं भगिनीं भ्रातरं तथा ॥ एषामभाव एवान्यं ब्राह्मणं वा नियो
जयेत् ॥ कात्यायनः ॥ पितृमातृभ्रातृपतिगुर्व्वर्थे च विशेषतः ॥ उपवासं प्रकुर्व्वाणाः पु
ण्यं शतगुणं भवेत् ॥ मदनरत्ने प्रभासखंडे ॥ भर्त्ता पुत्रः पुरोधाश्च भ्राता पत्नी सखापि च
॥ यात्रायां धर्म्मकार्य्येषु जायते प्रतिहस्तकाः ॥ एभिः कृतं महादेव स्वयमेव कृतं भ-४००

एवं काम्यनैमित्तिकानित्यत्वा॥ ट ढा ग



एवं द्वादश्यां मासोपवास श्राद्ध प्रदोषादिषु ज्ञेयम् ॥ अथ व्रतोपवासादिषु तिथीनां साधारण नि-
वलावलं स्वयमूह्य मिति दिक् ॥ इतिव्रत परिभाषा ॥ अथ शुक्ल पक्षे द्वितीया तृतीया युक्ता तृतीया द्वितीया युक्ता॥ चतुर्थी पंचम्या पंचमी च
र्णयः ॥ अथ शुक्ल पक्षे द्वितीया तृतीया युक्ता तृतीया द्वितीया युक्ता ॥ एकादशी द्वादश्या द्वा
तुर्थ्या षष्ठ्या सप्तमी सप्तम्या षष्ठी अष्टमी नवम्या नवम्यष्टम्या ॥ एकादशी द्वादश्या द्वा
दश्येकादश्या ॥ चतुर्दश्या पौर्णमासी पौर्णमास्या चतुर्दशी ॥ अमावास्या प्रतिपदा प्रति प
द मावास्ययेति॥ तदुक्तं निगमे ॥ युग्माग्नि युग भूतानि षण्मुन्यो र्वसु रंध्रयोः ॥ रुद्रेण द्वादशी
युक्ता चतुर्दश्या तु पूर्णिमा ॥ प्रति पद्यप्य मावास्यातिथ्यो र्युग्मं महाफलम् ॥ व्यस्तमेतत्
महादोषं प्रवदंति मनीषिणः ॥ इति ॥ युग्मं द्वितीया अग्निस्तृतीया युगं चतुर्थी भूतं पंचमी
षट् षष्ठी मुनिः सप्तमी वसु रष्टमी रंध्रं नवमी रुद्रे कादशी नन्वत्र वाक्येषु शुक्ल पक्ष एव कथं
गृह्यते तदुच्यते ॥ चतुर्दश्या च पूर्णिमेति प्रति पद मावास्ययेति॥ उभयोः साहचर्याच्च
एतयोः कृष्ण पक्षे असंभवात् ॥ दशम्येकादशी युता नवमी युता वा कार्या ॥ संपूर्णा दश

भक्तादौ विरोधस्तत्र प्राथम्यादेकभक्तं कार्य्यं ॥ नक्तं तु परेद्युस्तत्तिथौ गौणकाले कार्य्यम् ॥ समकालौ नविरुद्धव्रतादौ त्वेकम् स्वयंकृत्वान्यक्षार्य्यो द्विना कारयेदिति माधवः ॥ यत्र तु-शिवरात्र्यादौ तिथिमध्ये पारणायां न्हि भोजनं प्राप्तं ॥ भूताष्टम्योर्दिवा भुक्त्वा रात्रौ भुक्त्वा च पर्वणि ॥ एकादश्यां दिवारात्रौ भुक्त्वा चांद्रायणं चरेत् ॥ इति तन्निषेधश्च तत्र परयावेध-त्वाद्दिवैव भोजनम् ॥ निषेधस्तु रागप्राप्तभोजनविषयः ॥ एवमष्टम्यादिनक्तव्रते संक्रां-त्यादौ रवौ संकष्टचतुर्थ्यां च रात्रौ भोजनम् ॥ यत्र त्वष्टम्यादौ तु दिवा भुजि निषेधः ॥ सं-क्रमे च रात्र्या मिति निषेधद्वयम् ॥ तत्रोपवास एव कार्य्यः ॥ यद्यपि पुत्रिणोऽपवासोऽपि निद्रः ॥ तथाप्युपवासनिषेधेऽपि किंचिद्भक्ष्यं प्रकल्पयेत् ॥ इति वचनात् ॥ किंचि-द्भक्षयित्वोपवासः कार्य्यः ॥ चांद्रायणमध्ये एकादश्या दौ तु भोजनमेव कार्य्यम् ॥ चां-द्रायणस्य काम्यत्वेन नित्यबाधकत्वात् ॥ अबाधेन गत्यंतरासंभवाच्च एकादश्यामेका-न्तरोपवासादिपारणायां जलपारणं कृत्वोपवसेत् ॥ अपो वा अशितमनशितं चेति श्रुतेः

नि षेध व्यवस्था मात् ॥ गर्गः ॥ विधिः पूज्य तिथौ तत्र निषेधः काल के इति ॥ पूज्य त्वंच क
र्मानुष्ठान योग्य त्वम् ॥ एवंच खंड तिथौ पूज्यत्वं निर्णेयं यदातु अमावास्या द्वितीय-
याच प्रति पदोर्य्योग स्तदा मासु त्तैव ग्राह्या ॥ तदुक्तं निगमे ॥ युग्मा ग्नि युग भूतानां षण्मु
न्योर्वसु रंध्रयोः ॥ रुद्रेण द्वादशी युक्ता चतुर्दश्या तु पूर्णिमा ॥ प्रति पद्य प्य मावास्या
तिथ्यो र्य्युग्मं महाफलम् ॥ अत्र पूर्व तिथि स्तु उत्तर विद्धैव उत्तरा तु पूर्व विद्धैव ॥ चैत्र
कृष्ण प्रति पदि वसंतारंभः ॥ तत्र चैत्र कृष्ण प्रति पदि पूर्व विद्धायां विभूति वंदनादि कर्म्म
कर्त्तव्यं ॥ होलिकानंतर त्वेनैव ॥ होलिका समीपं गत्वा तद्भस्म गृहीत्वा ॥ पठनीयोयं मं
त्र ॥ ॐ वंदितासि सुरेंद्रेण ब्रह्मणा शंकरेण च ॥ अतस्त्वं पाहि नो देवि भूते भूतिदा
भव ॥ सचंदन मात्रमुकुलंच प्राश्नीयात् ॥ गोमयो पलिप्ते शुचौ देशे कृतस्वस्त्य-
यनः ॥ प्राशनमंत्रः ॥ आम्र मल्लं वसंतस्य चाकंद कुसुमं तव ॥ सचंदनं पि वाम्यद्य सर्व
कामार्थ सिद्धये ॥ चैत्र शुक्ल प्रति पदि वत्सरा रंभः ॥ सा चोदय व्यापिनी ॥ यथा चैत्रे मासि जग

नी कार्य्या पूर्वया परया यवा ॥ युक्ता न दूषिता यस्माद्यत स्सा सर्वतो मुखीति ॥ पुराण स-
मुच्चये ॥ संपूर्णा दशमी कार्य्या मिलिता पूर्वया यवेति ॥ तिथेः क्षयवृद्धिभ्यां पूज्यतामाह ॥ त्रिमु
हूर्त्तापि कर्त्तव्या याति थि र्वृद्धि गामिनी ॥ षण्मुहूर्त्तापि कर्त्तव्या यातिथिः क्षय गामिनी
॥ वृद्धि गामिनी स्वल्पा क्षय गामिनी महती पूज्यतेति ॥ ब्रह्मवैवर्त्तेऽपि ॥ तिथि ह्रासादिषु
रमानां वृद्धि ह्रास विधी तथा ॥ व्रत श्राद्ध विभागेन विद्वा तव्यौ व्यवस्थितौ ऽपि ॥ अत-
श्च तिथि क्षय वृद्धिभ्यां पूज्य तया व्रतादिकं कर्त्तव्य मिति दिक् ॥ अथ व्रति पक्षादि विशेष
तिथि निर्णयः ॥ वि प्रति पन्नानां वाक्यानां परस्पर विरोध परिहारो निर्णयः ॥ यदुक्तं ॥ तत्वे-
विप्रति पन्नानां वाक्यानामि तरेतरम् ॥ विरोध परिहारोऽत्र तत्वनिर्णय दर्शनम् ॥ अथा
दौ प्रति पन्निर्णीयते ॥ साच यदि सूर्य्योदय मारभ्य पुनरुदय पर्य्यन्तं भवति तदा सा संपू-
र्णत्वान्नि स्संदेहं का र्य्या हरा ॥ तदुक्तं स्कान्दे ॥ प्रति पत्प्रभृतयः सर्वाह्य दया सोदया द्रवेः ॥
संपूर्णा इति विख्याता हरिवासर वर्ज्जिताः ॥ हरि वासरः एकादशी खंडा तिथो नु विधिनि

शि॰ येच पूर्वयुतैव कार्य्या ॥ तत्र देवलः ॥ पूर्वविद्धैव कर्तव्या शिव रात्रि र्बलि र्दिनम् ॥ द्यूतदह्य
॥ पर विद्धेषु यः कुर्य्यात्पुत्र दारा
४०७ क्षैः ॥ देवलोऽपि ॥ प्रतिपद्दर्श संयोगे क्रीडनंतु गवां मतम् ॥ पर विद्धेषु यः कुर्य्यात्पुत्र दारा
धनक्षय मिति ॥ पुराण समुच्चयेऽपि ॥ गवां क्रीडा दिने यत्र रात्रौ दृश्यंत चंद्रमाः ॥ सोमो रा
जा पशून्हंति सुरभी पूजकां स्तथा ॥ तत्रैव वार्षिक जय पराजय हेतु त्वेन द्यूतं कार्य्यम्
॥ स्कांदे यथा ॥ प्रातर्गोवर्द्धनः पूज्यो द्यूतं चापि समाचरेत् ॥ ब्राह्मे ॥ प्रति पद्दि जयो यस्य
तस्य संवत्सरे जयः ॥ अतो वर्ष परीक्षार्थं द्यूतं चैव समाचरेत् ॥ गोपूजा मंत्रास्तु ॥ ॐ गो व
र्द्धन धरा धार गो कुल त्राण कारक ॥ वहुवाहु कृतच्छाय गवां कोटि प्रदो भव ॥ लक्ष्मी
र्य्या लोक पालानां धेनुरूपेण संस्थिता ॥ घृतं वहति यज्ञार्थे मम पापं व्यपो हतु ॥
अग्रत स्सन्तु मे गावो गावो मे सन्तु पृष्ठतः ॥ गावो मे हृदये सन्तु गवां मध्ये वसाम्यहम्
॥ अत्रैवा पराह्णे ॥ कुश काश निर्म्मित मार्ग पाली पूर्वस्यां ग्राम न स्तत्र वृक्षादिषु निब
ध्य सर्वे वर्णा स्तस्या स्तले स्थे पुः ॥ तदुक्तं स्कांदे ॥ ततोऽपराह्ण समये पूर्वस्यां दि

ब्रह्मा ससर्ज्ज प्रथमे ऽहनि ॥ शुक्ल पक्षे समग्रं तु तदा सूर्य्योदये सति ॥ दिन द्वये व्याप्ता व्या-
प्तौ पूर्वैव ॥ चण्डिकार्च्चने तु ऽमा युतैव ॥ तदुक्तं कालिकापुराणे ॥ ऽमा युक्ते वसं ग्राह्या ऽ-
ति पत्त्वं डिकार्च्चने ॥ ज्येष्ठ शुक्ल प्रतिपद् दशहरारंभः भाद्र शुक्ल प्रतिपदि शिव व्रतं तदेव मौन व्रत-
म् ॥ यदुक्तं व्रतसर्वे वर्ते ॥ रुद्र व्रतेषु सर्वेषु कर्त्तव्या सम्मुखी तिथिः ॥ आश्विन शुक्ल प्रतिपदि नव
रात्रारंभः ॥ सा च पूर्वान्हे पूजयेच्छिवाम् ॥ अत्र कर्म्म काल व्यापिन्येव तिथिर्गृह्यते ॥ क
र्म्मणो यस्य यः कालस्तत्काल व्यापिनी तिथिरित्युक्तेः ॥ अत्र शुक्ल प्रतिपत्पूर्वैवोपो
ष्या ॥ त्रि मुहूर्त्तान्न्यून त्वेऽपि पूर्वेद्युरेव युग्म वाक्यात् ॥ प्रातरावाह येद्देवीं प्रातरेव विस
र्ज्जयेत् ॥ अत्र सति संभवे प्रतिपत् आदि नाडी षोडशकं त्यक्त्वा कलशः स्थाप्यः ॥
आद्याः षोडश नाड्यस्तु लब्ध्वा यः पूजयेच्छिवाम् ॥ कलश स्थापनं तत्र ह्यरिष्टं जायते ध्रु-
वम् ॥ देवीपुराणोक्तेः ॥ रात्रौ तु तन्निषेधो ॥ मात्स्ये ॥ न रात्रौ स्थापनं कार्य्यं न च कुंभाभि-
षेचनमिति ॥ अथ कार्त्तिक शुक्ल प्रतिपत् ॥ सा च तिथि वृद्धौ पूर्व व्यापिनी गोक्रीडा दौ स-

येच पूर्वयुतैव कार्य्या ॥ तत्र देवलः ॥ पूर्वविद्धैव कर्त्तव्या श्रावणान्त बल। दिनम् ॥ …
क्रे: ॥ देवलोऽपि ॥ प्रतिपद्दर्श संयोगे क्रीडनं तु गवां मतम् ॥ परविद्धेषु यः कुर्य्यात्पुत्र दारा
धनक्षय मिति ॥ पुराण समुच्चयेऽपि ॥ गवां क्रीडा दिने यत्र रात्रौ दृश्यत चंद्रमाः ॥ सोमो रा
जा पशून्हंति सुरभी पूजकां स्तथा ॥ तत्रैव वार्षिक जय पराजय हेतुत्वेन द्यूतं कार्य्यम्
॥ स्कांदे यथा ॥ प्रातर्गोवर्द्धनः पूज्यो द्यूतं चापि समाचरेत् ॥ ब्राह्मे ॥ प्रतिपद्दि जयो यस्य
तस्य संवत्सरं जयः ॥ अतो वर्ष परीक्षार्थं द्यूतं चैव समाचरेत् ॥ गोपूजा मंत्रास्तु ॥ ॐ गो व
र्द्धन धराधार गोकुल त्राण कारक ॥ बहुबाहु कृतच्छाय गवां कोटि प्रदो भव ॥ लक्ष्मी
र्य्या लोक पालानां धेनुरूपेण संस्थिता ॥ घृतं वहति यज्ञार्थे मम पापं व्यपोहतु ॥
अग्रतस्सन्तु मे गावो गावो मे सन्तु पृष्ठतः ॥ गावो मे हृदये सन्तु गवां मध्ये वसाम्यहम्
॥ अत्रैवापराह्णे ॥ कुशकाश निर्मित मार्ग पालीं पूर्वस्यां ग्राम नक्तन्त वृक्षादिषु निब
ध्य सर्वे वर्णा स्तस्या स्तले स्थेपुः ॥ तदुक्तं स्कांदे ॥ ततोऽपराह्णसमये पूर्वस्यां दि

भारत ॥ मार्गपालीनिवद्वी पातुंगे स्तंभेऽथ पार्श्वे ॥ कुशकाशमयीं दिव्यां लंब-
कैर्वह्निभिर्मुने ॥ कृते होमे द्विजेन्द्रस्तु वध्नीयान्मार्गपालिकाम् ॥ नमस्कारं ततः कु-
र्यान्मंत्रेणानेन सुव्रतः ॥ ॐ मार्गपालि नमस्ते ऽस्तु सर्वलोकसुखप्रदे ॥ विधेयैः पु-
त्रदाराद्यैः पुनरेहि व्रतस्य मे ॥ इति पूज्य नीराजनमपि कृत्वा ॥ चतुर्वर्णास्तां समुल्लं-
घयुः ॥ स्कांदे ॥ मार्गपालीं समुल्लंघ्य नीरुजः स्युः सुखान्विताः ॥ अथ तत्रैव यष्टिकाकर्ष-
णमपि कार्यम् ॥ तदुक्तमादित्यपुराणे ॥ कुशकाशमयीं कुर्यात्कुशकाशमयीं दृढाम् ॥
गवाक्षकैकतो राजा हीनवर्णास्तथान्यतः ॥ गृहीत्वा कर्षयेयुस्तां यथासारं मुहुर्मु-
हुः ॥ जयोऽत्र हीनजातीनां ज्ञेयो राज्ञस्तु वत्सरात् ॥ जयचिन्हमिदं राजा वि-
दधीत प्रयत्नतः ॥ अत्रैव राजा स्वगृहस्थांतः ॥ वक्ष्यमाणलक्षणं बलिं पंचरंगकै-
र्लिख्य सपरिवारः ॥ षोडशोपचारैर्बलिं पूजयित्वा तत्प्रीत्यर्थं यथाशक्ति दा-
नं कार्यम् ॥ तदानमस्य फलं भवति ॥ अन्येऽपि स्वस्वगृहे तंदुलैः प्रयत्नात्

वलिमालिख्य पूजयेत्तु ॥ तथाच स्कान्दे ॥ यदस्यां दीयते दानं स्वल्पं वा यदि वा बहु
॥ तदक्षयं भवेत्सर्वं विष्णोः प्रीतिकरं परम् ॥ अन्यमासि प्रतिपत्सु व्रतादि विशे-
षो न प्रसिद्धः ॥ यदि कश्चित्स्यात् तदा पूर्वविद्धायामेव कार्य्यमेवेति सिद्धान्तः
इति प्रतिपन्निर्णयः ॥ अथ द्वितीया निर्णीयते ॥ द्वितीया तिथिरुपवासादिषु तृतीयायु-
तैव संग्राह्या ॥ युग्मवाक्यात् ॥ तत्र चैत्र शुक्ल द्वितीयायां ॥ उमापूजा शिवपूजा वन्हिपू-
जा च कार्य्या ॥ तदुक्तं भविष्योत्तरे ॥ चैत्र शुक्ल द्वितीयायामुमा पूज्या फलार्थिभिः ॥ शिव
पूजाग्निपूजा च कर्त्तव्या मुनिसत्तम ॥ इति चैत्र द्वितीया अथ श्रावणादि कृष्णद्वितीयासु च-
तुर्षु ॥ अशून्यव्रतम् सा पूर्वा कृत्वा रम्भा वृहत्तल्या सावित्री वटपैतृकी ॥ कामत्रयोद-
शी रंभा उपोष्या पर्वसंयुता ॥ वृहत्तल्या अशून्य श्रावण द्वितीया ॥ इति संवर्त्तोक्तिः ॥ का-
र्तिक शुक्ल द्वितीया यमद्वितीया ॥ साऽपराह्णव्यापिनी ॥ अस्यां यमुना स्नानं कृत्वा य-
मं पूजयेत्तर्प्पयेच्च ॥ भगिनीभिर्भ्रातरो भोजनीयाः ॥ भगिन्यश्च वस्त्रालंकारादिभिः

सत्कार्य्याः ॥ तथा च स्कांदे ॥ ऊर्ज्जे शुक्ल द्वितीयायामपराह्णेऽर्चयेद्यमम् ॥ स्नानं कृत्वा भानुजायां यम लोकं न पश्यति ॥ तर्प्पणं च ॥ यज्ञोपवीतिना कार्य्यं प्राचीनावीतिनाथवा ॥ देवत्वं च पितृत्वं च यमस्यैव द्विरूपता ॥ कार्त्तिके शुक्ल पक्षस्य द्वितीयायां तु नारद ॥ यमो यमुनया पूर्वं भोजितः स्वगृहेऽर्चितः ॥ अस्यां निज गृहे विप्र न भोक्तव्यं ततो बुधैः ॥ स्नेहेन भगिनी हस्ताद्भोक्तव्यं पुष्टि वर्द्धनम् ॥ दानानि च प्रदेयानि भगिनीभ्यो विधानवित् ॥ सर्वा भगिन्यस्संपूज्याः अभावे प्रतिपन्नकाः प्रतिपन्नकाः कृत्रिमाः ॥ अस्यां च भगिनीभिर्भ्रातृणामायुर्वृद्धये चिरजीविनः पूजा कार्य्याः ॥ ते च ॥ अश्वत्थामा वलिर्व्यासो हनूमांश्च विभीषणः ॥ कृपः परशुरामश्च सप्तैते चिरजीविनः ॥ इमान्पूज्य भ्रातुरायुः प्रार्थयेत् ॥ इति यम द्वितीया ॥ पक्षद्वय गता सु चतुर्विंशति संख्यास्व पिहितत्वात्तु सर्वोपचारेर्नृसिंहा पूज्यः ॥ इति द्वितीया निर्णयः अथ तृतीया निर्णीयते सर्वास्तृतीया रंभाव्यतिरिक्ताश्चतुर्थी युतैव ग्राह्याः ॥ स्कांदे ॥ द्वितीययातु संयुक्तान

धर्म्म कामार्थ तत्परैः ॥ ब्रह्मवैवर्त्ते ॥ रंभा-

तीया कदाचन ॥ कर्त्तव्या व्रतिभिस्तात धर्म्म कामार्थ तत्परैः ॥ ब्रह्मवैवर्त्ते ॥ रंभा-
यित्वा च तृतीयां मुनिसत्तम ॥ अन्येषु सर्वकार्य्येषु गणयुक्ता प्रशस्यते ॥ अथ चैत्र शुक्ल
तृतीया ॥ आंदोल नाख्या ॥ तत्र शंकरो मासं पूज्य रात्रौ जागरणं दक्षिणा दानमपि का-
र्य्यं ॥ तदुक्तं देवी पुराणे ॥ तृतीयायां यजेद्देवीं शंकरेण समन्विताम् ॥ सौवर्णी च तथा गौ-
री राजत श्शंकरस्तथा ॥ चतुर्भुजश्च देवोऽसौ द्विभुजा पार्वती भवेत् ॥ कुंकुमागरु
कर्पूरस्त्रगांध धूप दीपकैः ॥ संपूज्यांदोलये द्वत्स शिवो मातुष्टये सदा ॥ रात्रौ जागरणं
कार्य्यं प्रातर्देया च दक्षिणा ॥ इयं मन्वादि रपि ॥ इति चैत्र शुक्ल तृतीया अथ वैशाख शुक्ल
तीयास्य तृतीया ॥ सा पूर्वान्ह व्यापिनी ॥ नारदीये ॥ हे शुक्ले त्रेता द्यासंयुगादी कव-
यो विदुः ॥ शुक्ले पूर्वान्हिके ग्राह्या कृष्णे चैवा परान्हकी ॥ देवी पुराणे ॥ तृतीयायां तु
वैशाखे रोहिण्यृक्षे प्रपूज्य च जलकुंभ प्रदानेन शिवलोके महीयते ॥ मंत्रस्तु ॥ एष ध
र्म्म घटो दत्तो ब्रह्म विष्णु शिवात्मकः ॥ अस्य प्रदाना त्तृप्यंतु पितरोऽपि पितामहाः ॥ गं ४७१

धोदक तिलैर्म्मिश्रं सान्नं कुंभं सदक्षिणम् ॥ पितृभ्यस्संप्रदास्यामि पितृभ्यासुपतिष्ठतु ॥ साचेयं पूर्वान्हव्यापिनी ॥ विष्णुपुराणेऽपि ॥ पानीयमप्यत्रतिलैर्व्विमिश्रं दद्यात्पितृभ्यः प्रयतो मनुष्यः ॥ श्राद्धं कृतं तेन समाः सहस्रं रहस्यमेतन्मुनयो वदंति मात्स्ये ॥ कृतं श्राद्धं विधानेन मन्वादिषु युगादिषु ॥ हायनानि द्विसहस्रं पितॄणान्तृप्तिदं भवेत् ॥ गोभिलः ॥ वैशाखस्य तृतीयां यः पूर्वविद्धां करोति वै ॥ हव्यं देवानप्रहृंति कव्यं च पितरस्तथा ॥ पूर्वान्हे तु सदा कार्य्या शुक्ला मनुयुगादयः ॥ परे तु अपरान्हः पितॄणामित्यादि वचनाच्छ्राद्धविधाव पराह्न व्यापिन्येव ग्राह्या ॥ हे-शुक्ले दत्यादि वाक्यतः ॥ पर्वान्ह शब्दस्तु कुतपपूर्वार्द्ध परः ॥ गोभिलवचनं तु पित्रुद्देशेन क्रियमाणा तर्प्पणादि परतया व्याख्येयमित्याहुः ॥ साचेयं कल्पनानतीव भाति ॥ अपरान्हः पितॄणामित्यादि वचनस्याक्षयतृतीयातिरिक्त विषयत्वेनापि व्याख्यानसंभवात् ॥ मलमासयाते तूभयत्र श्राद्धं श्राद्धचंद्रिकायाम् ॥ यो-

गादिकं मासिकंच श्राद्धं चा पराह्निकं ॥ मन्वादिकं तैर्थिकंच कुर्य्यान्मासद्वये ऽपि च ॥ अपरपक्षो ऽत्र कृष्णपक्षो गृह्यते ॥ महालयस्य मले निषेधात् ॥ नारदीये विशेषो ऽपि ॥ वैशाखे शुक्लपक्षे तु तृतीया रोहिणीयुता ॥ दुर्लभा बुधवारेण सोमेनैव युता-थवा ॥ रोहिणी बुधयुक्तापि पूर्वविद्धा विवर्जिता ॥ भक्त्या कृतापि मांधातः हंति पुरायं पुरा कृतम् ॥ इत्यक्षयतृतीया ॥ ज्येष्ठशुक्लतृतीया रंभाख्या ॥ पूर्वा ग्राह्या इति स्कांदवाक्यात् ॥ तथाच भविष्ये ॥ ज्येष्ठशुक्लतृतीयायां पतिपुत्रफलार्थिनी ॥ नारी सूर्योदये स्नात्वा सती व्रतपरायणा ॥ तत्र व्रतनियमं गृहीत्वा ॥ चतसृषु कुंडेषु स्थंडिलेषु वाग्नीन्संस्थाप्य पंचमो भास्कर इति पंचाग्निमध्ये वेदिकायां रंभास्तंभोपशोभितां पुष्पमंडपिकां कृत्वा तत्र सर्वशक्तिमयीं देवीमावाह्य सर्वोपचारैर्नमोऽन्तैर्नाममंत्रैर्देवीं संपूज्य सूर्यास्तमयपर्यन्तन्तिष्ठेत् ॥ ब्राह्मणाश्च प्रणवादिनमोऽन्तैः स्वमंत्रैः सौभाग्यद्रव्याणि जुहुयात् ॥ ततो द्विजदंपत्यंश्चतुर्थ्यां भोजयित्वा यथाशक्त्या ऽऽचा

अथि ध्यर्याय दक्षिणां दत्वा गृहमाव्रजेत् ॥ इति भाद्र शुक्ला तृतीया हरितालिका ॥ सा मुहूर्त मा-
४४ त्रापि परैव ॥ मुहूर्तमात्र सत्वेऽपि दिने गौरी व्रतं परेति ॥ माधवः ॥ द्वितीयां शेष संयु-
क्तां या करोति विमोहिता ॥ सा वैधव्य मवाप्नोति प्रवदंति मनीषिणः ॥ तत्त्वापस्तंवः ॥
श्राद्या मधु श्रावणिका कज्जली हरितालिका ॥ चतुर्थी मिश्रिता स्त्रीभिर्दिवा नक्तं वि-
धीयते ॥ तृतीया नभसः शुक्ला मधु श्रावणिका स्मृता ॥ भाद्रस्य कज्जली कृष्णा शु-
क्ला तु हरितालिका ॥ इति दिवोदासीये ॥ तस्यां गौरी मूर्तिं विधाय संपूज्य गुडापूपनैवेद्यं
दद्यात् ॥ भविष्येऽपि ॥ गुडापूपास्तु दातव्या मासि भाद्रपदे तथा ॥ तृतीया शुक्ल पक्षस्य
सर्व पाप हरा स्मृता ॥ माघ शुक्ल तृतीयायां गुडस्य लवणस्य च ॥ दानं श्रेयस्करं राजन्
स्त्रीणां च पुरुषस्य च ॥ गुडेन तुष्यते देवी लवणेन स्वयं शिवः ॥ अत स्तृतीया चतुर्थी
युते वेति सिद्धांतः ॥ इति तृतीया निर्णयः ॥ अथ चतुर्थी निर्णीयते ॥ साचोपवासादिषु गणेश
चतुर्थी ढुंढ चतुर्थी वहुला चतुर्थी व्रत व्यतिरिक्तेषु पंचमी युतेव यस्म वाक्यात् ॥ अथ

चैत्र शुक्ल चतुर्थ्यां ॥ गणेशं लड्डुकादिभिरभ्यर्च्य सर्वान्कामानवाप्नोति ॥ देवीपुराणे ॥ गणेशो कारयेत्पूजां लड्डुकादिभिरादरात् ॥ चतुर्थ्यां विघ्ननाशाय सर्वकामसमृद्धये ॥ स्त्रीभिर्ज्येष्ठ शुक्ल चतुर्थ्यां मुमा पूज्या ॥ ब्रह्मपुराणे ॥ ज्येष्ठ शुक्ल चतुर्थ्यां तु जाता पूर्वं मुमा सती ॥ तस्मात्सा तत्र संपूज्या स्त्रीभिः सौभाग्य वृद्धये ॥ उपहारैश्च विविधैर्गीत नृत्योत्सवादिभिः ॥ होमैः पयोभिर्वस्त्रैश्च पत्र पुष्पैः सुगंधिभिरिति ॥ श्रावण कृष्ण चतुर्थी संकष्ट चतुर्थी सा चंद्रोदय व्यापिनी ॥ स्कांदे ॥ श्रावणे बहुले पक्षे चतुर्थ्यां च विधूदये ॥ तस्मिन्दिने व्रतं कार्यं संकष्टाख्यं सुरेश्वरि ॥ इति दिनद्वये तद्व्याप्त्यावव्याप्तौ पूर्वैव मातृविद्धा गणेश्वर इति वाक्यात् ॥ अथ भाद्र शुक्ल पक्ष चतुर्थी शिवाख्या ॥ तत्र स्नानदानादिकं गणेश पूजनं च ॥ अनंत पुण्यदं सा त्रिधा भविष्ये ॥ शिवा शांता सुखा राजन् चतुर्थी त्रिविधा स्मृतेति ॥ भाद्रे शुक्ले शिवा माघे शांता शुक्ल चतुर्थिका ॥ भौमवार युता सा चेत्सुखा नाम प्रकीर्तिता ॥ रविवार युता सा हि शोभा महा चतुर्थिका ॥

पाव्रतेतु ॥ पूर्वैव चतुर्थी तु तृतीयायां महापुण्य फलप्रदा ॥ कर्त्तव्या व्रतिभिर्वत्स गण-
नाथसुतोषिणीति ॥ गोविंदार्णवे ॥ नागव्रतेतु मध्यान्हव्यापिन्येव ॥ युगं मध्यदिने यत्र
तत्रोपोष्य फणीश्वरान् ॥ क्षीरेण स्नाप्य पञ्चम्यां पूजयेत्प्रयतो नर इति ॥ देवलोक्तेः ॥ भाद्र
कृष्ण चतुर्थी बहुला सा पूर्वैव ॥ भाद्र शुक्ल चतुर्थी मध्यान्ह व्यापिनी ॥ पूर्वोत्तर दिने मध्या-
न्हव्याप्तौ परैव ॥ माधवीये बृहस्पतिः ॥ चतुर्थी गणनाथस्य मातृविद्धा प्रशस्यते ॥
मध्यान्ह व्यापिनी चेत्स्यात् परा चेत्परेऽहनि ॥ भाद्र शुक्ल चतुर्थ्यां चन्द्र दर्शनं नि-
षिध्यते ॥ तदाह मार्कण्डेयः ॥ भाद्रे मासि सिते पक्षे चतुर्थी स्वातियोगिनी ॥ मिथ्याभि
शापं कुरुते तस्मात्पश्येन्न तं सदा ॥ प्रमादादृष्टदोष शांतये विष्णुपुराणोक्तं मंत्रं-
जपेत् ॥ सिंहः प्रसेनमवधीत्सिंहो जाम्बवता हतः ॥ सुकुमारि कि मारोदीस्तव ह्येष
स्यमंतकः ॥ माघशुक्ल चतुर्थी तिलचतुर्थी ॥ सा प्रदोषव्यापिनी ॥ काशीखंडे ॥ माघशुक्ल
चतुर्थ्यां तु नक्तव्रत परायणाः ॥ येत्वां ढुंढेऽर्चयिष्यंति तेऽर्च्याः स्युः सुरसुहृत्तम् ॥

विधाय वार्षिकीं यात्रां चतुर्थी प्राप्य तापसी ॥ भुक्त्वान् तिलान् गुडैर्वध्वा प्राश्नीयाल्ल-
ड्डुकान्व्रती ॥ तापसी माघीम् ॥ अत्रैव सदा शिवं कुंद पुष्पैरभ्यर्च्य लक्ष्मीं प्राप्नोति ॥
कौर्मे यथा ॥ कुंभे शुक्ल चतुर्थ्यां तु कुंद पुष्पैः सदाशिवम् ॥ संपूज्य यो दिनक्ताशी संप्रा-
प्नोति श्रियं नरः ॥ इयमेव कुंड चतुर्थी ॥ माघ मासे तु संप्राप्ते चतुर्थी कुंड संज्ञका ॥ सास-
पोष्या सुरश्रेष्ठ ततो राज्यं भविष्यति ॥ इति चतुर्थी निर्णयः ॥ अथ पंचमी निर्णयः ॥ सा तु पं-
चमी चतुर्थी युतैव ग्राह्योपवासादिषु ॥ यदाह जावालिः ॥ प्रतिपत्पंचमी चैव उपोष्या
पूर्वसंयुता ॥ चैत्र शुक्ल पंचम्यां नागान्पूज्य क्षीरादि नैवेद्यं देयम् ॥ देवी पुराणेऽपि ॥ पं-
चम्यां पूजयेन्नागाननंताद्यान्महोरगान् ॥ क्षीरं सर्पिस्तु नैवेद्यं देयं सर्वसुखावह-
म् ॥ नागस्वरूपं मात्स्ये ॥ नागाश्चैव तु कर्तव्याः खड्गखेटकधारिणः ॥ अथ सर्पाकृति-
स्तेषां नाभेरूर्ध्वं तु पौरुषी ॥ फणाश्च मूर्ध्नि कर्तव्या द्विजिह्वा बहवोऽसमाः ॥ विषमेति
मावत् ॥ श्रावण शुक्ल पंचमी नागपंचमी ॥ नागपंचमी सा परविद्धा ॥ चमत्कारचिंतामणौ ॥

पंचमी नाग पूजायां कार्य्या षष्ठी समन्विता ॥ इति ॥ तस्यामपि नाग पूजा भाद्रशु-
क्ल पंचम्यां गोमयेन द्वारस्यो भयोः पार्श्वयोः ॥ नागान् विलिख्य ॥ दधि दूर्वांकुर पु-
ष्पैः संपूज्य नाग प्रीतये ब्राह्मणान्भोजयेत् ॥ तस्य सर्प्प भयं न भवति ॥ भविष्ये ॥ वि-
शेष फल मन्वेषणीयम् ॥ भाद्र शुक्ल पंचमी ऋषि पंचमी ॥ सा च मध्यान्ह व्यापिनी ॥ हा-
रीतः ॥ पूजा व्रतेषु सर्वेषु मध्यान्ह व्यापिनी तिथिः ॥ वेदीं तस्य च कुर्वीत गोमये नो-
पलेपिताम् ॥ रंगा वलि समा युक्तां नाना पुष्प समन्विताम् ॥ तत्र सप्त ऋषीन् दिव्या-
भक्ति युतः प्रपूजयेत् ॥ अर्घं च दद्यात् ॥ तत्र मंत्रः कश्यपोऽत्रिर्भरद्वाजो विश्वामि-
त्रोऽथ गौतमः ॥ यम दग्नि र्वशिष्ठश्च सप्तैते ऋषयः स्मृताः ॥ सप्त ऋषीन्पूज्याकृष्ट
भूम्युत्पन्न शाका हारेणो पोष्य सप्त वर्षाणि व्रत माचरेत् ॥ सर्व पाप विनिर्मुक्तः ॥
सर्वान्कामान वाप्नोति ॥ अथाश्विन शुक्ल पंचमी ॥ तत्र नागं कुश मय मिंद्राणी सहितं घृ-
तादिभिः स्नापयित्वा संपूज्य नैवेद्यं दद्यात् ॥ तथा च भविष्ये ॥ तथा चाश्वयुजे मासि-

पञ्चम्यां कुरुनंदन कृत्वा कुशमयं नागमिंद्राण्या सह पूजयेत्॥ घृतोदकेन पयसा स्ना-
पयित्वा विशांपते ॥ गोधूमैः पयसा सिक्तैः भक्ष्यैश्च विविधैस्तथा ॥ पूजयेत्कुरुशार्दूल तत-
स्यां शेषाख्यो नृप ॥ नागाः प्रीता भवंतीह शांतिमाप्नोति वै प्रभो ॥ इति ॥ माघशुक्लपंचमी
श्रीपंचमीत्युच्यते ॥ तत्र च मदनपूजा ॥ वसंतोत्सवश्च ॥ तदेव पुराणसमुच्चये ॥ माघमासे नृप
श्रेष्ठ शुक्लायां पंचमीतिथौ ॥ रतिकामौ तु संपूज्य कर्त्तव्यस्सुमहोत्सवः ॥ दानानि च प्र-
देयानि तेन तुष्यति माधवः ॥ इति वसंतपञ्चमी ॥ पक्षद्वयगतासु सर्वासु पंचमीषु ति-
थिपतित्वेन नागा एव पूज्याः ॥ इति पंचमीनिर्णयः ॥ अथ षष्ठी निर्णीयते ॥ सा तु स्कंदव्र-
तादन्यत्र परैव युग्मवाक्यात् ॥ अतः सप्तमीविद्धैव ॥ तथा च बृहस्पतिः ॥ नागविद्धां
तु यां षष्ठीमुपोष्यंतीह मानवाः ॥ ऋद्धिश्श्रेयस्स संतानं तेषां नश्यंति पूर्वजैः ॥ अतः
नागविद्धा न कर्त्तव्या षष्ठी चैव कदाचन ॥ अत्र षण्मुहूर्तात्मको वेधः ॥ नागो द्वादश
नाडीभिर्दूषयत्युत्तरान्तिथिम् ॥ तेन षण्मुहूर्त्तन्यूनपंचमीयोगे पूर्वैव ॥ आषाढशुक्ल-

षष्ठी सा पूर्वा ॥ स्कांदे ॥ कृष्णाष्टमी स्कंद षष्ठी शिव रात्रिश्चतुर्दशी ॥ एताः पूर्वयुताः कार्यास्तिथ्यन्ते पारणं भवेदिति ॥ अत्र पंचम्यामुपोष्य कुमारः पूज्यः ॥ तथा वाराहे ॥ आषाढे शुक्ल षष्ठी तु तिथिः कौमारिका स्मृता ॥ कुमारमर्चयेत्तत्रोपोष्य पूर्वं तु पंचमीम् ॥ इयमेव सूर्य्य षष्ठी ॥ अत्र स्नात्वा भास्करं पूज्य गव्यं प्राश्य महाफलं प्राप्यते ॥ शुक्ले भाद्रपदे षष्ठ्यां स्नानं भास्करपूजनम् ॥ प्राशनं पंचगव्यस्य अश्वमेध फलप्रद मिति ॥ भाद्रपद षष्ठी कृष्णा कपिला ॥ भौमे रोहिणी व्यतीपात योग युक्ता ॥ तत्र भास्करं पूजयित्वा विप्राय कपिलां दद्यात् ॥ पुराणसमुच्चये ॥ भाद्रे मासि सिते पक्षे भानौ चैव करे स्थिते ॥ पातेषु चैव रोहिण्यां सा षष्ठी कपिला भवेदिति ॥ भाद्र कृष्ण षष्ठी चांद्रमासेन त्वर्थः ॥ भाद्र कृष्ण षष्ठी चंद्र षष्ठी ॥ सा चंद्रोदय व्यापिनी ग्राह्या ॥ उभयत्र चंद्रोदय व्यापित्वे पूर्वविद्धैव ॥ यदुक्तं ॥ नभस्याद्र पदे मासि षष्ठ्यां पक्षे सिते तरे ॥ चंद्रषष्ठी व्रतं कुर्य्यात् पूर्ववेधः प्रशस्यते ॥ चंद्रोदये यदा षष्ठी पूर्वेऽह्नि चापरेऽहनि ॥ चंद्रषष्ठ्यां सिते पक्षे

सेवो पोष्या प्रयत्नत इति ॥ सैवकृत षष्ठी ॥ सा सप्तमी युतेति दिवोदासः ॥ अथाश्विन शु-
क्ल पंचम्यां देव्याः स्नापितायाः ॥ सप्तम्यां पूजार्थं षष्ठ्यां। ज्येष्ठा नक्षत्र युतायामसं-
भवे केवलायां बृसनि मंत्रेण कार्यम् ॥ तत्रायं मंत्रः ॥ ॐ रावणस्य वधार्थाय रामस्या
नुग्रहाय च ॥ अकाले ब्रह्मणा बोधो देव्यास्त्वयि ततः पुरा ॥ श्रीशैल शिखरे जातः
श्रीफल श्रीनिकेतन ॥ तेन व्योम सुआगच्छ पूज्यो दुर्गा स्वरूपतः ॥ इति ॥ अथ कार्ति-
क शुक्ल षष्ठी ॥ तत्र भौम युतायां वन्हिं संपूज्य वन्हि महोत्सवं कार्य्यम् ॥ तदेव मात्स्ये
वृश्चिकार्के शुक्लषष्ठी भौम वारेण संयुता ॥ महाषष्ठी तु सा प्रोक्ता सर्व पाप हरा तिथिः
तस्यां स्वपिति वै वन्हिः पूर्वन्तो पोष्य वै दिने ॥ षष्ठ्यां वन्हिं समभ्यर्च्य कुर्य्याद्वन्हि
महोत्सवम् ॥ इति· वृश्चिकार्के कार्तिके मासीति कालादर्शे ॥ अथ मार्गशिर शुक्लष-
ष्ठी ॥ तस्यां तारकं स्कंदो हतवान् ॥ अतः स्कंदं संपूज्य दानादि फलमक्षयं भवति ॥
भविष्ये ऽपि ॥ येयं मार्ग शिरे मासि षष्ठी भारत सत्तम ॥ पुण्या पापहरा धन्या शिवा-

श्रि शांता गुह प्रिया ॥ स्नान दानादि कं कर्म्म तस्या मक्षय मस्नुते ॥ इति षष्ठीनिर्णयः ॥ अथ
४८९ सप्तमीनिर्णीयते ॥ सप्तमी षष्ठी युते वो पवासादिषु ग्राह्या ॥ युग्म वाक्यात् ॥ भविष्ये ॥ षष्ठी
समेता कर्त्तव्या सप्तमी नाष्टमी युता ॥ पतंगो पासनार्थेह षष्ठ्या माकुरुषोषणम् ॥ पतं
गः सूर्य्यः ॥ पुराणांतरेऽपि ॥ षष्ठ्याश्चैक कलायत्र तत्र संनिहितो रविः ॥ तत्र क्रतु शतं पु
ण्य मष्टम्यां पारणेन च ॥ षष्टी च सप्तमी चैव रात्रि शेषे यदाष्टमी ॥ त्रिस्पृशा नाम
सा ज्ञेया त्रिस्पृ षैका स्मृता यथा ॥ पूर्व विद्धैव कर्तव्या सप्तमी व्रतिभिर्न्नरै रि-
ति ॥ अतः सप्तमी षष्ठी युते वेति सिद्धांतः ॥ अथ चैत्र शुक्ल सप्तमी सूर्यपूजा ॥ दमनकादि
भिः कार्य्या ॥ देवीपुराणे ॥ भास्करस्य तु सप्तम्यां पूजां दमन कादिभिः ॥ कृत्वा प्राप्नो-
ति भोगा री न्विग तारि र्म्महा तयाः ॥ वैशाख शुक्ल सप्तम्यां ॥ गंगा पूजोक्ता ॥ तथाचब्राह्मे वैशा-
खे शुक्ल सप्तम्यां जन्हुना जान्हवी स्वयम् ॥ क्रोधा त्पीता पुन स्त्यक्ता कर्ण रंध्रात्तु दक्षिणात्
॥ तां तत्र पूजये देवीं गंगां गगन मेखलामिति ॥ इयं पूर्वान्ह व्यापिनी ॥ अत्रैव निंबसप्तमी

व्रतं कुर्य्यात् ॥ भविष्येऽपि ॥ तृतीयां सप्तमीं वीर तच्छृणुष्वा गतो मम ॥ निंब पत्रैः स्तुता
यातु पापघ्नी शोक नाशिनी ॥ अथाषाढ शुक्लसप्तमी ॥ तत्र सूर्य्यं वर्तुलं मंडले रक्त गंध पु-
ष्पादिभिः पूजयित्वा नैवेद्यादीन र्पयेत् ॥ तदुक्तं ब्रह्मांड पुराणे ॥ आषाढ शुक्ल सप्तम्यां विवस्वान्भा-
नु भास्करः ॥ जातः पूर्वा सुत स्मात्तां तत्रोपोष्य यजेत्सदा ॥ रथ चक्रा कृतौ रम्ये मंडले तत्र का-
मदम् ॥ भक्ष्यै र्भोज्यैस्तथा पेयैः पुष्पैर्धूप विलेपनैरिति ॥ अथाश्विन शुक्लसप्तमी ॥ देवी पूजा-
यां पर युता ग्राह्या ॥ तथाच भविष्ये ॥ युगाद्या वर्ष वृद्धिश्च सप्तमी पार्वती प्रिया ॥ रवेरुदय मी-
क्षन्ते न तासु तिथि युक्तता ॥ वर्ष वृद्धिर्जन्म तिथिः ॥ अत्रैव मूल युक्तायां केवलायां वा पं
चम्यां स्नापितां देवीं विल्वादिभिः पूजयेत् ॥ अत्रैव पुस्तक स्थापन मुक्तम् ॥ मूल नक्षत्रे
सुराधीश पूजनीया सरस्वती ॥ पूजयेत्प्रत्यहं देवि यावद्वैष्णव मृक्षकम् ॥ नाध्यापयेन्न च
लिखेन्नाधीयीत कदाचन ॥ पुस्तके स्थापिते देवि विद्या कामो द्विजोत्तम ॥ इति ॥ मार्गशु-
क्ल सप्तमी मित्र सप्तमी ॥ तत्र पूर्व दिने उपोष्य कृत वपनः स्नात्वा ॥ रविं संपूज्य ॥ पश्चाद्ब्राह्म-

णान्भोजयेत् ॥ स्वयंसप्तम्यामष्टम्यां च मधुस्तु न मिष्टान्नं भुंजीत ॥ अथ माघशुक्ला रथसप्तमी
५ ॥ अस्यां स्नान फलं महदिति विष्णूक्तेः। सैवाचला सप्तमी ॥ जयंती च ॥ तदुक्तं भविष्ये ॥ माघ
स्य शुक्ल पक्षे तु सप्तमी या त्रिलोचन ॥ जयंती नाम सा प्रोक्ता सर्व पाप हरा तिथिरिति ॥
स्मृति चंद्रिकायामपि ॥ सूर्य्य ग्रहण तुल्या च शुक्ला माघस्य सप्तमी ॥ अरुणोदय वेलायां
तत्र स्नानं महा फलम् ॥ अस्यामेव सूर्य्य पूजा ॥ माघे मासि सिते पक्षे सप्तमी कोटि भास्करा
कुर्य्यात्स्नानार्घ दानाभ्यामायुरारोग्य संपदः ॥ इति अर्घ दान मंत्रश्च ॥ यद्यज्जन्म कृतं
पापं मया जन्मसु सप्तसु ॥ तन्मे रोगं च शोकं च भास्करी हंतु सप्तमी ॥ इयमेव पुन्नामन
क्षत्रेण रवि वारेण च युक्ता महती ॥ तत्र सूर्य्यमर्च्चयेत् ॥ वराह गर्गः ॥ रविवारेण युक्तायां
सप्तम्यामुत्तरायणे ॥ पुन्नामध्येय नक्षत्रे पूजयेच्च दिवाकरम् ॥ पुंनाम नक्षत्राणि गर्गेणोक्तानि
॥ पुन्नाम श्रवणाषाढौ तिष्यो हस्त पुनर्वसू ॥ मूलं प्रोष्ठपदं चानुराधा मृगशिराश्विनी ॥
अत्र गंगा स्नाने फलाधिक्यम् ॥ तथा च मात्स्ये ॥ अरुणोदय वेलायां शुक्लां माघस्य सप्तमीम् ॥ 

गंगायां यदि लभ्येत सूर्यपर्वशताधिका ॥ अन्यत्रापि ॥ सोमवारे त्वमावास्या भानुवारे च सप्तमी अंगारक दिने प्राप्ता चतुर्थी या चतुर्दशी ॥ षष्टिवर्षसहस्राणि तत्कर्त्ता लभते फलम् ॥ षष्टी च सप्तमी योगे वार श्चैरं शुमालिनः ॥ योगोऽयं पद्मको नाम सहस्रार्कग्रहे स्तन ॥ इति ॥ इति सप्तमी निर्णयः ॥ अथाष्टमी निर्णीयते ॥ साकृस्ना पूर्वा शुक्ला परा शुक्लपक्षे ऽष्टमी चैव शुक्लपक्षे चतुर्दशी ॥ पूर्वविद्धा न कर्त्तव्या कर्त्तव्या परसंयुतेति नैयमत् ॥ कृष्णपक्षे ऽष्टमी चैव कृष्णपक्षे चतुर्दशी ॥ पूर्वविद्धैव कर्त्तव्या परविद्धा न कुत्रचित् ॥ इति भविष्ये ॥ उक्तव्रतादन्येषु सप्तमी युते वेत्यविरोधः ॥ ब्रह्मपुराणे ॥ अष्टम्या नवमी युक्ता नवम्या चाष्टमी युता ॥ अर्द्धनारीश्वरप्राया उमामाहेश्वरी तिथिः ॥ अष्टम्यां पाप्यते रुद्रान वम्यां शक्तिरुच्यते ॥ द्वयोर्योगे तु संप्राप्ते पूजायां तु महाफलम् ॥ अथ चैत्रशुक्लाष्टमी अशोकाष्टमी ॥ तस्यां पुनर्वसु युतायाम शोकाष्टौ कलिकाः प्राश्याः ॥ तदुक्तं लिंगपुराणे ॥ अशोककलिकाश्चाष्टौ ये पिबंति पुनर्वसौ ॥ चैत्रे मासि सिताष्ट-

स्यां नते शोक मवाप्नुयुरिति ॥ प्राशनमंत्रश्च ॥ त्वामशोकनराभीष्ट मधुमाससमुद्भव ॥
पिबामि शोक संतप्तो मामशोकं सदा कुरु ॥ अत्र देव्या महापूजापि कार्या ॥ तदुक्तं मार्क-
ण्डेये ॥ शरत्काले महापूजा क्रियते सा च वार्षिकी ॥ वार्षिकीत्यनेन संवत्सरस्यादौ चैत्र
शुक्लप्रति पत्क्रमा दष्टमी पर्यंतं क्रियमाणा पूजा विधीयते ॥ अतश्च शरद्वसंतयोरु
भयत्र दुर्गोत्सवः कार्यः ॥ अथ वैशाख शुक्लाष्टमी ॥ तस्यां सुपोषितः आम्र फलरसेन स्ना
त्वा अपराख्यां देवीं मांसी वालक वारिभिः स्नापयेत् ॥ पुनः शर्करा क्षीर नैवेद्यं दत्वा ब्रा
ह्मणान्कुमारीं भोजयित्वा पारणं कुर्यात् ॥ देवीपुराणे ॥ सहकार फलैः स्नानं वै शाखे
ह्यष्टमी दिने ॥ आत्मनो देवतां स्नाप्य मांसी वालक वारिभिः ॥ लेपनं फलकर्पूरं धूपं
चैव प्रदापयेत् ॥ शर्करा क्षीर नैवेद्यं कन्या विप्र सुभोजनम् ॥ आत्मनः पारणं तद्वद्द-
क्षिणां शक्तितो हरेत् ॥ सर्वतीर्थाभिषेकं फल नेनाप्नोति भार्गव ॥ इति अथ ज्येष्ठ
शुक्लाष्टमी ॥ तत्र शुक्लां देवीं पूजयेत् ॥ तदुक्तं ब्रह्मांडे ॥ शुक्लाष्टम्यां पुरा जाता शुक्ला दे-

वी महाशना ॥ वधाय दानवेंद्राणां शुक्लपक्षे ततो यजे दिति ॥ अथ पाढशुक्लाष्टमी ॥ नत्रोपोषितः॥ हरिद्रा तोयेन स्नात्वा महिषघ्नी नाम्नीं देवीं तेनैव स्नापयित्वा ॥ पूजा कार्य्या ॥ यदुक्तं देवी पुराणे ॥ अष्टम्यां च यदाषाढे निशा तोयेन मानवाः ॥ स्वयं स्नात्वा च कर्पूरैश्चंदनैस्तां विलेपयेत् ॥ धूपचंदन कर्पूरैर्वालकैः शित सिल्हकैः ॥ भक्ष्यांश्च शर्करा पूर्णान् पानकानि शुभानि च ॥ दापयेत्कन्यका विप्र भोजनं चात्मनस्तथा ॥ शक्तितो दक्षिणां दद्यात् महिषघ्नी च कीर्तयेत् ॥ दीपमाला कृतेनैव सर्वान्कामान्प्रयच्छति ॥ अथ भाद्र कृष्णाष्टमी ॥ साद्विधा अष्टमी जयंती च ॥ सा चार्द्ध रात्र व्यापिनी ॥ विष्णुधर्मोत्तरे ॥ रोहिणी सहिता कृष्णा मासि भाद्रपदेऽष्टमी ॥ सप्तम्या मर्द्धरात्राधः कलयापि यदा भवेत् ॥ अत्र जातो जगन्नाथः कौस्तुभी हरिरीश्वरः ॥ तमेवोपवसेत्कालं तत्र कुर्य्याच्च पारणाम् ॥ अर्द्ध रात्रे तु योगो ऽयं तारापत्युदये सति ॥ वशिष्टोऽपि ॥ अष्टमी रोहिणी युक्ता निश्यर्द्धे दृश्यते यदि ॥ मुख्य कालः स विज्ञेयस्तत्र जातो हरि-

स्वयमिति॥एवंचस्पेंधुःपरे द्युरेव वा निशीथ व्याप्तौ कर्म्म काल व्याप्ता व्याप्तौ सैव ॥ दिन द्वये व्या
प्ताव्याप्तौतु परैव ॥ संकल्प काले सत्वाधिक्याच्च ॥ ब्रह्मवैवर्तेऽपि ॥ वर्ज्जनीया प्रयत्नेन सप्त
मी संहिता ऽष्टमीति ॥ एवं रोहिण्यापि ॥ यदि पूर्वेद्युरेव निशीथ योग स्तदा सैवो पोष्या ॥का
र्य्या विद्धापि सप्तम्यां रोहिण्या सहिता ऽष्टमीति पाद्मात् ॥ इतिमयूखादिमार्गः ॥वयंत्वालो
चयामः ॥ सप्तमी विद्धा सर्वथैव वर्ज्जन प्रयोजिका ॥ वर्ज्जनीया प्रयत्नेनेत्युक्त वाक्या
त् कार्य्या विद्धापि सप्तम्येति ॥ पाद्मंतु ॥ यत्र सप्तम्या मेव संपूर्ण रोहिणी योग स्तद्वि
षयं यत्र तु अष्टम्यां मुहूर्तम पि रोहिणी तदा सैव ग्राह्या ॥ तदुक्तं ब्रह्मवैवर्ते ॥ वर्ज्जनीया
प्रयत्नेन सप्तमी संहिता ऽष्टमी ॥ स ऋक्षापि न कर्तव्या सप्तमी सहिताष्टमीति ॥
॥ स्कांदे ॥ सप्तमी सहिता ऽष्टम्यां भूत्वा ऋक्षं द्विजो त्तमः॥ प्राजापत्यं द्वितीये ऽन्हि मु
हूर्तार्द्धं भवेद्यदि ॥ तदाष्टमी कालं ज्ञेयं प्रोक्तं व्यासादिभिः पुरा ॥ पाद्मेऽपि ॥ मुहूर्तेनापि
संयुक्ता संपूर्णा साष्टमी भवेत् ॥ किं पुनर्न्नवमी युक्ता कुल कोटि विमुक्तिदा ॥ ननु स-

र्म कालस्य प्राबल्यात्पूर्वेद्युरेव ॥ निशीथ व्याप्तौ सैव ग्राह्यामेवम् ॥ तस्य प्राति परि-
क प्राप्तेराबाधात् ॥ तथाहि ॥ विष्णुरहस्ये प्राजापत्यर्क्ष संयुक्ता कृष्णेनभसिचाष्टमी ॥ मु-
हूर्त्तमपिलभ्येत सैवोपोष्या महाफला ॥ वन्हिपुराणे ॥ कृष्णाष्टम्यां भवेद्यत्र कलैका रो-
हिणी स्मृता ॥ जयंती नाम सा प्रोक्ता उपोष्या सा प्रयत्नतः ॥ स्कांदे ॥ उदये चाष्टमी किंचि-
न्नवमी सकला यदि ॥ भवेत्तु बुध संयुक्ता प्राजापत्यर्क्ष संयुता ॥ अपि वर्ष शतेनापि
लभ्यते यदि वा न वेति ॥ ननु उदये चाष्टमी किंचिदिति स्कांद वाक्यादुदय शब्देन चं-
द्रोदयो ग्राह्यः ॥ तारापत्युदये सतीति मूल कल्पना लाघवादिति चेन्न ॥ उदय श-
ब्देन सूर्य्यातिरिक्तोदय परतायाः काप्यदृष्टत्वात् ॥ किं चैवं निर्णीये चाष्टमी किंचिदिति
वाक्यात् ॥ अपिच ॥ उदय शब्दस्य चंद्रोदय परत्वे तदानी मष्टम्याः ॥ कर्म्मकाल व्याप्ति
त्वेन निस्संदिग्धतया तस्मिन्नेव वाक्येन वमी सकला य दीत्युक्तेर्वैयर्थ्यापतेः ॥ नच रो-
हिणी योगस्य बुध योगवत्प्राशस्त्य मात्र परता ॥ अन्यथा समानवाक्यो पात्तत्वात् ॥ 

कदाचिद्रोहिणीयोगाभावेन ॥ बुधयोगे नैवोत्तरदे ग्रहणापत्तेरिति वाच्यम् ॥ प्राजापत्यं द्वितीयेन्हि मुहूर्तार्द्धं भवेद्यदीति ॥ स्कांदे ॥ वाक्येन ग्रहणप्रयोजकत्वाच्चगमात् ॥ सप्तम्यापि न कर्तव्या रोहिणी सहिताष्टमीति ब्रह्मवैवर्त्तवाक्येन सप्तमीस्पर्शी त्युक्ता ॥ तत्सुक्ष्ययोगस्य निर्णीयकत्वावगमाच्च ॥ भवेत्तु बुधसंयुक्तेति स्कांदवाक्येन तु संभावार्थ लिङ् लकारेण तु शब्देन च शास्त्रपरतया स्फुटं प्रतीतेरिति दिक् ॥ इदं च व्रतं नित्यम् ॥ जन्माष्टमी दिने प्राप्ते येन भुक्तं द्विजोत्तम ॥ त्रैलोक्य संभवं पापं तेन भुक्तं न संशय इति स्कांदे तदकरणे प्रत्यवायश्रवणात् ॥ भविष्ये ॥ श्रावणे बहुले पक्षे कृष्णजन्माष्टमी व्रतम् न करोति महाप्राज्ञ व्यालो भवति कानने ॥ व्रत शब्देनापि पूजा गृह्यते ॥ तत्रैव ॥ अर्द्धरात्रे तु रोहिण्यां यदा कृष्णाष्टमी भवेत् ॥ तस्यामभ्यर्च्चनं शौरे र्हन्ति पापं त्रिजन्मजम् ॥ ब्रह्मवैवर्त्तेऽपि ॥ अष्टम्यामथ रोहिण्यां न कुर्य्यात्पारणं क्वचित् ॥ हन्यात्पुरा कृतं कर्म्म उपवासार्ज्जितं फलम् ॥ तस्मात्प्रयत्नतः कुर्य्यात्तिथि भांते च पारणम् ॥ उभयान्तोमु-

सर्वेष्वेवोपवासेषु दिवा पारणमिष्यते।
भवि- स्य:कल्प: ॥ एकतरस्तु गौणः॥ ब्रह्मवैवर्त्ते ॥ सर्वेष्वेवोपवासेषु दिवा पारणमिष्यते।
४७१ इति अथ भाद्र शुक्लाष्टमी ॥ दूर्वाष्टमी सा शुक्लापि पूर्वविद्धैव ॥ भविष्येऽपि ॥ शुक्लाष्टमी-
तिथिर्यातु मासि भाद्रपदे भवेत् ॥ दूर्वाष्टमीतु साज्ञेया नोत्तरासा विधीयते ॥ इदं च प्र-
तं भाद्र शुक्ले अगस्त्योदय संभावनायां भाद्र कृष्णे एव कार्यम् ॥ तथास्कांदे ॥ शुक्ले भाद्र-
पदे मासि दूर्वासञ्ज्ञा तथाष्टमी ॥ सिंहार्के सा च कर्त्तव्या न कन्यार्के कदाचन ॥ सिंहस्थे-
ऽगस्त्योत्तमा सूर्य्येऽनुदिते मुनिसत्तमे ॥ अगस्त्याभ्युदिते पूजायां दोषश्च तत्रैवोक्तः ॥ अग-
स्त्य उदिते तात पूजयेद् यस्तोऽङ्गनाम् ॥ वैधव्यं पुत्रशोकं च दश जन्मनि पंच च ॥ दूर्वाष्टमी
सदा त्याज्या ज्येष्ठा मूल र्क्षसंयुता ॥ परविद्धा यथा कृत्वा मुनि ख्याता तपोऽब्रवीत् ॥
ऐन्द्रर्क्षे पूजिता दूर्वा हंत्य पत्यानि नान्यथा ॥ भर्तुरायुर्हरा मूले तस्मात्तांपरिवर्ज्जयेत् ॥
अत्र प्रतिवर्षम पूजने दूर्वाया वैधव्यादि दोषा विहिताः ॥ यदा पुनर्ज्ज्येष्ठादि विरहेन-
संभवति ॥ तदा दूर्वामभ्यर्च्यैकभक्तं कार्यम् ॥ तदुक्तम् ॥ मुहूर्त्ते रौहिणोऽष्टम्यां पूर्वा वा- ४७२

यद्दिवा परा ॥ दूर्वाष्टमी तु सा कार्य्या ज्येष्ठा मूलं तु वर्ज्जयेत् ॥ रौहिणो नवमो मुहूर्त्तः ॥ पर

विद्धानिषेधे ऽपि यदि वा परेति पर विद्धा विधानं पूर्वस्यां ज्येष्ठा मूल युक्तायां परस्यां कर्म्म

काले व्यापिन्यां परापि कार्य्येति ज्ञापनार्थम् ॥ अतश्चास्यां पूर्व विद्धायां ज्येष्ठा मूल रहि-

ता या मगस्त्यानुदये सिंहस्थे सवितरि दूर्वा मभ्यर्च्य शमि पक्वमन्नं भोक्तव्य मेवं कृते

॥ नारी सप्त जन्मनि पति पुत्र विरहं नाप्नोतीति दिक् ॥ अथाश्विनः कृष्णाष्टमी ॥ तत्र दोष

चतुष्टय रहितायां महा लक्ष्मी व्रतं कार्य्यम् ॥ तत्र चन्द्रोदय काल व्यापिन्यामेव ॥ चं-

द्रोदये स्व पूजार्घादि विधानात् ॥ सप्तमी पुष्य संयुक्ता कर्त्तव्या चाश्विनाष्टमी ॥ दूर्गो-

त्सवे ऽसिते पक्षे वहुले श्रीव्रते शुभा ॥ तत्र सप्तमी संयुक्तेति विशेषणं वहुलाष्ट स्यास-

व पुष्य संभवात् ॥ तथा ॥ अर्द्धरात्र मति क्रम्य वर्त्तते यो ऽपरा तिथिः ॥ तदा तस्यां तिथौ

कार्य्यं महा लक्ष्मी व्रतं शुभम् ॥ पुराणसमुच्चये ऽपि ॥ पूजनीया प्रयत्नेन अष्टमी शारदी प्रि-

यः ॥ दोषैश्चतुर्भिस्त्वन्यक्ता सर्व संपत्करी तिथिः ॥ दोषाश्च तन्त्रे चोक्ताः ॥ पुत्र सौभाग्य रा-

ज्यायुर्न्नाशिनी सा प्रकीर्त्तिता ॥ तस्मात्सर्वं प्रयत्नेन त्याज्या कन्या गते रवौ ॥ कन्या
स्थरविनिषेधः ॥ प्रारंभ समये एव बोधव्यः ॥ तथाऽत्रि दिने चाष्टमे चैव अष्टम्यां नोप-
वासयेत् ॥ पुत्रघ्नी नवमी विद्धा स्वघ्नी हस्तार्द्धगे रवौ ॥ धर्म्मघ्नी त्रिदिने प्रोक्ता त्याज्या चे
त्रावसे सति ॥ स्वघ्नी धनहेति यावत् ॥ त्रिस्टगवमो पूर्वोक्ता वेव ॥ एतद्दोषवर्ज्जनमु
पक्रमोद्यापनयोरेव प्रायेण ज्ञातव्यं ॥ अन्यथा षोडशवर्ष साध्य व्रतस्यांतरा दो-
ष संभवे ऽकरणं प्रसज्जेत ॥ अन्यदपि सति संभवे दोष वर्ज्जनम् ॥ नतु नियमेन तथा
चोक्तं शिवाऽर्चनं भाद्रपदे सिताष्टमी प्रारब्धकन्यामगतेच सूर्ये ॥ समापयेत्तत्ति-
थौ च यावत सूर्य्यश्च पूर्वार्द्धगतो युवत्याः ॥ नवमी वेधनिषेधोऽपि परदिने चंद्रोदया
दर्वाक् ज्ञेया ॥ चंद्रोदया र्द्धगामिनी त्रिमुहूर्त्ताष्टमी चेत् ॥ त्रिमुहूर्त्त व्यापित्वेतूर्द्धे-
व नवमी विद्धापि कार्य्या ॥ तदुक्तम् ॥ पूर्वा वा परा विद्धा वा ग्राह्या चंद्रोदये सति ॥ त्रिमुहू-
र्त्तापि सा पूज्या परतश्चोर्द्ध गामिनीति ॥ चंद्रोदया र्द्धगामिनी त्रिमुहूर्त्ताष्टमी चेत्तदा-

पए कार्य्या न चेत्पूर्वे चेति ॥ इति महालक्ष्मीनिर्णयः ॥ अथाश्विन शुक्लाष्टमीनिर्णयः ॥ साच नव-
मी युतैव दुर्गोपवासादिषु ग्राह्या ॥ सप्तमी विद्धा तु न कार्य्या दोषश्रवणात् ॥ तदुक्तं ॥ पुत्रा-
न्हंति पशून्हंति हंति राष्ट्रं सराजकम् ॥ हंति जातान जातांश्च सप्तमी सहिताष्टमी
॥ तस्मात्सर्व प्रयत्नेन सप्तमी सल्य संयुता ॥ वर्ज्जनीयाष्टमी चैव भुवो राज्यमभीप्सुभिः
अन्यत्रापि ॥ मूलेनापि हि संयुक्ता सदा त्याज्याष्टमी बुधैः ॥ इत्यादि वाक्यैर्नवमी विद्धा-
ष्टमी कार्य्येति सिद्धम् ॥ यत्तु अहं भद्रा च भद्राहं नावयोरंतरं क्वचित् ॥ सर्वसिद्धिं प्रदा-
स्यामि भद्रया मर्चिताप्यहम् ॥ भद्राया भद्रकाल्याश्च मध्ये स्याद्दर्शनक्रिया ॥ तस्माद्दै
सप्तमी विद्धा कार्य्या दुर्गाष्टमी बुधैः ॥ इति ॥ विहित्यक्त्वा महाष्टम्यां मम पूजां करोति यः
तस्या पूजा फलं न स्यात्तेनाहमवमानिता ॥ इत्यादि सप्तमी वेधविधायिक वाक्यं ॥ तत्तु
यत्र तिथिह्रासात् द्वितीय दिने अष्टमी विरहस्तत्र सावकाशं ॥ तदुक्तं स्मृतिसंग्रहे ॥ यदासू-
र्योदयेन स्यान्नवमी चापरेहनि ॥ तदाष्टमीं प्रकुर्वीत सप्तम्या सहितां नृपेति ॥ दुर्गोत्सवप्रकरणे

ऽपि ॥ उदयास्तिथयो यत्र क्षयं याति नराधिप ॥ पूर्वाह्णे ...

ऽपि ॥ उदया स्तिथयो यत्र क्षयं याति नराधिप ॥ तत्र दुर्गोत्सवं कुर्य्यान्न कु-
र्यादिति ॥ अन्यदपि ॥ सप्तम्यामुदिते सूर्ये परतश्चाष्टमी भवेत् ॥ तत्र दुर्गोत्सवं कुर्य्या-
र्य्यादपोहनि ॥ तथा ॥ यदाष्टमी तु संप्राप्य ग्रस्तं याति दिवाकरः ॥ तत्र दुर्गोत्सवं कुर्य्या-
न्न कुर्य्यादपरे हनीति ॥ इत्यादि वाक्यानि ॥ मुनी नाम निर्देशाद्दांतराणि कानीति केचित् ॥
यदि तु प्रमाणानि तर्हि कृष्णपक्षाष्टमी विहित पूजा विषयाणि ॥ कृष्णपक्षेऽष्टमी चैवे-
ति पूर्ववाक्य संबंधेनैवेति ॥ तस्यां देवी पूजा ॥ देवीपुराणे ॥ कन्यायां शुक्लपक्षे तु पूजयि-
त्वाष्टमेऽपि च ॥ नवम्यां बोधये देवीं गीतवादित्रनिस्वनैरिति ॥ अत्र देवी पूजा दिवा-
रात्रावपि ॥ भविष्ये ॥ तत्राष्टम्यां भद्रकाली दक्षयज्ञविनाशिनी ॥ प्रादुर्भूता महाघोरा
योगिनी कोटिभिस्सह ॥ अतोऽर्थं पूजनीया सा तस्मिन्नहनि मानवैः ॥ तथा ॥ निशा-
यां पूजिता देवी वैष्णवी पापनाशिनी ॥ तस्मात्सर्वप्रयत्नेनाष्टम्यां निशि पूजयेत् ॥ अ-
थात्रैव वह्निद्विशेषः ॥ आश्विनस्य सिते पक्षे प्रारब्धे नवरात्रके ॥ प्राव सूत्यो स्त सुत्पन्ने त्रि-

याकार्य्या कथं बुधैः ॥ इति भस्त्रे ॥ अस्योत्तरं ॥ विश्वरूपनिबंधे ॥ यत्र सूते समुत्पन्ने तत्रोत्सवं
दा भवेत् ॥ देवी पूजा प्रकर्तव्या पशुयज्ञ विधानतः ॥ देवी पूजारंभे अंतरा सूतके यातेऽपि
पूर्वादिन संपन्नं यावद्विधेयं अप्रारब्धे तु परह्रेव ॥ अग्नि होत्रादिवत्कारयितव्यं ॥ इति अ
थ कार्तिक शुक्लाष्टमी सा गोपाष्टमी ॥ तत्र गो पूजा कार्य्या ॥ कूर्म्म पुराणे ॥ शुक्लाष्टमी कार्तिके तु
स्मृता गोपाष्टमी बुधैः ॥ तत्र कुर्य्याद्गवां पूजां गोग्रासं गो प्रदक्षिणां ॥ गवानुगमनं कार्य्यं
सर्वान्कामान भीप्सतः ॥ इति अथ पौष शुक्लाष्टमी बुध युक्ता महाभद्रा ॥ तत्र महेश्वर पूजादिकं का
र्य्यं मुक्तं भविष्ये ॥ पौषे मासि यदा देवि शुक्लाष्टम्यां बुधो भवेत् ॥ तदा तु सा महापुण्या महाभद्रे
ति कीर्तिता ॥ तस्यां स्नानं जपो होम स्तर्प्पणं विप्र भोजनम् ॥ मत्प्रीतये महादेवि पूज्यो
ऽयं विधि वद्बुधैरिति ॥ माघ शुक्लाष्टमी भीष्माष्टमी ॥ तत्र भीष्म तर्प्पणं श्राद्धं च कार्य्यम् ॥ भी
ष्म तर्प्पणे तु भीष्मस्य देवावतारत्वा द्ब्राह्मणस्याप्यधिकारः ॥ तथा च पाद्मे ॥ माघे मासि
सिताष्टम्यां सतिलं भीष्म तर्प्पणम् ॥ श्राद्धं च ये नराक

याश्चये वर्णा दद्युर्भीष्मायनोजलम् ॥ संवत्सर कृतं तेषां पुण्यं नश्यति सत्तम ॥ तर्पणमंत्रस्तु ॥ ॐ भीष्मः शांतनवो वीरः सत्यवादी जितेंद्रियः ॥ आभिरद्भिरवाप्नोतु पुत्रपौत्रोचितां क्रियाम् ॥ वैयाघ्र पद गोत्राय सांकृत्य प्रवराय च ॥ अपुत्राय ददाम्येतज्जलं भीष्माय वर्म्मणे ॥ वसूनामवताराय शंतनो रात्मजाय च ॥ अर्घं ददामि भीष्माय आबाल ब्रह्मचारिणे ॥ इदंच जीवत्पितृ कोऽपि कुर्य्यात् ॥ अनेनैव तर्प्पण मर्घदानं च ॥ इति ॥

अथ फाल्गुन शुक्ला ष्टम्यां ॥ लक्ष्मी सीता च पूज्या ॥ यद्देवान्नं ब्राह्मणेभ्यो दत्तं तद्वशिष्ट मेव भोज्यं नान्यत् ॥ ब्राह्मे ॥ फाल्गुनस्यसिताष्टम्यां सुस्नातैश्चैव त्वलंकृतैः लक्ष्मीसीतासंपूज्या गंध माल्यादि भिस्सदा ॥ प्रदोष समये दीपाः देयाः शतसहस्रशः ॥ दत्तशिष्टं तदा भोज्यं भक्षितव्यं च वंधुभिः ॥ तस्यां संपूर्णायां यदा बुधवारो भवति तदैक भक्तं कार्य्यम् ॥ तथा च भविष्ये ॥ यदा यदा सिताष्टम्यां बुधवारो भवेद्यदि ॥ तदा तदा हि संग्राह्य एक भक्ताशने र्नृपः ॥ बुधाष्टमी तु संपूर्णा यथोक्त फल दायिनी ॥ अथ निषिद्ध दानाह ॥ संध्या

कालेतथा चैत्रे प्रसुप्ते च जनार्दने ॥ बुधाष्टमी न कर्त्तव्या हंति पुण्यं पुराकृतम् ॥ इति ॥ इत्यष्टमीनिर्णयः ॥ अथ नवमीनिर्णीयते ॥ उपवासादिषु नवमी पूर्वयुतैव ग्राह्या युग्मवाक्यात् ॥ ब्रह्मवैवर्त्ते ॥ अष्टम्यां नवमी विद्धा कर्त्तव्या फलकांक्षिभिः ॥ न कुर्य्यान्नवमीं तात दशम्यां तु कदाचन ॥ तथा ॥ नवमीं दशमी विद्धां ये कुर्वन्ति विमोहिताः ॥ तथा सर्वे भवेत्तेषां वलिपूजा विधानकमिति ॥ अतो नवमी पूर्वविद्धैवेति सिद्धांतः ॥ अथ चैत्रशुक्लानवमी रामनवमी ॥ साच मध्यान्ह व्यापिनी ॥ दिन द्वये च व्याप्ता व्याप्तौ च पुनर्वसु युता ताद्दश्य पि च दिन द्वये परा । चैत्रे मासि नवम्यां तु शुक्ल पक्षे रघूत्तमः ॥ पुनर्वसावा विरासीत्युराव्रह्मेव केवलम् ॥ उपोषणं जागरणं पितॄनुद्दिश्य तर्प्पणम् ॥ तस्मिन्दिने तु कर्त्तव्यं ब्रह्म प्राप्तिमभीप्सुभिः ॥ एतद्व्रताकरणे प्रत्यवाय श्रवणात्करणे फलश्रवणाच्च नित्यं काम्यं च ॥ पर्व द्वये कुरुक्षेत्रे महादाने कृते मुहुः ॥ यत्फलं तदवाप्नोति श्रीरामनवमी व्रते ॥ कुर्य्याद्राम नवम्यां तु उपोषण मतंद्रितः ॥ मातुर्गर्भन्न चाप्नोति सच्च रामो भवेद्ध्रुवम् ॥ कृत्या

दीनि बहूनि वाक्यानि अगस्त्य संहितायां मुक्तानि ॥ निंदा च ॥ यो वै राम नवम्यां तु भुक्ते मो-
हाद्धि मूढधीः ॥ कुंभी पाकेषु घोरेषु पच्यते नात्र संशयः ॥ इयं च शुद्धादिभेदात् द्वादशधा ॥
तथा च ॥ शुद्धा विद्धादिभेदेन नवमी साद्विधा स्मृता ॥ समान्यूनाधिका चेति शुद्धापि नव-
मी त्रिधा ॥ पुनर्नक्षत्र संयोग वियोगाभ्यां च षड्विधा ॥ समादि त्रक्षयोगादि भेदे विद्धापि ष
ड्विधा ॥ एवं द्वादशधा भिन्ना नवमी तत्र निर्णयः ॥ महा फलप्रदा शुद्धा पुनर्वस्वृक्षयोगतः ॥
चैत्रे शुद्धा तु नवमी पुनर्वसु युता यदि ॥ सैव मध्यान्ह योगेन महा पुण्यतमा भवेत् ॥ केवला
पि सदोपोष्या नवमी सा च संग्रहात् ॥ अस्मिन्व्रते सर्वेषामधिकारः ॥ विद्धैव चेदृक्ष युता व्रतं त-
त्र कथं भवेत् ॥ उत्तरं तत्रैव ॥ नवमी चाष्टमी विद्धा त्याज्या विष्णु परायणैः ॥ उपोषणं नवम्यां वै
दशम्यामेव पारणम् ॥ दशम्यां तिथि वृद्धिश्चेत्पारित्याज्ये व वैष्णवैः । तदन्येषां तु सर्वेषां व्र-
तं तत्रैव निश्चितम् ॥ दशम्यामेव शब्देन दशमी नैवलंघयेत् ॥ निश्चित्यैवं विचारेण नव-
मी व्रतमाचरेत् ॥ इति ॥ अथ वैशाख मासे ॥ उभय नवम्यो रुपवास परश्चण्डिकां पूजयेत् ॥

यदुक्तं भविष्ये॥ वैशाखे मासि राजेंद्र नवम्यां पक्षयोर्द्वयोः ॥ उपवास परो भक्त्या पूजयीत चण्डिकाम्॥ हंसकुंदेंदु संकाशस्तेजसा भुवसन्निभः॥ विमान वरमा रूढो देवलोके महीयते॥ इति॥ अथ ज्येष्ठ शुक्ला नवमी॥ तस्यामुमां ब्राह्मणीनाम्नीं पूजयित्वा ब्राह्मणान्कुमारीश्च भोजयेत्॥ भविष्येऽपि उपवास परो भूत्वा नवम्यां पूजयेदुमाम्॥ ब्राह्मणी त्विति वै नाम्ना श्वेत रूपेण रूपिणी॥ ज्येष्ठ मासि नृप श्रेष्ठ कृत्वा नक्तस्य वै विधिम्॥ शाल्यन्नं पयसो पेतं स्वयं भुंजीत वाग्यतः॥ कुमारी भोजयेच्चापि स्व शक्त्या ब्राह्मणांस्तथेति॥ अथाषाढस्य शुक्लनवम्यां पंच गव्यस्नात उपोषितः॥ ऐंद्रीं देवीं पूजयित्वा नक्तं कुर्यात्॥ तदुक्तं भविष्ये॥ उपवास परो भूत्वा नवम्यां पक्षयोर्द्वयोः॥ आषाढे मासि राजेंद्र यः कुर्यान्नक्तभोजनम्॥ पूजयेच्च दुर्गां मैन्द्रीनन्भींतु नामतः॥ ऐरावत गतां शुभ्रां श्वेत रूपेण रूपिणीम्॥ स ऐरावत मारुह्य इंद्रस्यानुचरो भवेदिति॥ अथश्रावणस्य शुक्लनवम्यां॥ कौमारी नाम्नीं देवीं पूजयित्वा क्षीरान्नं नक्तं भुञ्जीत॥ तदुक्तं भविष्ये॥ श्रावणे मासि राजेंद्र यः कुर्यान्नक्त भोजनं॥ क्षीर षष्टिक...

न सर्वभूतहितेरतः ॥ उपवासपरो वीर नवम्यां पक्षयोर्द्वयोः ॥ कौमारीं त्वात व नाम्ना
रिडकां पूजयेत्सदा ॥ कृत्वा रौप्यमयीं भक्त्या घोरां वै पापनाशिनीं ॥ करवीरस्य पुष्पैस्तु
गंधैश्चागरुचंदनैः ॥ धूपेन च दशांगेन मोदकैश्चापि पूजयेत् ॥ कुमारीं भोजयेच्छक्त्या-
स्त्रियो विप्रांश्च शक्तितः ॥ भुंजीत वाग्यतः पश्चाद्बिल्वपत्रकृताशनः ॥ एवं यः पूजयेद्दा
र्यां श्रद्धयापरयान्वितः ॥ सयाति परमं स्थानमिति ॥ अथ भाद्रशुक्लनवमी ॥ नंदानाम्नी दु-
र्गां संपूज्य विष्णुलोकं गच्छति ॥ तत्रैव भविष्योत्तरे ॥ मासि भाद्रपदे यस्यान्नवमी बहुले तरा ॥
सा तु नंदा महापुण्या कीर्तिता पापनाशिनी ॥ तस्यां यः पूजयेद्दुर्गां विधिवत्कुरुनंदन ॥
सोऽश्वमेधफलं विंद्याद्विष्णुलोकं स गच्छति ॥ अत्रैव कृष्णनवम्यां देवीमुत्थापयेत् ॥ तदे-
व देवीपुराणे ॥ कन्यायां कृष्णपक्षे तु पूजयित्वार्द्रभेऽपि वा ॥ नवम्यां बोधयेद्देवीं गीतवा
दित्रनिःस्वनैरिति ॥ आश्विनशुक्लनवमी मन्वादिः ॥ कार्तिकशुक्लनवमी युगादिः ॥ अ-
थ मार्गशिरशुक्लनवमी नंदिनी ॥ तस्यां त्रिरात्रोपोषितः पूजयित्वा देवीं वाजिमेधफलं प्राप्नो-

ति॥ तत्रैव भविष्ये॥ मासि मार्गशिरे वीर शुक्लपक्षे तु या भवेत्॥ सानंदिनी महापुण्या नव
मी परिकीर्तिता॥ यस्तस्यां पूजयेद्देवीं त्रिरात्रोपोषितो नरः॥ सोऽश्वमेधमवाप्नोति विष्णु
लोके महीयते॥ अथ माघशुक्लनवम्यां महानद्यां स्नानदानादिकृतमक्षयम्॥ यदुक्तं॥ मा-
घमासे तु या शुक्ला नवमी लोकपूजिता॥ महानंदेति सा प्रोक्ता सदानंदकरी नृणां॥ तस्यां
स्नानं तपो दानं जपो होम उपोषणम्॥ सर्वं तदक्षयं प्रोक्तं यदस्यां क्रियते नरैरिति॥ स
र्वनवमीषु तिथिपतित्वेन सरस्वती पूज्येति दिक्॥ इति नवमीनिर्णयः॥ अथ दशमी निर्णीयते
दशमी तिथिर्नवमीयुते वोपवासादिषु विधेया॥ शुक्लपक्षे तिथिर्ग्राह्या यस्यामस्युदितो
रविः॥ कृष्णपक्षे तिथिर्ग्राह्या यस्यामस्तमितो रविः॥ इति वचनात्॥ अथवा सेतु सर्वापि पूर्वै-
व॥ दशम्येकादशी विद्धा नोपोष्या सा कथंचनेति॥ शिवरहस्ये॥ आपस्तंबस्तु॥ अष्टमी नव-
मी विद्धा कर्तव्या फलकांक्षिभिः॥ दशमी तु न कर्तव्या सदुर्गो द्विजसत्तम॥ पैठीनसिरपि॥
पंचमी सप्तमी चैव दशमी च त्रयोदशी॥ प्रतिपन्नवमी चैव कर्तव्या संमुखी तिथिरिति॥

वत्सवचनं ॥ संपूर्णा दशमी कार्य्या परया पूर्वयाथवा ॥ युक्ता न दूषिता यस्मात्ततः सा सर्वतोमु-
खी ॥ तत्र पूर्वविद्धायां ग्राने उदयकालव्यापिनी ग्राह्येत्येव परम् ॥ यत्त्वेकादशीव्रतांग-
त्वेन क्रियमाणे दशम्यां एकभक्तादिकं परविद्धायां कार्य्यमिति सिद्धांतः अथ चैत्रशुक्लदश-
मी ॥ अस्यां यमपूजनं विधेयम् ॥ यदुक्तं देवीपुराणे ॥ चैत्रमासीय तिथिप्रक्रमे ॥ धर्म्मराजं दश-
म्यां तु पूजयित्वा सुगंधकैः ॥ विगतारिर्निरातंक इह चांते परं पदमिति ॥ आप्नुयादिति शेषः
अथ ज्येष्ठशुक्लदशमी दशहरेत्युच्यते ॥ यत्तु ब्राह्मे ॥ ज्येष्ठे मासि सिते पक्षे दशमी हस्तसंयुता ॥ ह-
रते दश पापानि तस्माद्दशहरा स्मृतेति ॥ भविष्योत्तरे च ॥ ज्येष्ठे शुक्लदशम्यां च भवेद्भौमदि-
नं यदि ॥ ज्ञेया हस्तर्क्षसंयुक्ता सर्वपापहरा तिथिः ॥ दश पापानि च मनुजो तानि ॥ परद्रव्ये-
ष्वभिध्यानं मनसानिष्टचिंतनम् ॥ वितथाभिनिवेशश्च मानसं त्रिविधं स्मृतम् ॥ पारुष्य-
मनृतं चैव पैशुन्यं चापि सर्वशः ॥ असंबद्धप्रलापश्च वाङ्मयं स्याच्चतुर्विधम् ॥ अदत्तानामु-
पादानं हिंसा चैवाविधानतः ॥ परदारोपसेवा च कायिकं त्रिविधं स्मृतमिति ॥ स्कांदे ॥ यो-

काङ्क्षितारितं प्राप्य ददाति भीति लोदकम् ॥ मुच्यते दशभिः पापै स्तु महापातकोत्तमैः ॥
गंगायां त्वति प्रशस्तम् ॥ मत्तुतत्रैव ॥ स्नान काले ऽन्य तीर्थे तु जाप्यते जान्हवीजलैः ॥ वि-
ना विष्णु पदी नान्य त्तीर्थं यच्च विशोधनम् ॥ इयंच दश हरायत्रैव योग बाहुल्यं तत्रैव-
कार्य्या ॥ तेच दश योगा स्कांदे उक्ताः ॥ ज्येष्ठे मासि सिते पक्षे दशम्यां बुध हस्तयोः ॥ व्यतीपाते
गरानंद कन्या चन्द्रे वृषे रवा विति ॥ वाराहपुराणे ॥ कुजवार योगः ॥ स्कांदे ॥ बुधः कल्पभेदेन
परिहार्य्यः ॥ इयंच योगविशेषात्पूर्वा परा वा ॥ मलमासयाते तु तत्रैव ॥ चत्व्य शुक्ले ऽपि ॥ द-
शहरा सुतोत्कर्षञ्च तुर्थ्यपि युगादिषु ॥ उपाकर्म्म महाष्टम्यो होतदुलं दधादितः ॥ मास द्व-
ये ऽपि भवतीत्यपरः ॥ इति दशहरा अथाश्विन शुक्ल दशमी विजय दशमी ॥ तस्यां नवमी श्रव-
णा युता यास परा जितां पूज्य प्रस्थानं कुर्य्यात् ॥ स्मृति चिंतामणौ ॥ आश्विनस्य शिते पक्षे
दशम्यां तारको दये ॥ सकालो विजयो ज्ञेय स्सर्व कार्य्यार्थ सिद्धये ॥ स्कान्दे ऽपि ॥ यापूर्णा-
नवमी युक्ता तस्यां पूजा पराजिता ॥ ददाति विजयं देवी पूजिता जयवर्द्धिनी ॥ दशमीयस्त-

सुसंध्य गस्थानं कुरुते नरः ॥ तस्य संवत्सरं राज्येन क्वापि विजयो भवेदिति ॥ दिनद्वये तार
कोदय काला भावे परदिने एकादशमुहूर्ते यात्रा विधेया ॥ तत्र भृगुः ॥ आश्विनस्य शिते पक्षे
दशम्यां सर्वराशिषु ॥ सायंकाले शुभा यात्रा दिवा वा विजयक्षणे ॥ विजयक्षणस्तु एकादशो
मुहूर्तः परदिने एकादश मुहूर्ताभावे पिण्पुत्रा यामेव दशम्यां गस्थानम् अपराजिता पूजा च भवि-
ष्ये ॥ श्रवणर्क्षे तु पूर्णायां काकुत्स्थः प्रस्थितो यतः ॥ तद्दिनर्क्षे तु धीमान्सुसंधे युस्वतो नराः ॥ श्रवणा
भावे तु केवल दशम्यामेवेति दिक् ॥ राजचिन्हानां पूजा अपराजिता पूजा अत्र ग्रंथगौरव भ-
यान्नो लिखिता ॥ इति विजयदशमी ॥ सर्वासु दशमीषु यमः पूज्यः तिथिपतित्वात् इति दश-
मीनिर्णयः अथाशेषदिविषदीश्वरस्य भगवतः श्रीपुरुषोत्तमस्य स्मरणमात्रेण सकलाघनिवर्तकस्य वैकुं-
ठगमननिश्रेणी प्रियाच मुनि कदंबकैरुपोषितैकादशी निर्णीयते ॥ तत्रैकादश्युपवासो द्वेधा नि-
षेधप्रतिपालनात्मको व्रतरूपश्च ॥ तत्राद्यः ॥ न शंखेन पिबेत्तोयं न खादेत्कूर्मशूकरौ एका
दश्यां न भुंजीत पक्षयोरुभयोरपीति ॥ कौर्मदेवलाद्याः ॥ आग्नेयेऽपि ॥ गृहस्थो ब्रह्मचारी वा आ

द्भिर्भिरस्तथैवच ॥ एकादश्यां न भुंजीत पक्षयोरुभयोरपि ॥ नचान्न पर्युदासेन प्रतिषेधः ॥
तद्धेतु मता दिगान्तरा भावात् ॥ मतरूपस्तु अन्यदेवर्त्ते ॥ श्राद्धेतु सिद्दिने सम्यग्विधायनियमं-
निशि ॥ एकादश्यामुपवासश्च प्रकुर्याद्दैवतत्परम् ॥ इदं शिवभक्तादिभिरपि कार्य्यम् ॥ कौर्मपु
राणे ॥ वैष्णवो वाथ शैवो वा सौरोप्येतत्समाचरेत् ॥ द्विविधोऽपि द्विधानित्यः काम्यश्चात्र नारदः ॥ शु
क्लेपक्षे च कर्त्तव्यमेकादश्यामुपोषणं तिथि ॥ अनो नित्यत्वमेव ॥ यदीच्छेद्विष्णुसायुज्यं श्रियं सं
ततिमात्मनः ॥ एकादश्यां न भुंजीतेत्यादि कौर्म्मादिषु फलश्रुतेश्च काम्यता ॥ उभयैकादशी-
व्रतश्च गृहस्थातिरिक्तानामेव ॥ गृहस्थाः शुक्लामेव न कृष्णायाम् ॥ यत्तुदेवलः ॥ एकादश्यां
न भुंजीत पक्षयोरुभयोरपि ॥ वनस्थयतिधर्म्मोऽयं शुक्लामेव सदा गृही ॥ तदेव नारदोऽपि ॥ सं-
क्रांत्यामुपवासं च कृष्णैकादशिवासरे ॥ चंद्रसूर्य्यग्रहे चैव न कुर्यात्पुत्रवान्गृही ॥ तथाच विष्णु-
र्योऽपि ॥ कृष्णाविषये ॥ याचे ॥ शयनी बोधिनी मध्ये या कृष्णैकादशी भवेत् ॥ सैवोपोष्या गृहस्थे
न नान्या कृष्णा कदाचन ॥ यत्तु मत्स्यरत्ने भविष्ये ॥ यथा शुक्ला तथा कृष्णा द्वादशी मे सदा प्रिया ॥

ध॰सिं ४८७

भुक्ता गृहस्थैः कर्त्तव्या भोगसंतानवर्द्धिनी ॥ मुमुक्षुभिस्तथा कृष्णा न तेनोपदर्शिता ॥ यत्तु
सर्वे कृष्णायां सर्वे गृहिणां संभवत्येव तद्गृहस्थवैष्णवपरं ॥ तथाच नारदः ॥ पुत्रवांश्च सभार्य्यश्च
बंधुयुक्तस्तथैव च ॥ उभयोः पक्षयोः काम्यं व्रतं कुर्य्याच्च वैष्णवम् ॥ अनेन काम्यपरत्वमेवावग-
म्यते ॥ पुनरपि ॥ विधवाया वनस्थस्य यतेश्चैकादशीद्वये ॥ उपवासो गृहस्थस्य शुक्लायामेव पु-
त्रिणः ॥ प्राच्यादिमते वैष्णवगृहस्थानामेवोभयैकादशी व्रतं नित्यम् ॥ उपवासनिषेधे दि
वो वायवीये ॥ उपवासनिषेधेतु किंचिद्भक्ष्यं प्रकल्पयेत् ॥ नदुष्यत्युपवासेन उपवासफलं ल-
भेत् ॥ भक्ष्यमपि तत्रैव ॥ नक्तं हविष्यान्नमयोदनं च फलं तिलाः क्षीरमथांबु चाज्यम् ॥ यत्पंच-
गव्यं यदि वापि वायुः प्रशस्तमत्रोत्तरमुत्तरं च ॥ अनस्यैकादशीव्रतं नित्यम् ॥ तथाच सनत्कु-
मारः ॥ न करोति यदा मूढ एकादश्यामुपोषणम् ॥ स नरो नरकं याति रौरवं तमसावृतम् ॥
नारदीयेऽपि ॥ यानि कानि च पापानि ब्रह्महत्यासमानि च ॥ अन्नमाश्रित्य तिष्ठंति संप्राप्ते ह-
रिवासरे ॥ कौर्मे ॥ मातृहा पितृहा चापि भ्रातृहा गुरुहा तथा ॥ एकादश्यां तु यो भुंक्ते पक्षयोरु-

४४८

भयो रपि ॥ वरं स्वमातृगमनं वरं गोमांसभक्षणम् ॥ वरं हत्या सुरापानं नैकादश्यां च भोजनम् ॥ वशिष्ठः एकादशी समुत्थेन वन्हिना पातकेंधनम् ॥ भस्मतां याति राजेंद्र अपि जन्मशतोद्भवम् ॥ अथ दशमीवेधो द्विधा ॥ अरुणोदयवेधः सूर्योदयवेधश्च ॥ पूर्वः वैष्णवपरः अपरस्मार्तपरः ॥ अयः गारुडे ॥ दशमी शेषसंयुक्तो यदि स्यादरुणोदयः ॥ नैवोपोष्यं वैष्णवेन तद्दिनैकादशीव्रतम् ॥ अरुणोदयस्वरूपमाधवीय स्कांदे ॥ उदयात्प्राक् चतस्रस्तु घटिका अरुणोदयः ॥ इति अंत्यसूदयवेधः ॥ हेमाद्रौ माधवीये गारुडे ॥ उदयात्प्राक् त्रिघटिकाव्यापिन्येकादशी यदा ॥ संदिग्धैकादशी नाम वर्ज्येयं धर्मकांक्षिभिः ॥ उदयात्प्राङ्मुहूर्तेन व्यापिन्येकादशी यदा ॥ संयुक्तैकादशी नाम वर्ज्येयं धर्मवृद्धये ॥ नारदीयेऽपि ॥ लववेधेऽपि विप्रेन्द्र दशम्येकादशीं त्यजेत् ॥ सुरया बिंदुना स्पृष्टं गंगांभ इव निर्मलम् ॥ माधवोऽपि ॥ सैवं कलादिवेधे ऽरुणोदयवेधे सूर्योदयवेधे समानत्वम् ॥ निगमेऽपि ॥ सर्वप्रकारवेधोयमुपवासस्य दूषकः ॥ हेमाद्रौ स्मृत्यंतरे ॥ अज्ञानाद्यदि वा मोहात्कुर्वन्नेकादशीं नरः

॥ दशमीशेषसंयुक्तां प्रायश्चित्तमिदं चरेत् ॥ कृच्छ्रपादं नरः कृत्वा गां च दद्यात्सवत्सकाम् ॥
॥ सुवर्णस्याढकं देयं तिलद्रोणसमन्वितम् ॥ अपरञ्च ॥ ब्राह्मणान्भोजयेत्त्रिंशत्तिलद्रोण-
मथापि वा ॥ स्मृत्यंतरेऽपि ॥ दशम्याः प्रांतमादाय यदोदेति दिवाकरः ॥ तेन स्पृष्टं हरिदिनं द-
त्तं जंभासुराय यत् ॥ अत्रारुणोदयवेधो वैष्णवविषयः ॥ वैष्णवस्वरूपं माधवीये स्कांदे ॥ परमाप-
दमापन्ने हर्षे वा समुपस्थिते ॥ नैकादशीं त्यजेद्यस्तु यस्य दीक्षास्ति वैष्णवी ॥ विष्ण्वर्पि-
ताखिलाचारः स हि वैष्णव उच्यते ॥ माधवः ॥ अरुणोदयवेधोऽत्र वेधः सूर्योदये तथा ॥
उक्तौ द्वौ दशमीवेधौ वैष्णवस्मार्तयोः क्रमात् ॥ माधवमते ॥ वैष्णवैररुणोदयविद्धा त्याज्या ॥
एकादशी द्वादशी वाधिका चेत्त्यज्य तां दिनं ॥ पूर्वं ग्राह्यं तूत्तरं स्यादिति वैष्णवनिर्णयः ॥
स्मार्तैस्तु सूर्योदयविद्धा त्याज्या ॥ यदा त्वेकादशी शुद्धा सती ॥ वर्द्धते द्वादशी च ॥ समा
न्यूना वा ॥ तदा गृहस्थैः पूर्वा यतिभिस्तु परा कार्या ॥ प्रथमेऽहनि संपूर्णा व्याप्याहोरा-
त्रसंयुता ॥ द्वादशी च तथा तात दृश्यते पुनरेव च ॥ पूर्वा कार्या गृहस्थैश्च यतिभिश्चो-

ष्टादशा थैकादश्युच्यते॥तथाच॥ शुद्धा विद्धा तथा नंदा त्रेधा न्यून समाधिकैः॥ षट्प्रकारा
पुनस्त्रेधा द्वादश्यूनसमाधिकैरित्यष्टादशैकादशीभेदाः॥ तत्र शुद्धाधिकन्यून द्वादशि
का शुद्धाधिकसमद्वादशिकाच्च॥ सकामैः पूर्वा निःकामैरुत्तरा कार्य्या॥ ऊनद्वादशि
कायांतुविष्णुप्रीतिकामैरुपवासद्वयं कार्य्यम्॥ संपूर्णैकादशी यत्र प्रभाते पुनरेवसा
॥लुप्यते द्वादशी तस्मिन्नुपवासः कथं भवेत्॥ उपोष्ये द्वे तिथी तत्र विष्णुप्रीणनतत्पर
रिति॥ वृद्धवसिष्ठः॥नारदोऽपि॥ संपूर्णैकादशी यत्र द्वादश्यां वृद्धिगामिनी॥ द्वादश्यां
लंघनं कार्य्यं त्रयोदश्यां तु पारणम्॥ शुद्धन्यूना शुद्धाधिका शुद्धसमा॥ विद्धन्यूना
विद्धाधिका विद्धसमा द्वादशिका चेत्॥ सर्वेषां परैवेति हेमाद्रिः॥ मदनरत्नेतु॥ शुद्धा
धिका परा॥ अन्या पूर्वा॥ शुद्धा यदा समा हीना समा हीनाधिको त्तरा॥ एकादशी सुप-
वसेत्शुद्धां वैष्णवीमपीति॥स्कांदे॥ शुद्धा एकादशी उत्तरा यत्तु संपूर्णैकादशी यत्र
परतो द्वादशी यदि॥ उपोष्या द्वादशी शुद्धा द्वादश्यामेव पारणम्॥ इति वैष्णवपरम्॥ सो

तीनां तु पूर्वैवेति सिद्धांतः ॥ मदनरत्नेतु ॥ विद्धन्यूना सम द्वादशिकातु ॥ मुमुक्षूणां पुत्रवतां चपरा ॥ अन्येषां पूर्वा ॥ पुत्रवतोऽपि पूर्वा ॥ विद्धसमा सम द्वादशिको न द्वादशिका च मुमुक्षुभिः ॥ पराऽन्यैः पूर्वा कार्य्या ॥ दशमी मिश्रिता पूर्वा द्वादशी यदि लुप्यते ॥ शुद्धैव द्वादशी राजन्नुपोष्या मोक्षकांक्षिभि रिति ॥ व्यास ॥ मोक्षकांक्षि गृहस्थ इत्यपि वैव ॥ सर्वत्रैकादशी कार्य्या द्वादशी मिश्रिता नरैः ॥ प्रातर्भवतु वा मा वा यतो नित्यमुपोषणमिति ॥ पाद्मोक्तेः विद्धाधिक सम द्वादशिका च पूर्वैव ॥ पारणाहे न लभ्येत द्वादशी कलयापि चेत् ॥ तदानीं दशमी विद्धाप्युपोष्यैकादशी तिथि रिति ऋष्यशृंगोक्तेः ॥ माधवमतेतु ॥ गृहिणां पूर्वा यतेरुत्तरा ॥ विद्धाधिकन्यून द्वादशिका च मोक्षपापक्षय विष्णुप्रीति कामैः परा कार्य्या ॥ गृहस्थेनतु नक्तं विधेयम् ॥ तथा च कौर्म्मे ॥ एकादशी द्वादशी च रात्रिशेषे त्रयोदशी ॥ उपवासं न कुर्वीत पुत्रपौत्र समन्वित इति ॥ दिनक्षये उपवास निषेधात् ॥ दशम्यैकादशी विद्धा द्वादशी च क्षयं गता ॥ क्षीणा सा द्वाद-

श्री ज्ञेयानक्तं तु गृहिणः स्मृतमिति ॥ वृद्धशातातपः ॥ एकादश्यां शुद्धन्यूनत्वे शुद्धसमत्वे
द्वादश्यां न्यूनसमत्वयोः एकादश्यामुपवासः ॥ संदिग्धेषु च वाक्येषु द्वादशीं समुपोषये-
त् ॥ विवादेषु च सर्वेषु द्वादश्यां समुपोषणम् ॥ पारणं च त्रयोदश्यामाज्ञेयं मामकीमु
नेरिति ॥ पाद्मे ॥ वेधसंदेहज्योतिर्विदां विप्रतिपत्तौ वा ॥ वैष्णवैः परा कार्य्येत्यलम् ॥
अत्रोपयुक्तं किंचिदपि ॥ तत्र दशम्यामेकादशीयोगे ॥ दशमीमध्ये एव भोजनं कार्य्यम्
एकादश्यां भोजननिषेधः ॥ व्रताधिकारिणो माधवीये कात्यायनः ॥ अष्टवर्षाधिको मर्त्यो ह्यशी
तिन्यूनवत्सरः ॥ एकादश्यामुपवसेत्पक्षयोरुभयोरपि ॥ ब्रह्मवैवर्त्ते ॥ ब्रह्मचारी च नारी च
शुक्लामेव सदा गृही ॥ सुभगाया भर्तुरनुज्ञापरमन्यथा व्रतेऽनधिकारः ॥ यतुविष्णुः ॥ पत्यौ
जीवति या नारी ह्युपोष्य व्रतमाचरेत् ॥ आयुष्यं हरते भर्तुर्नरकं चैव गच्छति ॥ उपवासा
सामर्थ्ये । मार्कण्डेयः ॥ एकभक्तेन नक्तेन तथैवायाचितेन च ॥ उपवासेन दानेन नित्यं द्वा-
दशिको भवेत् ॥ असामर्थ्ये प्रतिनिधिना कारयेत् व्रताकरणे प्रायश्चित्तमाह कात्यायनः ॥ अर्के पर्के

हूये रात्रौ चतुर्दश्यष्टमी दिवा ॥ एकादश्यामहोरात्रं भुक्त्वा चांद्रायणं चरेत् ॥ अथ काम्यव्रत-
विधिर्लघुनारदीये ॥ दशम्यादि महीपाल त्रिदिनं परिवर्जयेत् ॥ गंधतांबूलपुष्पादि स्त्रीसं-
योगं महायशाः ॥ दशम्यां विधिः कौर्मे ॥ कांस्यं मांसं मसूरांश्च चणकान्कोरदूषकान् ॥
शाकं मधु परान्नं च त्यजेदुपवसन् स्त्रियम् ॥ अन्यदपि ॥ शाकं मांसं मसूरांश्च पुनर्भोजन-
मैथुने ॥ द्यूतमत्यंबुपानं च दशम्यां वैष्णवस्त्यजेत् ॥ विधिरपि मदनरत्ने ॥ अक्षारलवणाः
सर्वे हविष्यान्ननिषेविणः ॥ अवनीतल्पशयनाः प्रियासंगविवर्जिताः ॥ व्रतघ्नान्याह देव-
लः ॥ असकृज्जलपानाच्च सकृत्तांबूलभक्षणात् ॥ उपवासः प्रणश्येत दिवास्वापाच्च मै-
थुनात् ॥ अशक्तौ देवलः ॥ अत्यये चांबुपाने च नोपवासः प्रणश्यति ॥ अत्यये काष्ठे ॥ विष्णुर-
हस्ये ॥ गात्राभ्यंगं शिरोऽभ्यंगं तांबूलं चानुलेपनम् ॥ व्रतस्थो वर्जयेत्सर्वं यच्चान्यत्र निरा-
कृतम् ॥ एषु प्रायश्चित्तं निर्णयामृते ॥ स्तेन हिंसकयोः सख्यं कृत्वा चैत्यं न्यं हिंसने ॥ प्रायश्चि-
त्तं व्रती कुर्याज्जपेन्नामशतत्रयम् ॥ पुनः ॥ मिथ्यावादे दिवास्वापे बहुशो म्बुनिषेवणे ॥

असत्त्वं व्रती जप्त्वा शतमष्टोत्तरं शुचिः ॥ अष्टाक्षरः ॥ ॐ नमो नारायणायेति ॥ पैठीनसिरपि ॥
तांबूलचर्वणे स्त्रीसंभोगे मांसनिषेवणे ॥ व्रतलोपेन चेत्कुर्यात् कृत्स्ना वृद्धिविवर्जनम् ॥
संभोगो ऋतुकालादन्यत्र ॥ व्यासः पारणे ॥ वर्जयेत्पारणे मांसं व्रताहे प्योषधं सदा ॥ एकाद-
श्यां श्राद्धप्राप्तौ ॥ मातापित्रोः क्षये प्राप्ते भवेदेकादशी यदि ॥ अभ्यर्च्य पितृदेवांश्च आजिघ्रेत्पि-
तृसेवितमिति ॥ अन्यदपि ॥ शातातपः ॥ एकादश्यां व्रतं प्राप्य पितुः संवत्सरं भवेत् ॥ माध्यान्हे तु
सतीच्चैव कथं कर्म प्रवर्त्तते ॥ तत्रैव ॥ श्राद्धं कृत्वा व्रतं कुर्यात् आघ्राणं पितृपिण्डयोः ॥ रात्रेश्च तु-
स्तोभावेतु ऋतुस्नानं प्रवर्त्तते ॥ एते नैकादशीनिमित्तं श्राद्धं द्वादश्यां वदन्तः परास्ताः ॥ निर्मूलत्वात्
अव्रतघ्नान्याह मदनरत्ने देवलः ॥ सर्वभूतभयं व्याधिः प्रमादो गुरुशासनम् ॥ अव्रतघ्नानि पठ्यन्ते
सकृदेतानि शास्त्रतः ॥ स्कान्देऽपि ॥ अष्टौ तान्यव्रतघ्नानि आपो मूलं फलं पयः ॥ हविर्ब्राह्मणका-
म्या च गुरोर्वचनमौषधम् ॥ नारदीये ॥ अनुकल्पो नृणां प्रोक्तः क्षीणानां वरवर्णिनि ॥ मूलं फलं
पयस्तोयमुपभोग्यं भवेच्छुभे ॥ अस्यापवादोऽपि ॥ शयने च मदुत्थाने मत्पार्श्वपरिवर्तने ॥ नरो मू-

त्फला हारी हृदि शल्यंमम र्प्पयेत् ॥ इदंचाति संकष्टं विष्रथम् ॥ एतेच्चाविरोधिनो निर्णयाः सर्वव्रतेषु ज्ञेयाः ॥ तत्रैकादश्यां संकल्पः ॥ गृहीत्वौदुंबरं पात्रं इत्यादि ॥ मंत्रश्च ॥ एकादश्यां निराहारः स्थित्वा हमपरे हनि ॥ भोक्ष्यामि पुंडरीकाक्ष शरणं मे भवाच्युत ॥ शैवादीनांतु हेमाद्रौ सौरपुराणे ॥ सावित्र्याप्यथवा नाम्ना संकल्पंतु समाचरेत् ॥ शिवादिगायत्र्यो यजुर्वेदश्च सिद्धाः ॥ वाराहे ॥ इत्युच्चार्य्य ततो विद्वान्पुष्पांजलिमथार्चयेत् ॥ ततस्तज्जलं पिबेत् ॥ अष्टाक्षरेण मंत्रेण त्रिर्जप्तेनाभिमंत्रितम् ॥ उपवासफलप्रेप्सुः पिबेत्पात्रगतं जलम् ॥ मध्यरात्रेउदयेवा दशमीवेधे रात्रौ संकल्पः ॥ इतिमाधवः ॥ दशम्या संगदोषेण अर्द्धरात्रात्परेणतु ॥ वर्ज्जनाच्चतुरो यामान्संकल्पाच्चतयो रसदा ॥ विद्धोपवासे न श्नं स्तुदिनस्य ज्ञा समाहितः रात्रौ संपूजयेद्विष्णुं संकल्पं च तदाचरेत् ॥ इतिनारदीये ॥ तत्रैव पूजामभिधाय ॥ देवस्य पुरतः कुर्य्याज्जागरं नियतो व्रती ॥ द्वादश्यां निवेदन मंत्र उक्तः कात्यायनेन ॥ अज्ञानतिमिरांधस्य व्रतेनानेन केशव ॥ प्रसीद सुमुखो नाथ ज्ञानदृष्टिप्रदो भव ॥ नारदीये ॥ ब्राह्मणान्भोजये-

स्तुत्वा दद्याद्दक्षिणां ततः ॥ स्कांदे ॥ कृत्वा चैवोपवासं तु योऽश्नाति द्वादशीदिने ॥ नैवेद्यतुल-
सीमिश्रं हत्याकोटिविनाशनम् ॥ द्वादश्यां वर्ज्यान्याह ॥ दिवानिद्रां परान्नं च पुनर्भोजनमै-
थुने ॥ क्षौद्रं कांस्यामिषं तैलं द्वादश्यामष्ट वर्जयेत् ॥ विष्णुधर्मे ॥ असंभाष्यान्हि संभा-
ष्य तुलस्यमलिकादलम् ॥ आमलक्याः फलं वापि पारणे प्राश्य शुद्ध्यति ॥ पारणापवादे
विशेषः ॥ सनत्कुमारीये ॥ मैत्राद्यपादे स्वपितीह विष्णुर्वैष्णव्यमध्ये परिवर्त्तते च ॥ पौष्णस्य-
जागर्त्ति तथावसाने नो पारणं तत्र बुधः प्रकुर्यात् ॥ रजस्वलां च चांडालं महापातकिनं त-
था ॥ सूतिकां पतितं चैव उच्छिष्टं रजकादिकम् ॥ स्पृष्ट्वा दिगध्ये स्पृशुयाद्य चैषां ध्वनिं तु-
त्तमः ॥ अष्टोत्तरशतं तु जपेद्देवं द्व्यनंतरम् ॥ एतद्व्रतं सूतकेऽपि कार्यम् ॥ तथा च विष्णुः
सूतके मृतके चैव न त्याज्यं द्वादशीव्रतम् ॥ तत्र स्वयं दानादि सूतकांते कार्यम् ॥ मात्स्ये
॥ सूतकांते नरः स्नात्वा पूजयित्वा जनार्दनम् ॥ दानं दत्वा विधानेन व्रतस्य फलमश्नुते ॥
रजोदर्शनेऽपि कार्यम् ॥ पुलस्त्यः ॥ एकादश्यां न भुंजीत दृष्टे नारी रजस्यपि ॥ यद्वा ह्यादश्यां-

श्रवणर्क्षेनद्यशुद्धामप्येकादशींत्यजेत्तत्रैवोपवासःकार्य्यः ॥ शुक्लावायदिवाकृष्णा द्वादशीश्रवणा
न्विता ॥ तयोरेवोपवासंच त्रयोदश्यांच पारणम् ॥ इतिनारदीये ॥ एतेच नियमाःकाम्यव्र
तेनियताः ॥ नित्यव्रतेसतिसंभवेकार्य्याः ॥ तत्रकात्यायनः ॥ शक्तिमांस्तु ततः कुर्य्यान्निय
मंसविशेषणम् ॥ अशक्तौतु माधवीये ॥ इति विज्ञाय कुर्वीतावश्यमेकादशीव्रतम् ॥ विशे
षनियमाश्चात्रवहोरात्रं भुंजिवर्जितः ॥ इतिसाधारणनिर्णयः अथविशेषनिर्णयः अथचैत्रै
कादशीतत्रस्त्रीभिरुक्मिणीपूज्या तदुक्तंब्रह्मपुराणे ॥ एकादश्यां ततः स्त्रीभिर्देवीपूज्याचरु
क्मिणी ॥ पुष्पालंकारधूपान्नवस्त्रब्राह्मणतर्पणैः ॥ तत्रैव रात्रौ सलक्ष्मीको वासुदेव
स्योत्सवमांदोलनीयः ॥ चैत्रमासस्य शुक्लायामेकादश्यां तु वैष्णवैः ॥ आंदोलनीयो
देवेशः सलक्ष्मीको महोत्सवे ॥ दमनेनार्च्चयित्वाच रात्रौ जागरणंचरेदिति ॥ अथज्ये
ष्ठशुक्लैकादशीनिर्जला ॥ तत्र निर्जलमुपवासं कुर्य्यात् ॥ तदुक्तंस्कंदपुराणे ॥ ज्येष्ठे मासि नृ
पश्रेष्ठ या शुक्लैकादशी भवेत् ॥ निर्जलं समुपोष्यात्र जलकुंभान्सशर्करान् ॥ प्रदा

यविप्रमुख्येभ्यस्तापत्रयविवर्जितः ॥ विष्णुलोकमवाप्येह मोदन्ते विष्णुना सह ॥ इति निर्जलैकादशी ॥ अथाषाढशुक्लैकादशी हरिशयनी ॥ तत्र लक्ष्मीनारायणमूर्तिं सौवर्णीं पूज्य रात्रौ जागरोत्सवं कुर्यात् ॥ पुराणसमुच्चये ॥ आषाढस्य सिते पक्षे एकादश्यामुपोषितः ॥ स्थापयेत्प्रतिमां विष्णोः शंखचक्रगदाधराम् ॥ पीताम्बरधरां सौम्यां पर्यंके स्वास्तृते शुभे ॥ शुक्लवस्त्रसमाछन्ने सोपधाने युधिष्ठिर ॥ स्नापयित्वा दधिक्षीरघृतक्षौद्रजलैस्तथा ॥ समालभ्य शुभैर्गंधैर्धूपैर्वस्त्रैरलंकृताम् ॥ पूजितां कुंकुमैः शुक्लैर्मंत्रेणानेन पाण्डव ॥ मंत्रश्च सुप्ते त्वयि जगन्नाथ जगत्सुप्तं भवेदिति ॥ विबुद्धे त्वयि बुद्धं तु जगत्सर्वं चराचरमिति ॥ एवं संपूज्य देवस्याग्रे चातुर्मास्यव्रतं कुर्यात् ॥ तदुक्तं भारते ॥ एकादश्यां तु गृह्णीयात्संक्रांतौ कर्कटस्य च ॥ आषाढ्यां वा नरो भक्त्या चातुर्मास्योदितं व्रतमिति ॥ व्रतारंभे मंत्रः सनत्कुमारसंहितायाम् ॥ इदं व्रतं मया देव गृहीतं पुरतस्तव ॥ निर्विघ्नं सिद्धिमायातु प्रसन्ने त्वयि केशव ॥ गृहीतेऽस्मिन् व्रते देव यद्यपूर्णे म्रियाम्यहम् ॥ तन्मे भवतु संपूर्णं त्वत्प्रसादाज्जनार्दन ॥

इति शयनी ॥ अथ भाद्रशुक्लैकादश्यां ॥ शयने का दश्यां शिवपूजोत्सवादि कुर्यात् तदेव भविष्ये
मासे भाद्रपदे मासि एकादश्यां सिते हनि ॥ कटदानं भवेद्विष्णो र्महापूजा प्रवर्तये दिति ॥ क
टदानं पार्श्वपरिवर्तनम् ॥ अथ कार्तिक शुक्लैकादश्यां ॥ तत्र देवपूजा जागरोत्सवादिभिर्मन्त्रेण प्र
बोध्य रथयात्रोत्सवं कुर्यात् ॥ तदेव ब्रह्मपुराणे ॥ एकादश्यां च शुक्लायां कार्तिके मासि केशव-
म् ॥ प्रसुप्तं बोधयेद्रात्रौ श्रद्धाभक्तिसमन्वितः ॥ नृत्यैर्गीतैस्तथा वाद्यैर्ऋग्यजुःसाममंगलैः ॥
स्तोत्रैश्च विविधैः स्तुत्वा पूजयेद्दहरोच्छुभैः ॥ होमैर्भक्ष्यैः प्रयैश्च फलैश्च रक्तपायसैः ॥
द्वयाभ्यां श्वेतरक्ताभ्यां चंदनाभ्यां च सर्वदा ॥ कुंकुमालक्तकाभ्यां च रक्तसूत्रैस्स्वकंकणैः ॥ त
स्यां रात्र्यां व्यतीतायां द्वादश्यामरुणोदये ॥ आदौ घृतेन क्षवेण मधुना स्नापयेत्ततः ॥ द
ध्ना क्षीरेण च ततः पंचगव्येन शास्त्रवित् ॥ उद्वर्तनं माषचूर्णं मसूरामलकानि च ॥ सर्षपा
श्च प्रियंगुश्च मातुलुंगागरुस्तथा ॥ सर्वौषध्यस्सर्वगंधाः सर्वबीजानि कांचनम् ॥ मंगला
नि यथाकामं रत्नानि च कुशोदकम् ॥ एवं संस्नाप्य देवेशं दद्याद्गोरोचनां शुभाम् ॥ नवस्तुक

लक्षणा देया यथाम्नाता स्वलंकृता ॥ जाती प्रसव संयुक्ता सफलाश्च सकांचना ॥ सुरभ्या
हू वेद शब्देन वीणा वेणु रवेण च ॥ एवं संस्नाप्य गोविंदं त्वनुलिप्तं स्वलंकृतम् ॥ सुवास
सं पूजयेच्च सुमनोभिः सकुंकुमैः ॥ धूपैर्दीपैश्च नैवेद्यैश्च पायसेन च भूरिणा ॥ ब्राह्मणाः पू
जनीयाश्च विस्त्रो रौप्याश्च मूर्तयः ॥ यत्तु शिष्टान्नतं पश्चाद्दीत्तव्यं ब्राह्मणैः सह ॥ इति
भविष्येऽपि ॥ कार्त्तिके शुक्लपक्षे तु एकादश्यां पूजा सुत ॥ मंत्रेणानेन राजेन्द्र देवमुत्थापये
द्विजः ॥ मंत्रश्च ॥ इदं विष्णुर्विचक्रमे इति ॥ वैदिकः ॥ पौराणिकास्तु ॥ ब्रह्मेन्द्ररुद्राग्निकुबेरसूर्य
सोमादिभिर्वन्दितवन्दनीय ॥ बुध्यस्व देवेश जगन्निवास मंत्रप्रभावेन सुखेन देव ॥ इदं
च द्वादशी देव ॥ अपरश्च मंत्रः ॥ उत्तिष्ठोत्तिष्ठ गोविंद त्यज निद्रां जगत्पते ॥ त्वयि सुप्ते जग
त्सुप्तमुत्थिते चोत्थितं जगत् ॥ उत्थापनं च दिवैव कार्य्यम् ॥ तदपि रेवत्यंतचरणयो-
गे तदभावे केवलतिथौ संध्याकाले ॥ तथा च भविष्ये ॥ आभाकाशितपक्षेषु मैत्रश्रवणरे-
वती ॥ आदिमध्यावसानेषु प्रस्वापावर्तनोत्सवाः ॥ एतच्च संभवाभिप्रायेण ज्ञेयम् ॥

तथाच ॥ निशि स्वापो दिवो त्थानं संध्यायां परिवर्त्तनम् ॥ अन्यत्र पादयोगेऽपि द्वादश्या मेव कारयेदिति ॥ विष्णुधर्मोत्तरे ॥ विष्णोर्दिवा न स्वपिच नच रात्रौ प्रबुध्यते ॥ द्वादशी ऋक्षसंयोग पादयोगो न कारण मिति ॥ रात्रौ नक्षत्रादियोग लाभेऽपि दिवैवो त्थापन मित्यर्थः ॥ पूर्वोक्त मंत्रेण देव मुत्थाप्य पुष्पांजलिं दद्यादनेनच ॥ चरणपवित्र मिति वैदिकः ॥ पौराणिकस्तु ॥ गता मेघा वियच्चैव निर्म्मलं निर्म्मला दिशः ॥ शारदानिच पुष्पाणि गृह्हाण मम केशव ॥ महापूर्य रथेणो स्थिते विष्णौ तं स्यंदने संस्थाप्य रात्रौ जागरणादि विधाय प्रभाते ब्राह्मणान्भोज्य ब्राह्मणाग्रे पूर्व कृतं चातुर्म्मास्य व्रतं प्रोच्य विप्रेभ्यो दक्षिणां दत्वा श्रीनाथं प्रार्थये दनेन ॥ मन्त्रः ॥ इदं व्रतं मया देव कृतं प्रीत्यै तव प्रभो ॥ न्यूनं संपूर्णतां यातु त्वत्प्रसादाज्जनार्दन ॥ इति प्रार्थ्य स्वयमपि भुंजीत ॥ इति वोधिन्यैकादशी ॥ अथ फाल्गुन शुक्लैकादशी आमर्दकीत्युच्यते ॥ तत्रामर्द्दक स्थितं विष्णुं संपूज्य दक्षिणां दद्यात् ॥ तदेव भविष्ये ॥ फाल्गुने मासि शुक्लाया मेकादश्यां जनार्दनः ॥

वसत्यामलकी वृक्षे लक्ष्म्या सह वनस्पतिं॥ ततस्तं पूज्य विधिवद्भक्त्या कुर्यात्प्रदक्षिणा
म्॥ उपोष्य विधिवत्कल्पं विष्णुलोके महीयते॥ इति वृद्धनिर्णयः॥ आमलक मूले वि-
ष्णुं संस्थाप्य प्रदक्षिणाः कुर्यात् अष्टोत्तरशतम्॥ रत्नैः सुवर्णैः रूप्यैर्वा फलैरन्यैर्धवा-
दिभिर्वा॥ तथाच॥ यश्चामलकशाख्यायां गृहे चैवाधिवास्य च॥ विष्णोः प्रदक्षि-
णां कुर्यात्तस्य स्यादधिकं फलमिति॥ इत्यामर्दकी सर्वास्वेकादशीषु तिथिपतित्वे-
न शिवः पूज्येति दिक्॥ इत्येकादशीनिर्णयः॥ अथ द्वादशी निर्णीयते॥ द्वादश्युपवासादि-
षु एकादशीयुतैव ग्राह्या युग्मवाक्यात्॥ त्रयोदशीवेधस्तु निषेधः कूर्मपुराणे॥ ना-
गविद्धा तु या षष्ठी रुद्रविद्धो दिवाकरः॥ कामविद्धो भवेद्विष्णुर्न ग्राह्यास्ते तु वासराः
॥ विष्णुर्द्वादशी॥ काम त्रयोदशी॥ यदा भवेदल्पा द्वादशी पारणादिने। उष-
ः काले द्वयं कुर्यात्प्रातर्माध्याह्निकं तदिति॥ स्कांदे॥ चैत्रशुक्लद्वादश्यां दमन
कार्पणम्॥ आषाढशुक्लद्वादश्यां तप्तमुद्राधारणम्॥ तद्ब्राह्मणविषयमेव-

निरपवादः ॥ तथाच पाद्मे ॥ यथाप्रस्थानजं कार्य्यं गर्हितं सर्वकर्म्मसु एवं चक्रांकितो वि-
प्रः सर्वकर्म्मसु गर्हितः । विप्रविषये निरापरकानि बहूनि वाक्यान्युपलभ्यंते विस्तरभि-
यान लिखितानि ॥ अत एव शूद्राणां प्राशस्त्यं धर्म्मसेवेति दिक् ॥ श्रावण शुक्ल द्वादश्यां प-
वित्रारोपणं कार्य्यम् ॥ पाद्मे ॥ ऊर्ज्जे व्रतं मधौ दोलां श्रावणे तंतुपूजनम् ॥ चैत्रे च दमना
रोपमकुर्वाणः पतत्यधः ॥ पवित्रारोपणं विप्राश्चक्रावणे न भवेद्यदि ॥ कार्त्तिक्यवधि शु-
क्ला कर्त्तव्यमिति नारदः । शुक्लार्क द्वादशी ॥ भाद्र शुक्ल द्वादश्यां मध्याह्ने वामनावता-
रः ॥ तत्र श्रवणयोगे उपवासः इदं व्रतं काम्यम् ॥ विष्णुधर्म्मोत्तरे ॥ श्रवण द्वादशी योगे बु-
धवारो भवेद्यदि ॥ अत्यंतमहती नाम द्वादशी सा प्रकीर्त्तिता ॥ स्नानं जाप्यं तथा दा-
नं होमं श्राद्धं सुरार्च्चनम् ॥ सर्वमक्षयमाप्नोति तस्यां भृगुकुलोद्वहेति ॥ नारदीयेऽपि ॥
द्वादश्यामुपवासोऽत्र त्रयोदश्यां तु पारणम् ॥ निषिद्धमपि कर्त्तव्यमित्याज्ञा पारमे-
श्वरी ॥ श्रवण द्वादशी व्रतं श्रवणैकादशी व्रतं कार्य्यमिति रामकौतुके ॥ भविष्ये ॥

संशि॰ एकादशी मुपोष्यैव द्वादशीं समुपोषयेत् ॥ न तत्र विधि लोपः स्यादु भयोर्दैवतं हरिः
४९४ ॥ नारदीये ॥ यदा न प्राप्यते ऋक्षं द्वादश्यां श्रवणं क्वचित् ॥ एकादशी तदा पोष्या पाप
घ्नी श्रवणान्विते ति ॥ यदैकादशी श्रवण युक्ता चेत्तदा एकादशी व्रतं श्रवण द्वादशी व्र-
तं द्वयमेव कृतं भवति ॥ तदेव मात्स्ये ॥ द्वादश्यां श्रवणस्पर्शे चेत्स्पृशेदेकादशी यदि ॥
स एव वैष्णवो योगो विष्णु शृंखल संज्ञकः ॥ तस्मिन्नुपोष्य विधिवन्नरः संक्षीण
कल्मषः ॥ प्राप्नोत्यनुत्तमां सिद्धिं पुनरावृत्ति वर्ज्जितामिति ॥ व्रत द्वय प्राप्तौ ॥
स्कान्दे ॥ प्रथमेन्हि फलाहारी निराहारी परेहनि ॥ उपोष्यैकादशीं मोहात्पार-
णं श्रवणे यदि ॥ करोति हंति तत्पुण्यं द्वादश द्वादशी भवमिति ॥ तदा तु द्विती-
य दिने श्रवणस्पर्श ईते तदा ऋक्षांते नापेक्ष्य (णीयः) ॥ ऋक्षांते पारणं कुर्या
द्विना श्रवण रोहिणीमिति वचनात् ॥ अन्ये तु ॥ भाभाकासित पक्षेषु मैत्र श्रव-
ण रेवती ॥ संगमे नहि भोक्तव्यं द्वादश द्वादशी क्षयादिति ॥ दिन द्वये तत्सत्वे-

उदयं तद्युक्ता ग्राह्या ॥ उदयव्यापिनी ग्राह्या श्रवणा द्वादशी व्रतेति वृहन्नारदीयात् ॥
श्रवणयोगे तु दशमी विद्धापि ग्राह्याग्निपुराणात् ॥ एतावांस्तु विशेषः ॥ श्रवणद्वा-
दश्यां वामनावतारः ॥ कृष्णपूजा श्रवणद्वादश्यां जनार्द्दनं पूजयेदिति ॥ अन्नजपहोमा-
दिकं कृत्वा सौवर्णीं हरिप्रतिमां संप्रतिष्ठितां दध्योदनं जलपूर्णं कुम्भं उपानहौ छत्रं
च विभाय दद्यात् ॥ इति श्रवणद्वादशी ॥ अस्यामेव इन्द्रध्वजोत्थापनं कुर्य्यात् ॥ यदुक्तं मा-
त्स्ये ॥ द्वादश्यां च सिते पक्षे मासि भाद्रपदे तथा ॥ शक्रमुत्थापयेद्राजा विष्णुर्नक्षत्र-
ये सतीति ॥ अथ कार्तिककृष्णद्वादश्यां ॥ गोधूलिकाकालव्यापिन्यां गोवत्सपूजा कार्य्या
॥ तस्याः स्वकाल एव विधानात् ॥ दिनद्वये तत्कालव्यापित्वे पूर्वैव ॥ तदुक्तं ॥ वत्सपू-
जा पटश्चैव कर्तव्या प्रथमेऽहनि । इति वत्सद्वादशी ॥ अथ माघकृष्णद्वादशी ॥ तत्र तिलैः
स्नात्वा विष्णुमभ्यर्च्य तिलैर्दीपं दत्वा तिलतैलेन नैवेद्यं होमदानानि तिलतैलेनै-
व कृत्वा तिलान्भक्षयेत् ॥ तदेव मात्स्ये ॥ माघे तु कृष्णद्वादश्यां यमो हि भगवान्पुरा ।

शि तिलानुत्था दया सास तपः कृत्वातु दारुणाम् ॥ राजा दशरथो भूमौ तस्मात्तानवतारयत्
७ ॥ तिलानासाधिपत्येतु विलुस्तत्र कृतस्सुरैः ॥ तस्यामुपोषितः स्नातस्तिलैस्तस्यांयजे
द्धरिम् ॥ तिलतैलेन दीपाश्च देया देवगृहेषुच ॥ निवेदयेत्तिलानेव होतव्याश्च तथा
तिलाः ॥ तिलान्दत्वाच विप्रेभ्यो भक्षयित्वा तिलानिति ॥ इतितिलद्वादशी ॥ माघस्यो भ-
य द्वादश्यां तैलाभ्यंगो न कार्य्यः ॥ यदुक्तं मात्स्ये ॥ उपाध्ये कादशी माघे द्वादश्यां तैलसेव-
नात् कुरूपं प्राप्तवान्देहे पुराप्येकः पुरूरवा इति ॥ सर्वास्वपि द्वादशीषु विल्वफलं दंत-
काष्ठंच वर्ज्जयेदित्यलम् ॥ इतिद्वादशीनिर्णयः ॥ अथत्रयोदशीनिर्णीयते ॥ सातु ॥ शुक्लात्र
यो दशी पूर्वा परा कृष्णा त्रयोदशी तिमाधवीये ॥ एषातु प्रदोषव्यापिनी दिनद्वये व्याप्ता व-
याप्तौ वा पूर्वा ॥ सुमन्तुः ॥ त्रयोदशी तु कर्त्तव्या द्वादशी सहिता पुनः ॥ नक्षत्रखंडेऽपि ॥
पक्षद्वये त्रयोदश्यां निराहारो भवेद्दिवा ॥ घटिकात्रिरस्तमयात्पूर्वे स्नानं समाचरेत् ॥
अथ चैत्रशुक्लत्रयोदशी ॥ अनंगत्रयोदशी ॥ साच पूर्वे वापो ष्या ॥ तथाच संवर्त्तः ॥ भविष्येऽपि

॥ अस्यां स्नात्वा त्रयोदश्यां मदनं कारयेत्‌ नवं लिखेत्‌ ॥ सिंदूररजनीरंगे रतिप्रीति सम-
न्वितम्‌ ॥ कामदेवं वसंतं च वाजि चक्रं वृषध्वजम्‌ ॥ मध्याह्ने पूजयेद्भक्त्या भक्ष्यैर्गं
धैस्तु गंधर्वैः ॥ मन्त्रेणानेन कौंतेय नवनार्या समान्वितः ॥ मंत्रः ॥ नमो रामाय कामा
य देव देवस्य मूर्तये ॥ ब्रह्म विष्णु शिवेन्द्राणां नमः क्षेमकराय वै ॥ इति ॥ ततस्तस्याग्र
तो देया मोदकाघृतपाचिताः ॥ नाना प्रकारभक्ष्याश्च कामो मे प्रीयतामिति ॥ स्वप
तिं पूजयेन्नारी वस्त्रमाल्य विभूषणैः ॥ कामोयमिति संचिंत्य प्रहृष्टेनांतरात्मना ॥
रात्रौ जागरणं कुर्यात्सुखरात्रिर्यदा भवेत्‌ ॥ पूजयेद्द्विजदांपत्यं वस्त्रालंकार चंदनैः
॥ एवं यः कुरुते पार्थ वर्षे वर्षे महोत्सवम्‌ ॥ वसंत समये प्राप्ते हृष्टः पुष्टः सदा भवेत्‌ ॥
कौर्म्मे विशेषः ॥ मधौ शुक्लात्रयोदश्यां मदनं चंदनात्मकम्‌ ॥ कृत्वा संपूज्य यत्नेन वी-
जयेद्व्यजनेन च ॥ ततः संधुक्षितः कामः पुत्रपौत्रसमृद्धिदः ॥ इति ॥ अथ भाद्रकृष्णत्रयोदशी
युगादिः ॥ शुक्लचांद्रमासाभिप्रायेण ॥ अत्र मधुघृत सहितेन पायसेन श्राद्धं कुर्यात्‌ ॥

तथाच पितृगाथा ॥ अपिनस्सकुलेजायाद्योनोदद्यात्त्रयोदशीम्॥ पायसंमधुसर्पिर्भ्यां
वर्षासुचमघासुचेति ॥ अथ कार्तिकशुक्लत्रयोदशी ॥ तत्रयमदीपंरात्रौवहिर्दद्यात्॥ तथा
चस्कान्दे ॥ कार्तिकस्यासितेपक्षेत्रयोदश्यांनिशामुखे ॥ यमदीपंवहिर्दद्यादपमृत्यु-
र्विनश्यति ॥ दीपदानमंत्रश्च ॥ मृत्युनापाशदंडाभ्यांकालस्श्यामलयासह ॥ त्रयो-
दश्यांदीपदानात्सूर्यजःप्रीयतामिति ॥ अत्रवंताकानिनभक्षयेत् ॥ सर्वासुत्रयोद-
शीषुअनंगःपूज्यःतिथिपतित्वात् ॥ इतित्रयोदशीनिर्णयः ॥ अथ चतुर्दशीनिर्णीयते ॥ सा
चकृष्णापूर्वाशुक्लोत्तरा कृष्णपक्षेऽष्टमीचैवकृष्णपक्षेचतुर्दशी ॥ पूर्वविद्धैवकर्तव्याप
रविद्धानकुत्रचित् व्यापस्तंबोक्तेः ॥ शुक्लपक्षेऽष्टमीचैवशुक्लपक्षेचतुर्दशी ॥ पूर्ववि
द्धानकर्तव्याकर्तव्यापरसंयुता ॥ इतिबृहस्पतिः इतिचतुर्दशीसामान्यनिर्णयः अथविशे
षः ॥ अथचैत्रशुक्लचतुर्दशी ॥ तस्यांकुंकुमागरुकर्पूरादिभिर्दमनकेनचशिवपूजा ॥
तदेवदेवीपुराणे ॥ चतुर्दश्यांतुकर्पूरचंदनागरुकुंकुमैः ॥ वस्त्रादिमणिपूजाचकर्तव्या

महती शिव ॥ वितानध्वजचत्रांच देयं पूज्यास्तु मानवः ॥ महत्सुराधमवाप्नोति कल्पस्मे-
धशताधिकमिति ॥ अन्यच्च मधुमासेतु संप्राप्ते शुक्लपक्षे चतुर्दशी ॥ प्रोक्ता दमनपूजे-
ति सिद्दिदा तु महोत्सवेति ॥ लिंगपुराणे विशेषः ॥ दमनस्तु त्रयोदश्यां तालवृंतानले नतु
हंसयानसमारूढ कामसंत्रप्रवर्द्धितः ॥ नारी शिविर्जितश्चैव त्रैलोक्योन्मादमाचर-
न् ॥ तन्निर्वापणकार्येन चतुर्दश्यां महामुने ॥ ततोत्सवं मया प्रोक्तानाव्धोष्वायनरा-
स्तथा ॥ कुर्वंति कर्दमेनैव आत्मनस्त्वनुलेपनं । निर्वापितानंगपीडा भवत्येव समाहू-
या ॥ एतदर्थं सदा कार्य्यं कर्दमेन च क्रीडनम् ॥ प्रातः प्रहरमात्रं च कर्त्तव्यं क्रीडनं नरैः ॥ प्र-
स्नात्यंगं ततः कृत्वा गंधमाल्यानुलेपनम् ॥ वस्त्रतांबूलगीतादिरथ्या हृद्देषु चाचरेत् ॥
चर्च्चरी घोषिते श्चैव कृत्वा नृत्यं शिवाग्रतः ॥ सर्वकामसमृद्धस्तु वसेच्छिवपुरे नरः ॥ स्वयं
तु लिंगमेकं तु दृष्ट्वा तस्मिन् दिने नरः ॥ ज्ञानं लब्ध्वा नरः सम्यक् शिव एव न संशयः ॥ इ-
ति चैत्रचतुर्दशी ॥ अथ वैशाखशुक्लचतुर्दशी ॥ सा च प्रदोषव्यापिनी ॥ तथा च स्कान्दे ॥ वैशाखस्य-

चतुर्दश्यां सोमवारे निलसंके ॥ अवतारो नृसिंहस्य प्रदोषसमये द्विजा इति ॥ अनि-
लर्क्षः स्वाती ॥ स्वातीयोगप्राधान्यं वैसवा नास्ति ॥ अथ ज्येष्ठशुक्लचतुर्दशी ॥ तस्मिन्दिने प-
चतपाः सायं प्रीतये हिरण्यं धेनुं दद्यात् ॥ तदेव मात्स्ये ॥ ज्येष्ठे पंचतपाः सायं हेम-
धेनुप्रदो दिवम् ॥ यात्यष्टमी चतुर्दश्योरुद्रव्रतमिदं स्मृतमिति ॥ अथ भाद्रशुक्लचतुर्द-
शी ॥ तस्यामनंतव्रतं सा चोदयव्यापिनी ग्राह्या ॥ स्कान्दे मुहूर्तमपि चेद्भाद्रे पौर्णमास्यां
चतुर्दशी ॥ तां संपूर्णां विदुस्तस्यां पूजयेद्विष्णुमव्ययम् ॥ मुहूर्तमपि त्रिमुहूर्तप्रशं-
सापरम् ॥ तेन त्रिमुहूर्तः मुख्यः कल्पः द्विमुहूर्तो नुकल्प इति माधवः ॥ अत्र विधिः ॥ पक्वान्न-
स्थं घृतं नैव गोधूमान्नं प्रयत्नतः ॥ अर्धं विप्राय दातव्यमर्धमात्मनि भोजयेदिति ॥ च-
तुर्दशग्रंथियुक्तसूत्रं वामे स्त्री दक्षिणे पुमान् ॥ करे धारयेदिति । अनंतप्रतिमां चन्दनादि-
ना सर्पमूर्तिरूपेण पूजयेत् ॥ इदं व्रतं काम्यम्फलश्रवणात् ॥ निर्णयभास्करेऽपि ॥ अनंत-
रूपेण विभर्षि पृथ्वीमनंतलक्ष्मीवरदोऽसि तुष्टः ॥ अनंतलोकान्प्रददासि लोके भोऽनं-

न्तरूपिन् कुरुमे प्रसादम् ॥ इत्यनंतपूजामंत्रः ॥ अनंतसंसारमहासमुद्रे मग्नान्समभ्युद्धर
वासुदेव ॥ अनंतरूपे विनियोजयस्व अनंतसूत्राय नमो नमस्ते ॥ इति नैवेद्यादिदानमंत्रः
अनंतकामदं देवं सर्वकामफलप्रदम् ॥ अनंतधर्म्ममयं डोरं पुत्रपौत्रविवर्द्धनम् ॥ बध्ना-
मीति शेषः ॥ अनेन चतुर्दशग्रंथिमयं डोरकं बध्नीयात् ॥ इत्यनंतचतुर्दशी ॥ अथ कार्त्तिक
कृष्णचतुर्दशी ॥ यमचतुर्दशी सैव नरकेति ॥ ब्राह्ममुहूर्त्ते प्रातःकालव्यापिनी ग्राह्या ॥ अ-
त्रोषस्यभ्यंगस्नानं च कृत्वा ॥ धर्म्मराजतर्प्पणमाषपत्राशनं देवप्रतिमापूजनं दीपदा-
नादिकं कुर्य्यात् ॥ तदेव भविष्ये ॥ कार्त्तिके कृष्णपक्षे तु चतुर्दश्यामिनोदये ॥ अवश्यमेव क-
र्त्तव्यं स्नानं नरकभीरुभिरिति ॥ इनोऽत्र चंद्रः ॥ यदि पूर्वेन्हि पंच घटिका त्रयोदशी दर्शः
पंचपंचाशत् ॥ एवं संभवे त्रयोदशीमध्येऽरुणोदये स्नायात् ॥ ततोऽन्यत्र स्नाननिषे-
धात् ॥ तथा च यमः ॥ अरुणोदयतोऽन्यत्र रिक्तायां स्नाति यो नरः ॥ तस्याब्दिकभवो धर्मो न-
श्यत्येव न संशयः ॥ अत्र पर्वणि तिलतैलस्नानम् ॥ तदेव भविष्ये ॥ आश्विने कृष्णपक्षे तु च-

धि तुर्दश्यां विधूदये ॥ तिल तैलेन कर्तव्यं स्नानं नरकभीरुभिरिति ॥ आश्विन शब्दो ऽत्र चंद्रमा-
 सपरः ॥ ब्रह्मपुराणे ॥ तैले लक्ष्मी जले गंगा दीप माल्यां चतुर्दशी ॥ प्रातः स्नानं तु यः कुर्या-
द्यमलोकं न पश्यति ॥ प्रातश्च तुर्घटिका ऽरुणोदय काल इति ॥ संवत्सर प्रदीपे ॥ पाद्मे ॥ अ-
पामार्ग मथो तुंबी प्रपुन्नाट मथापरम् ॥ भ्रामये त्स्नानमध्ये तु नरकस्य क्षयाय वै ॥
अपामार्गस्य पत्रवान्भ्रामयेच्छिरसोपरि ॥ ततश्च तर्प्पणं कार्य्यं धर्म्मराजस्य नामभिः
॥ अपामार्ग भ्रामण मंत्रस्तु ॥ सीता लोष्ठ समायुक्त सकंटक दलान्वित ॥ हर पापमपामार्ग
भ्राम्यमाणः पुनः पुनः ॥ इति यम तर्प्पणन्तु सव्येन कार्य्यं ॥ यतस्तस्य देवत्वं पितृत्वं च ॥
स्कान्दे ॥ दक्षिणाभिमुखो भूत्वा तिलैस्सव्यं समाहितः ॥ देव तीर्थेन देवत्वात्तिलैः प्रेता-
धिपो यतः ॥ यमाय धर्म्मराजायेति चतुर्दश नामभिस्तर्प्पणं विधेयम् ॥ ततः प्रदोष सम-
ये दीपान्दद्यान्मनोरमान् ॥ ब्रह्म विष्णु शिवादीनां भवनेषु मठेषु च ॥ प्राकारोद्या-
न वापीषु प्रतोलीनिष्कुटेषु च ॥ मंदुरासु विविक्तासु हस्तिशालासु चैव हि ॥ लैङ्गे ॥ 

ततः श्वेतचतुर्दश्यां भोजयित्वा द्विजोत्तमान्॥ शैवान्विप्रांस्त्वथ परान् शिवलोके-
महीयते॥ दानं दत्वा तु तेभ्यश्च यमलोकं न गच्छति॥ माघपत्रस्य शाकं तु भुक्त्वा-
तत्र दिने नरः॥ श्वेताचतुर्दशीकाले सर्वपापैः प्रमुच्यते॥ नक्तं श्वेतचतुर्दश्यां यः कुर्यात्कि-
वर्षीतये॥ न तत्क्रतुशतेनापि प्राप्यते पुण्यमीदृशम्॥ कुमारी वंदुकान्पूज्य तथा शैवां-
स्तपोधनान्॥ राजसूयफलं तेन प्राप्यते नात्र संशयः॥ इति॥ कार्त्तिकशुक्लचतुर्दश्यां ब्राह्मे-
मुहूर्ते विश्वेश्वरयात्रा॥ सैव पाषाणचतुर्दशी॥ देवीपुराणे॥ कार्त्तिके शुक्लपक्षे तु या पाषाणचतु-
र्दशी॥ तस्यामाराधयन्गौरीं नक्तं पाषाणभक्षकः॥ ऐश्वर्यसौख्यसौभाग्यरूपा-
णि प्राप्नुयान्नरः॥ इति॥ मार्गशुक्लचतुर्दश्यां पिशाचमोचनयात्रा॥ अथ माघकृष्णचतुर्दशी
नरकाख्या॥ तत्रानुदिते स्नात्वा यमं संपूज्य सप्तभिर्नामभिः सप्तति लोदकांजलिं द-
त्वा तिलहोमं च कृत्वा पितृभ्यः श्राद्धं च कृत्वा ब्राह्मणेभ्यः कृशरभोजनं च दत्वा स्व-
यमपि कृशरभोजनं कृत्वा सर्वपापैः प्रमुच्यते॥ ब्राह्मांडे॥ माघकृष्णचतुर्दश्यां विशेषे-

श्रि<br>७५

वान्मरीचयः ॥ निष्क्रेदस्तिलकाकारा प्रद्यात श्रोऽथसहस्तः ॥ अनकाम्युदितकालस-
त्सुतारां शुकेष्वपि ॥ राज्ञा च तत्र संपूज्यो यमः प्रलयभास्करः ॥ निमित्तं पंचतारेयं तत्र श्रो-
त्रं यतो भुवि ॥ तदासापि निशा ज्ञेया तारा रात्रिस्सुदारुणा ॥ तन्नो पोष्य त्रयोदश्यां सं-
प्राप्ते तु निशाक्षये ॥ स्नात्वा पूज्यो जगद्भर्ता हरिः पूज्याश्च तारकाः ॥ नैवेद्यैर्विविधा-
कारैः कृशरेण तु भूरिणा ॥ वह्निः पूज्यश्च भगवान्घृताक्तैस्तिलतण्डुलैः ॥ नमः श्रण-
वसंयुक्तान्स तिलांश्च जलाञ्जलिम् ॥ यमाय धर्मराजाय मृत्यवे चान्तकाय च
॥ वैवस्वताय कालाय सर्वप्राणहराय च ॥ सप्त सप्त प्रदेयानि पृथक् तेषां तिलोदकम् ॥
कृशरं भोजनीयाश्च ब्राह्मणास्तदनन्तरम् ॥ श्राद्धं दत्वा पितृभ्यश्च भुक्त्वा स्यात्सर्वपात-
कैः ॥ ततो विभज्य बंधुभ्यः कृशरं लभते स्वयम् पीत्यरंती चतुर्दशी ॥ महाशिवरात्रिर्वि-
धीयते ॥ फाल्गुन कृष्णचतुर्दशी शिवरात्रिस्ता निशीथव्यापिनी ॥ ईशानसंहितायाम् ॥
तपस्ये कृष्णभूताच शिवरात्रिः प्रकीर्त्तिता ॥ सहानिशान्विता यां तु तत्र कुर्याद्दिवं व्रत । ३०१

स्मृति मिति ॥ दिन द्वये निशी था व्याप्तौ तु पूर्वा ॥ कृष्णपक्षे ऽष्टमी चैव त्याज्या पक्षं तु नोक्तेः ॥ अथ पर-
४७६ विधायकानि वाक्यानि ॥ स्कान्दे ॥ चतुर्दशी च दर्शश्च एकीभूय यदा भवेत् ॥ तदोपवा-
सं कुर्वीत न च कामयुते हनि ॥ अपरंच ॥ माघासिते भूत दिनं हि राजन् उपैति योगं यदि पं-
च दश्या ॥ जयाप्रयुक्तां नहि जातु कुर्य्याच्छिवस्य रात्रिं प्रियकृच्छिवस्य ॥ अत्र पूर्व वि-
द्धा प्रति पादके वाक्ये ॥ पूर्वं विद्धाया मर्द्धरात्रि युतायां चतुर्दश्या मुपवासः ॥ पर विद्धायामर्द्ध-
रात्रि व्यापिन्यां चतुर्दश्यां उपवासः ॥ उभय त्रार्द्ध रात्रि व्यापिन्यां पर विद्धाया मेवोपवास
इति सिद्धांतः ॥ यत्तु प्रदोष व्यापिनी ग्राह्या शिव रात्रिः शिवप्रिये ॥ रात्रौ जागरणं यस्मात्त-
स्मात्तस्या मुपोषणम् ॥ इदं वचनं अर्द्ध रात्र चतुर्दश्य भावे वेदितव्यम् ॥ यदुक्तं ॥ यदा न स्या-
च्छिवरात्रिरर्द्धरात्र्यां तदानघ ॥ प्रदोष व्यापिनी ग्राह्या तदा शिव तस्मात्तिथिः ॥ अन्यानि
प्रदोष व्यापिनी विधायि कानि का क्यानि ॥ अर्द्ध रात्रा भावे वेदितव्यानि ॥ माधवमतेऽपि ॥ प्र-
दोष व्यापित्वे सति अर्द्ध रात्र व्यापिनी सोत्तमा ॥ अर्द्ध रात्र व्यापिनी मध्यमा प्रदोष व्यापि- ४७६

नीन्यूनेति सिद्धांतः ॥ अत्रपारणविषये ॥ तिथिमध्ये पारणं श्रेष्ठतरम् ॥ तिथ्यंते पारणं कु
र्य्याद्विनाशिव चतुर्द्दशी मिति स्कान्दोक्तेः ॥ साच शिवो पासकानां नित्या ॥ परात्परतरं ना-
स्ति शिव रात्रिः परात्परम् ॥ न पूजयति भक्त्येदं रुद्रं त्रिभुवनेश्वरम् ॥ जन्तुर्जन्म सहस्रेषु-
जायते नात्र संशयः ॥ शिवभक्तानां नित्यम् काम्यं त्वन्येषां ॥ शिव रात्रि व्रतं नाम सर्वपाप
प्रणाशनम् ॥ आचांडालमनुष्याणां भक्ति मुक्ति प्रदायकम् ॥ अत्रवाक्यानि ग्रंथ भूयस्त्वा
न्न लिखितानि ॥ इति चतुर्द्दशी निर्णयः ॥ अथ पूर्णिमा निर्णीयते ॥ सावट सावित्री व्यतिरिक्त व्र-
तादिषु परान्वितैव कार्य्या ॥ भूत विद्धा न कर्तव्या दर्शः पूर्णा कदाचन ॥ वर्जयित्वा मुनिश्रेष्ठ
सावित्री व्रत मुत्तमम् ॥ इति ब्रह्मवैवर्ते ॥ सावित्री व्रतं भाद्रपद पूर्णायाम् ॥ अथ चैत्रपौर्णमासी
॥ तत्र चित्रायुक्तायां चित्र वस्त्रं दद्यात् ॥ तदुक्तं विष्णुस्मृतौ ॥ चैत्री चित्रायुता चेत्स्यात्सा हि पुण्य-
तमा स्मृता ॥ चित्रवस्त्र प्रदानेन सौभाग्य मवाप्नुयान्नरः ॥ ब्रह्मपुराणे विशेषः ॥ मंदे वार्के गुरौ
वापि वारेष्वेतेषु चैत्रकी ॥ तत्राप्लव मेधिकं पुण्यं स्नानेन लभते नरः ॥ दानमक्षयतां याति

पितॄणां तर्पणं तथा ॥ अत्र दमनकेन सर्वान्देवानर्चयेत् ॥ संवत्सरकृतपूजायाः फलं प्रा-
प्नोति ॥ तथैव वायुपुराणे ॥ संवत्सरकृतार्चायाः सा फल्या यावखिलान्सुरान् दमनेनार्चयेच्चै-
त्र्यां विशेषेण सदा प्रियमिति ॥ अथ वैशाखपूर्णिमा तत्रा जिनदानं कुर्य्यात् ॥ यदाह विष्णुः
॥ कृष्णाजिने तिलान्कृत्वा हिरण्यं मधुसर्पिषी ॥ ददाति यस्तु विप्राय सर्वं तरति दुष्कृ-
तम् ॥ वैशाख्यां पौर्णमास्यां तु विशाखासु विशेषतः ॥ ससमुद्रगुहा तेन सशैलवन-
कानना ॥ सप्तद्वीपान्विता दत्ता पृथिवी नात्र संशयः ॥ अथ ज्येष्ठपूर्णिमा ॥ तत्र छत्रोपा-
नहानं तिलदानं च ॥ यदाह विष्णुः ॥ ज्येष्ठी ज्येष्ठायुता चेत्स्यात्तद्छत्रोपानहप्रदानेन
नरो नराधिपत्यमाप्नोति ॥ आदित्यपुराणे ॥ ज्येष्ठे मासि तिलान्दद्यात्पौर्णमास्यां विशे-
षतः ॥ अश्वमेधस्य यत्पुण्यं तत्प्राप्नोति न संशय इति ॥ अथाषाढी पूर्णा ॥ तत्र चतुर्द-
श्यामुपोष्य विष्णुपूजनम् ॥ यदुक्तं ब्राह्मे ॥ चतुर्दश्यामुपोष्याथ पौर्णमास्यां यजेद्धरिमि-
ति ॥ अस्यामेवाषाढयुतायामन्नादिदानमक्षयम् ॥ यदाह विष्णुः ॥ आषाढ्यामाषाढ

युतायामन्नपानादि दानमक्षयं भवति ॥ यदा चतुर्दश्यस्त्रा दश नाडिकाधिका भवेत्-
तत्र सावित्री व्रतमपि त्याज्यम् ॥ भूतोऽष्टा दश नाडी भिर्दूषयत्युत्तरां तिथिमिति ॥
स्मृते ॥ अत्र श्राद्धं नित्यम् ॥ पितामहः ॥ अमावास्या व्यतीपात पौर्णमास्यष्टकासु-
च ॥ अत्र श्राद्धमकुर्वाणो नरकं प्रति पद्यते ॥ आषाढी तु कोकिला व्रतोपक्रमे संध्या-
काल व्यापिनी ॥ भविष्ये आषाढपौर्णमास्यां तु सायं काले तु पूज्यते ॥ संकल्पदे-
न्यास सेवं श्रावणेऽत्यहं त्विदं ॥ व्यास पूजायां चोदयिकी त्रिमुहूर्त्ता ॥ विष्णेऽर्धद्व-
तौ ॥ त्रिमुहूर्त्ताधिकं ग्राह्यं पर्व क्षौर प्रणिपतिरिति ॥ अत्र नगरादौ प्रदोषे समये ॥
दीर्घ वंशे ध्वजा वंधनं कृत्वा पूर्वादि वायु विचारः कर्तव्यः ॥ अथ श्रावणी पौर्णिमा ॥ तत्र
पौर्णमास्यां ग्रहण संक्रांति दोष रहितायां उदय काल व्यापिन्यां प्रोष्ठी ऋषि भाद्र-
भवे ऽपि यजुः शाखा ध्यायिनः ॥ उपा कर्म कुर्युः ॥ श्रावण मासस्य श्रवण नक्षत्रे
धनिष्ठान हन्ने वहृचाः ॥ साम वेदिनस्तु श्रावण मासस्य पंचम्यां हस्त युक्तायां कु-

ष्युः ॥ औषधि प्रादुर्भाव गृह्यादि दोषव ह्नितायां च सर्वैषां तुल्य मिति ॥ तदाहृष्य मूलकः ॥ अध्यायानामुपाकर्म श्रावण्यां श्रवणे न वा ॥ हस्तेनौषधि भावे वा पंचम्यां श्रावणस्य तु ॥ उपाकर्मनिरेपक्रमः ॥ अन्ना ध्यायानामिति श्रावणाभिप्रायेण वचनम् ॥ गोभिलः पर्वण्यौदयिके कुर्युः श्रावण्यां तैत्तिरीयकाः ॥ बह्वृचाः श्रवणर्क्षे तु हस्तर्क्षे सामवेदिनः ॥ निगमेऽपि ॥ श्रावण्यां श्रावणी कर्म यथा विधि समाचरेत् ॥ उपाकर्म तु कर्त्तव्यं कर्कटस्थे दिवाकरे ॥ हस्तेन शुक्लपंचम्यां श्रावणे श्रवणे भवेदिति ॥ चतुर्दशी युक्तस्य पर्वणो निषेधाच्च ॥ चतुर्दश्यां समुत्पन्ना वसुरौ मधुकैटभौ वेदान्खौ कुर्वतः पद्मयोने स्तो जहतुः श्रुतीः ॥ हत्वा तावसुरौ देवः पातालतल वासिनौ ॥ आहृत्य ताः श्रुतीस्तस्मै ददौ लोकगुरुः स्वयम् ॥ समाप्तवान् श्रुतीर्ब्रह्मा पर्वण्यौदयिके पुनः ॥ अतो भूत युते तस्मिन्नो पाकरणमिष्यते ॥ आसुरं वर्जयेत्कालं वेदाहरण शंकयेति ॥ यत्तु श्रावणी दुर्गनवमी दूर्वा चैव हुताशनी ॥ पूर्वविद्धा तु कर्त्तव्या शिवरात्रिर्बलेर्दिनमिति ॥ एतस्य श्रावण्यां

विधीयमानं पवित्रारोपणविषयम् ॥ उपाकर्माङ्गभूतमाप्युदाय कश्राद्धविषयं वा ॥ अत्रते त्तिरीयकपदमन्येयामपियजुः शाखिनामुपलक्षकम् ॥ तेषां कालांतरविधानात् ॥ व्यासः ॥ श्रावणे न तु यत्कर्म उत्तराषाढसंयुतम् ॥ संवत्सरकृतोऽध्यायस्तत्क्षणादेव नश्यति ॥ धनिष्ठासंयुतं कुर्याच्छ्रावणं कर्म यद्भवेत् ॥ तत्कर्म सफलं विद्यादुपाकरणसंज्ञितमिति ॥ उपाकर्म प्रकुर्वंति क्रमात्सामर्ग्यजुर्विदः ग्रहसंक्रांत्ययुक्तेषु हस्तश्रवणपर्वसु ॥ अथ चेद्दोषसंयुक्ते पर्वणि स्यादुपक्रिया ॥ दुःखशोकामयग्रस्ता राष्ट्रे तस्मिन्द्विजातयः ॥ अथात्र कर्तव्यमुच्यते ॥ यदुक्तं वृद्धमनुचेतसा ॥ भवेदुपकृतिः पौर्णमास्यां पूर्वाह्ण एव तु ॥ ब्राह्मणान्भोजयेत्तत्र पितॄननुदिश्य देवताः ॥ बैधायनः ॥ गौतमादिऋषीन्सप्त कृत्वा दर्भमयान्पुनः ॥ पूजयित्वा यथाशक्ति तर्पयेद्दक्षमुखरन् ततो देवान्पितॄंश्चैव तर्पयेत्परमांभसा ॥ उपाकर्मणि ग्रहणावेधदोषाभावः ॥ नित्ये-नैमित्तिके जाप्यये च होमक्रियासु च ॥ उपाकर्मणि चोत्सर्गे ग्रहदोषो न विद्यते ॥ स्मृ-

त्यंतरे॥ भद्रायां द्वेन कर्त्तव्ये श्रावणी फाल्गुणी तथा॥ श्रावणी नृपतिं हंति ग्रामं दहति फाल्गुणी ॥विशेषोऽपि भविष्ये॥ ततोऽपरान्हसमये रक्षापोटलिकां शुभाम्॥ कारयेदक्षतैः शस्तैः सिद्धार्थैर्हेमभूषितैरिति॥ अथोत्सर्गः। याज्ञवल्क्यः॥ पौषमासस्य रोहिण्यामष्टकायामथापि वा॥ जलांते छंदसां कुर्य्युरुत्सर्गं विधिवद्बहिरिति॥ आषाढ्यामथवाष्टम्यां चतुर्दश्यामुमापतिं॥ पवित्रैरर्चयेद्भक्त्या श्रावण्यां चेतरान्सुरानिति॥ अथ भाद्रीपूर्णा॥ तत्र सावित्रीव्रतम्॥ तदेव भविष्ये॥ श्रूयतां पांडवश्रेष्ठ सावित्रीव्रतमादरात्॥ त्रयोदश्यां भाद्रपदे दंतधावनमाचरेत्॥ त्रिरात्रं नियमं कार्य्यं उपवासस्य भारत॥ अशक्तौ तु त्रयोदश्यां नक्तं कुर्य्याद्दृढव्रतः॥ अयाचितं च वा कुर्य्यादुपवासेन पूर्णिमा॥ अथाश्विनपूर्णिमा॥ इयमेव कौमुदी॥ तस्यामिंद्रं लक्ष्मीं च पूजयेत्॥ तदेव भारते॥ पूर्णिमायामाश्वयुजे मासि कौमुदी परिकीर्तिता॥ कुमुदैः पूजयेल्लक्ष्मीमिंद्रमैरावतस्थितम्॥ निशि जागरणं कृत्वा परेऽन्हि तु समाचरेदिति ॥अत्र घृतपूर्णपात्रं सुवर्णान्वितं दत्वा दीप्ताग्निर्भवति॥ यदुक्तं लिंगे॥ आश्वयुज्यां तु दा-

नक्षत्रं तिथौ तस्यां नराधिप। सा महाकार्तिकी प्रोक्ता देवानामपि दुर्लभा॥ आग्नेयं कृत्तिका याम्यं भरणी॥ प्राजापत्यं रोहिणी॥ यदा तु याम्यं भवति नक्षत्रं तस्यां तिथौ क्वचित्॥ तिथिः सापि महापुण्या मुनिभिः परिकीर्तिता॥ क्षीरसागरदाने विशेषो ब्राह्मे॥ पौर्णमास्यां तु संपूज्यो भक्त्या शंभो हरः सदा॥ ततश्चंद्रोदये पूज्यास्तापसाः कृत्तिकासु षट्॥ कार्तिकेयस्त्वथो खड्गो वरुणश्च हुताशनः॥ धान्यैः सशूकैर्द्वारे द्वे भूषितव्या निशागमे॥ माल्यैर्धूपैस्तथा गंधैर्भक्ष्यै रुच्यावन्नैस्तथा॥ परमान्नैर्जलैः शाकैर्वह्निब्राह्मणतर्पणैः॥ एवं देवांश्च संपूज्य दीपो देयो गृहाद्बहिः॥ दीपोपांते तथा गर्तैश्चतुरस्रो मनोहरः॥ चतुर्विंशांगुलः कार्यः सिक्तश्चंदनवारिणा गवां क्षीरेण संपूर्णस्समतात्परिरक्षितः॥ तत्र हेममयो मत्स्यो मुक्तानेत्रो मनोहरः॥ प्रक्षेप्तव्यो विधानेन नमोस्तु हरय पठेत्॥ ब्राह्मणायाथ योग्याय दद्यात्तत्क्षीरसागरम्॥ इति कार्तिकी॥ अथ मार्गशीर्षी॥ तत्र चन्द्रार्चा ब्रह्मांडे॥ वामनेत्रं हि यद्विष्णोस्तदेव भुवनत्रयम्॥ अन-

सूयात्मजश्चंद्रः स्यात्तेनाभ्यषिंचयत् ॥ पौषीमास्यां तु यस्मात्तु तस्मात् पू...
यस्मात्तुलवर्णं देव दक्षशापाद्विनिःसृतं ॥ माता स्वसा च दुहिता संपूज्याश्च कुलांगनाः
॥ कांतिरूपं भवेत्स्त्रीणां पूर्णेन्दोः पूजनादिति ॥ अस्यां मृगशिरोयुक्तायां प्रस्थपरिमि-
तं चूर्णितं सुवर्णयुक्तं ॥ लवणं चंद्रोदये दद्यात् ॥ विष्णुलोकलाभात् ॥ अथ पौषी पूर्णा ॥ तत्र
पौषयुक्तायाम लक्ष्मीनाशनं गंगास्नानादिकं कार्यं यथाशक्ति दानादिकं दातव्यं स्व-
यमपि घृतपायसं भोक्तव्यमिति दिक् ॥ इति पौषी ॥ अथ माघी पूर्णा ॥ तत्र मघायुक्तायां ति-
लैः श्राद्धं कृत्वा तिलपात्रादिदानम् ॥ यदुक्तं भविष्ये ॥ माघ्यां मघासु च तिलैस्संतर्प्य पितृदेव-
ताः ॥ तिलपात्राणि देयानि तिलास्सपललौदनम् ॥ कंबलाजिनरत्नानि मोचको पापमो-
चको ॥ उपानद्दानमन्त्रैव तिलदानं च शस्यते ॥ यत्र वा तत्र वा स्नानं दानं वित्तानुरूपतः ॥
पौर्णमास्यां तु यो माघे पूजयेद्विधिवत्स्थितम् ॥ सोऽश्वमेधमवाप्येह विष्णुलोके मही-
यते ॥ अथ फाल्गुणी पूर्णा ॥ सा पूर्वविद्धा सायान्हव्यापिनी ग्राह्या ॥ यदुक्तम् ॥ सायान्हे होलि-

कां कुर्यात्पूर्वाह्णे क्रीडनं गवाम् ॥ दीपः स्यात्तद्दोषे तु धर्म्मोऽयं सनातनः ॥ निशागमे तु
पूज्येत होलिका सर्वदा बुधैः ॥ न दिवा पूजयेद्ढुण्ढां पूजिता दुःखदा भवेत् (तत्र भद्रायां होलि-)
कां न दीपयेत् ॥ यदुक्तम् ॥ भद्रायां दीपिता होला राष्ट्रभंगं करोति हि ॥ नगरस्य च नैवेष्टा त-
स्मात्तां परिवर्जयेत् ॥ भद्रामांते पौर्णमास्यां रात्रिशेषे मुखेऽपि वा ॥ होलां प्रज्वाल्य
कुर्वीत पिशाचानां महोत्सवम् ॥ तथा दिनार्द्धात्परतोऽपि स्यात्फाल्गुन्यां पूर्णिमा यदि
॥ रात्रौ भद्रावसाने तु होलिकां तत्र दीपयेदिति   परदिने दिनार्द्धात्परतोऽपि स्यात्फाल्गु-
न्यां पूर्णिमायां विद्यमानायां ॥ पूर्वविद्धायामेव रात्रौ भद्रावसाने होलिकां दीपयेदित्यर्थः
यदा पुनः परदिने पूर्णिमा सार्द्धयामत्रयव्यापिनी प्रतिपच्च वृद्धिगामिनी तदा परत्रैव
होलिका कार्या ॥ तथा च भविष्ये ॥ सार्द्धयामत्रयं वा स्याद्द्वितीयदिवसे यदा ॥ प्रतिपद्-
वर्द्धमानापि तदा सा होलिका स्मृता ॥ यत्तु ॥ वह्नौ वह्निं परित्यजेदिति वह्नौ होलिका-
यां वह्निं परित्यजेत्तत्र तिपद्भिरित्यर्थः ॥ एतत्तु सायंकाले भद्रारहितपूर्णिमायां

नाप्रतिकस्य प्रतिपदिन कर्त्तव्यम् ॥ अन्यथा ॥ भविष्योत्तरवाक्यस्य निरर्थकतास्यादि-
ति ॥ अत्र चेच्चन्द्रोपरागस्तदा ग्रहणात्पूर्वकि ॥ निशि निर्विष्टि पूर्णायां होलिकादीपनस्य
अथ पूर्वदिने अल्पमना वधि चतुर्दशी द्वितीयदिने प्रदोषसमये गस्तोदितं तदा पूर्वदि-
ने भद्रावशिष्ट रात्रिचतुर्थयामे विष्टिपुच्छे होलिका कार्या द्वितीयदिने ग्रहणानंतरं
प्रतिपत्संभवेत् ॥ ग्रहणात्पूर्वं च दिवा होलाप्रज्वलन निषेधाद्विष्टिपुच्छस्य सर्वकर्मा-
र्हत्वदर्शनाच्च ॥ पल्लवः ॥ पृथिव्यां यानि कर्माणि शुभान्यप्यशुभानि च ॥ तानि सर्वे-
णि सिद्ध्यंति विष्टिपुच्छे न संशयः ॥ संवत्सरस्य दाहोयं कामदाहो मतांतरे ॥ इति दिव-
रूपनिबंधे ॥ अत्र कृत्यम् ॥ रघुं प्रति नारदवाक्यम् ॥ अद्य पंचदशी शुक्ला फाल्गुनस्य नराधि-
प ॥ शीतकालो विनिःक्रांतः प्रातर्ग्रीष्मो भविष्यति ॥ अभीप्रदानं लोकानां दीयतां पु-
रुषोत्तम ॥ यथा सु शंकिता लोका रमंति च हसंति च ॥ संचयं शुष्ककाष्ठानां उपलाना-
ञ्च कारयेत् ॥ तत्राग्निं विधिवद्धुत्वा रक्षोघ्नैर्मंत्रविस्तरैः ॥ ततः किलकिलाशब्दैस्तालश-
ब्दैः ॥ [illegible]

नि॰ व्देर्म्मनोरमैः॥ तामभिंत्रिः परिक्रम्य गायंतु च हसंतु च॥ जल्पन्तस्स्वेच्छया लोका-
५ निःशंका यस्ययन्मतम्॥ तेन शब्देन सा पापा होमेन च निराकृता॥ सर्वदुष्टापहो-
होमस्सर्वरोगोपशांतिदः॥ अस्यां निशागमे राजन्संरक्ष्या शिशवो गृहे॥ गोमये-
नोपलिप्ते च सचतुष्के गृहांगणे॥ आकारयेच्छिशुप्रायान्खड्गव्यग्रकरान्नरान्॥
ते काष्ठखड्गैस्संस्पृश्य शब्दैर्हास्यकरैः शिशून् ॥ रक्षंति तेषां दातव्यं-
गुडं पक्वान्नमेव च॥ एवं दुंढेतिया तस्याः सदोषः प्रशमं व्रजेत्॥ बालानां रक्षणं का-
र्यं तस्मात्तस्मिन्निशागमे॥ इति होलिकानिर्णयः इति पौर्णमासी निर्णयः अथामावा-
स्या निर्णीयते॥ अमा चोपवासादिषु प्रतिपद्युतैव वटसावित्री व्यतिरिक्तव्रतेषु ग्रा-
ह्या युग्मवाक्यात्॥ अमावास्या तृतीये तिसाउपोष्या परान्विता॥ भविष्येऽपि॥ भू-
तविद्धाप्यमावास्या न ग्राह्या मुनिपुंगवैरिति॥ अथ ज्येष्ठामायां पूर्वविद्धायां वटसावित्रीव्र-
तं कुर्यात्॥ तत्रायंविधिः॥ ज्येष्ठकृष्णत्रयोदशीमारभ्य त्रिरात्रोपोषणम्॥ अथ-

त्यातुत्रयोदश्यां नक्तं चतुर्दश्यामयाचितं॥ अमायामुपवासं कृत्वा सुवर्णप्रतिमां द-
द्यात्॥ स्कान्दे॥ अमायां च तथा ज्येष्ठे वटमूले महासती॥ त्रिरात्रोपोषिता नारी वि-
धानेन पूजयेत्॥ अशक्त्या तु त्रयोदश्यां नक्तं कुर्याज्जितेन्द्रियः॥ अयाचितं चतुर्द-
श्यां अमायां समुपोषणम्॥ गृहीत्वा वालुकां पात्रे प्रस्थमात्रं युधिष्ठिर॥ ततो वंश-
मये पात्रे वस्त्रयुग्मेन वेष्टितम्॥ सावित्रीप्रतिमां कृत्वा सर्वावयवशोभिनीम्॥ सौ-
वर्णां मृन्मयीं वापि स्वस्य शक्त्या विनिर्मिताम्॥ सार्द्धं सत्यवता साध्वी फलनैवेद्यदी-
पकैः॥ वटावलंवितं कृत्वा काष्ठभारं युधिष्ठिर॥ वित्ताढ्यैः सप्तधान्यैश्च वहुधा संप्रकल्पि-
तैः॥ रजन्याः कंठसूत्रैश्च शुभैः कुंकुमकेशरैः॥ सावित्र्याख्यानकं वापि वाचयीत द्विजो-
त्तमैः॥ रात्रौ जागरणं कृत्वा नृत्यगीतपुरस्सरं॥ ततः प्रभाते विधिना पूर्वोक्तेन नरोत्तम॥
तामपि ब्राह्मणे दद्यात्स्वशक्त्या समापयेत्॥ दानमंत्रश्च॥ ॐ सावित्रीयं मया दत्ता सहिर-
ण्या महासती॥ ब्राह्मणप्रीणनार्थाय ब्राह्मण प्रतिगृह्यतामिति॥ एवं दत्त्वा द्विजेन्द्रा-

य सावित्री त्वां युधिष्ठिर ॥ नैवेद्यादि च तत्सर्वं ब्राह्मणस्य गृहं नयेत् ॥ स्वयं स्वगृहं गच्छे-
त्तत्र वेश्म पुनर्व्रजेत् ॥ तत्र भुक्त्वा हविष्यान्नं ब्राह्मणी ब्राह्मणैः सह ॥ विसर्जयेत्ततो वि-
प्रान्सावित्री प्रीयतामिति ॥ व्रतेनानेन राजेन्द्र वैधव्यं नाप्नुयात्क्वचित् ॥ इति वटसावित्री ॥
अथ भाद्रमायां कुशग्रहणम् ॥ हेमाद्रौ हारीतः ॥ मासे नभस्यमावास्या तस्यां दर्भोच्चयो मतः ॥
अयातयामास्ते दर्भा विनियोज्याः पुनः पुनः ॥ नभस्यो भाद्रपदः तत्क्रमः । शुचौ देशे शु-
चिर्भूत्वा स्थित्वा पूर्वोत्तरामुखः ॥ ॐकारेण तु मंत्रेण सकृदेव कुशान्स्पृशेत् ॥ सकृदेव ग्रथ-
मत एव ॥ दर्भच्छेदने मंत्रः ॥ विरञ्चिना सहोत्पन्न परमेष्ठिनिसर्गज ॥ नुद सर्वाणि पापानि
मम स्वस्तिकरो भव ॥ कुशमूले स्थितो ब्रह्मा कुशमध्ये तु केशवः ॥ कुशाग्रे तु हरो देव-
स्त्रयो देवाः कुशे स्थिताः तत्स्मरणाच्च ॥ अच्छिन्नाग्रांस्तथा पर्णान्समूलान्कोमला-
ञ्छुभान् ॥ पितृदेवयज्ञार्थञ्च समादद्यात्कुशान्द्विजः ॥ सर्वे पर्णाः शुभा दर्भास्तिलस्ते-
त्र समुद्भवाः ते समस्ता नियोक्तव्या दैवे पित्र्ये च कर्मणि ॥ जातमात्रो भवेद्दर्भः साग्रमू-

लः कुश स्ततः सप्त पर्णास्तु कुतप श्छिन्नाग्र स्तरः उच्यते ॥ अच्छिन्नाग्रा अशुष्काग्रा-
द्रस्वा प्रादेशमात्रकाः कुतपा इति विज्ञेयास्तै स्तु श्राद्धं समारभेत् ॥ अथ कार्त्तिकामावास्या दी-
प माला ॥ सा सुखरात्रि रित्युच्यते ॥ प्रदोषादूर्द्ध रात्र व्यापिन्येव । तेनास्याः पूर्वविद्धात्वं प्र-
सिद्धम् ॥ उक्तंच ॥ दीप माला न कर्त्तव्या प्रतिपन्मिश्रिता क्वचित् ॥ नारी तत्र विनश्यंति
प्रजा गावो मही पति रिति ॥ अस्यां नववस्त्रादि धारणं लक्ष्मी पूजां च कुर्य्यात् ॥ ब्राह्मे ॥
अमायां च तथा देवाः कार्त्तिके मासिके शवात् ॥ अभयं प्राप्य सुप्तास्तु सुखं क्षीरोद सा-
नुषु ॥ लक्ष्मी दैत्य भयान्मुक्ता सुखं सुप्ताम्बुजोदरे ॥ अतोऽथैं विधि वत्कार्य्या मनुष्यैः
सुख सुप्तिका ॥ दीपान्दत्वा प्रदोषे तु लक्ष्मी पूज्य यथाविधि ॥ स्वलंकृतेन भोक्तव्य सूत-
वालातु सन्जयम् ॥ अपराह्णे प्रकर्त्तव्यं श्राद्धं पितृ परायणैः ॥ प्रदोष समये राजन् कर्त्त-
व्या दीप मालिका ॥ दीप वृक्षास्तथा कार्य्याः शक्त्या देव गृहेषु च ॥ दीप दानं यथा शक्ति
विप्र मित्र सुरालये । चतुःपथे श्मशाने तु नदी पर्वत गो गृहे । दीप माला परि क्षिप्ते प्रदो-

येतदनंतरंम्॥ ब्राह्मणान्भोजयित्वा दैविभज्य चतुर्मुखितान्॥ अलंकृतेन भोक्तव्यं
नववस्त्रोपशोभिना॥ अत्रैव राजकौमुदी महोत्सवं कुर्यात्॥ यदुक्तं॥ ततोपरान्हसम-
ये घोषयेन्नगरेनृपः॥ सर्वराज्यं वलं लोकान् यथेष्टं चेष्टतामिति॥ लोकैश्चापि पुरे
पुष्यसुधाद्रवलिताम्बिते॥ दृढचंदनमालाढ्ये चर्चितेच गृहे गृहे॥ दीपध्यानस्तोद्यु-
तेनरनारीमनोहरे॥ दीपमालाकुले रम्ये विध्वस्तध्वांतसंचये॥ प्रदोषे दोषरहिते
सस्ते दोषागमे शुभे॥ वेश्याविलासिनी सार्थे स्वस्तिमंगलकारिणि॥ गृहाङ्गृहं व्र-
जातिच पादाभ्यां वैवयायिभिः॥ ततोऽर्द्धरात्रसमये स्वयं राजा पुरं व्रजेत्॥ अवलोक-
यितुं रम्यं पद्भ्यामेव शनैः शनैः॥ ततः प्रदोषसमये नारीभिर्गृहादलक्ष्मीर्निःकास्य-
ते॥ तदपिस्कांदे॥ एवं गते निशीथे तु जने निद्रार्द्धलोचने॥ तावन्नगरनारीभिः सूर्प-
डिंडिमवादनैः॥ निःकास्यते प्रहृष्टाभिरलक्ष्मीः स्वगृहांगणात्॥ इतिकार्तिकी अमावा
स्या॥ अथ माघी॥ तस्यां ब्राह्मणं सा विन्नी सहितं संपूज्य नवनीतधेनुं दद्यात्॥ तदेवभ-

विध्ये ॥ अमायां चैव माघस्य पूजयित्वा पितामहम् ॥ गायत्र्या साहितं देववद् वेदागर्भ-
पितम् ॥ नवनीतमयीं धेनुं फलैर्नानाविधैर्युताम् ॥ सहिरण्यां सवत्सां च ब्राह्मणा-
य निवेदयेत् ॥ अत्र माघपौषयोरमावास्या रविवार श्रवण व्यतीपातयोगैर्युक्ता
चेदर्द्धोदयाख्यः ॥ कोटिग्रहणसन्निभो योगः ॥ तथा च स्कान्दे सेतुमाहात्म्ये ॥ अमा-
र्कपातश्रवणैर्युक्ता चेन्माघपौषयोः ॥ अर्द्धोदयस्स विज्ञेयः कोटिसूर्य्यग्रहैस्समः
॥ दिवैव योगस्शस्तोयं न तु रात्रौ कदाचनेति ॥ अर्द्धोदये तु संप्राप्ते सर्वगंगाजलं समं ॥
शुद्धात्मानो द्विजास्सर्वे भवेयुर्ब्रह्मसन्निभाः ॥ यत्किंचिद्दीयते दानं तद्दानं मेरुसन्नि-
भमिति ॥ अत्र दानादौ विशेषः ॥ चतुःषष्टिपलं मुख्यमसन्नं तत्र कारयेत् ॥ चत्वारिंशत्प-
लं चाथ पंचविंशतिमेव च ॥ निधाय पायसं तत्र पद्ममष्टदलं लिखेत् ॥ पद्मस्य
कर्णिकायां तु कर्षमात्रं सुवर्णकम् ॥ तदभावे तदर्द्धं वा तदर्द्धं वापि कारयेत् ॥ कृत्वा तु लं कुलैः
शुद्धैः पद्ममष्टदलं शुभम् ॥ अमन्त्रं स्थापयेत्तत्र ब्रह्मविष्णुशिवात्मकमिति ॥ तथा

शीति करार्थाय श्वेत माल्यै स्तु शोभनैः ॥ वस्त्रादिभिरलंकृत्य ब्राह्मणाय निवेदयेत्
दानमंत्रः ॥ सुवर्ण पायसा मत्रं यस्मा द्देतत्त्रयी मयं ॥ आवयोस्तारकं यस्मात्तद् गृहाण
द्विजोत्तम ॥ समुद्र मेखलां पृथ्वीं सम्यग्दत्तस्य यत्फलम् ॥ तत्फलं लभते मर्त्यो दत्वा
दानं समन्त्रकम् ॥ इत्यर्द्धोदय विधिः ॥ अमावास्या तु सोमेन सप्तमी भानुना सह ॥ चतुर्थी
भूमिपुत्रेण बुधवारेण चाष्टमी ॥ चतस्त्रस्तिथयस्त्वेताः सूर्य्य ग्रहण सन्निभाः ॥ स्नानं दा
नं तथा श्राद्धं सर्वं तत्राक्षयं भवेदिति ॥ इत्युपवासाद्यमावास्या निर्णयः अथ श्राद्धेऽमाव
स्या निर्णीयते ॥ सा अपराह्णव्यापिन्येव ॥ एकोद्दिष्टश्राद्धे तु अष्टमनवममुहूर्त्तव्यापिन्येव
ग्राह्या ॥ मात्स्ये ॥ अष्टमे नवमे यस्मान्मंदी भवति भास्करः ॥ तस्मादनंतफलदस्तत्रारं
भो विशेषत इति ॥ कुतुपे प्रथमे भागे एकोद्दिष्टमुपक्रमेदिति व्यासः अष्टम मुहूर्त्ता
ख्ये कुतुपे आरंभ इति तदर्थः ॥ अत्र पार्वणं त्वेकादश मुहूर्त्ते ॥ अपराह्णः पितॄणामित्यु
क्तेः दिनद्वये ऽपराह्णव्याप्तौ यत्राधिका तद्व्यापिनी ग्राह्या ॥ अपराह्णद्वयव्यापिन्यमावा

स्याद्यदा भवेत् ॥ तत्राल्पत्वेन ह्रास्यां निर्णयः पितृकर्म्मणि ॥ शिवराघवसंवादे ॥ अमा-
वास्या हि सा तुल्या द्यपराह्णद्वये समा ॥ क्षये पूर्वा परा वृद्धौ साम्येऽपि च परा स्मृतेति ॥ द्वि-
नद्वयेऽप्यपराह्णव्याप्त्यभावेऽपि परैव ॥ पूर्वेद्युरेवापराह्णव्याप्तौ ॥ बौधायनः ॥ घटिकैका-
प्यमावास्या प्रतिपत्सु न चेत्तदा ॥ भूतविद्धैव सा ग्राह्या दैवे पैत्र्ये च कर्म्मणि ॥ प्रतिप-
दि घटिकैकापि कर्म्मकालेऽस्ति चेदित्यर्थः ॥ अथ मलमासे वर्ज्यादिनिर्णयः ॥ तत्र-
काम्यं निषिध्यते ॥ जावालिः ॥ नित्यनैमित्तिके कुर्य्याच्छ्राद्धं कुर्य्यान्मलिम्लुचे ॥ तिथि-
नक्षत्रकारितं काम्यं नैव कदाचनेति ॥ नित्यनैमित्तिकयोरपि यदनन्यगतिकं तदेव
कुर्य्यात् ॥ अनन्यगतिकं कुर्य्यान्नित्यं नैमित्तिकं तथेति स्मरणात् ॥ गृह्यपरिशिष्टे
अवषट्कारहोमाश्च पर्व चाग्रयणं तथा ॥ मलमासे तु कर्त्तव्यं काम्यादिष्टिं विवर्ज्जयेदि-
ति ॥ अवषट्कारहोमाश्च देवाग्निहोत्रादयः ॥ सर्वदर्शपौर्णमास्योः ॥ तत्रैव सोम-
यागादिकर्म्माणि नित्यान्यपि मलिम्लुचे ॥ अग्नीष्ट्याग्रयणाधानचातुर्मास्यादिका

न्यपि॥ महालयाष्टका श्राद्धोपाकर्माद्यपि कर्म्म यत्॥ अस्तमासविशेषाख्य विहितं व-
र्ज्जयेन्मलेतियमः॥ चंद्रसूर्य्यग्रहेस्नानं श्राद्धं दानंजपादिकम्॥ कार्य्याणि मलमासेतु
नित्यं नैमित्तिकं तथेतियमः॥ गर्भेवार्द्धुषिते भृत्ये श्राद्धकर्म्मणि मासिके। सपिण्डी
करणे नित्यं नाधिमासं विवर्ज्जयेत्॥ तीर्थस्नानं जपो होमो जवव्रीहि तीलादिभिः॥
जातकर्मान्त्यकर्म्माणि नव श्राद्धं तथैव च॥ मघात्रयोदशीश्राद्धं श्राद्धान्यपि च षोड
श॥ मासि के श्राद्धे अमायाः नित्य दाने होमो ऽत्रोपाशनः॥ अन्त्यकर्म्माणि दाहोद
क पिंड दानास्थि संचयनादीनि॥ मरीचिः॥ मन्वादौ च युगादौ च मासयो रुभयोर-
पीति॥ मात्स्ये॥ वर्षे पाप हरं श्राद्धं दानं च प्रति वत्सरम्॥ गो भूतिल हिरण्यानां दा
नं मासे मलिम्लुचे॥ इतिभृगुः॥ वृद्धि श्राद्धं वथा सोमम्न्याधानं महालयम्॥ रा-
ज्याभिषेकं काम्यं च न कुर्य्याद्भानुलंघित इतिस्मृत्यन्तरे॥ नभो वाथ नभस्यो वा-
मलमासो यदा भवेत्॥ आषाढ्यास्सप्तमः पक्षः पितृपक्षस्तदाभवेत्॥ हारीतः॥

असंक्रांते हि कर्त्तव्यमाब्दिकं प्रथमं द्विजैः ॥ तथैव माब्दिकं श्राद्धं सापिंडीकर
ति ॥ भृगुः ॥ मल मास मृतानां तु पच्छ्राद्धं प्रति वत्सरम् ॥ मल मासे तु तत्कार्य्यं
नान्येषान्तु कदाचन ॥ एवं च शुद्ध मास मृतानां तु प्रथमाब्दिकं मलेऽपि कार्य्यं
मिति ॥ द्वादशे मासि सर्वत्र फलंति श्राद्ध कान्तरं तु शुद्धे त्रयो दशे ॥ यदा तु मध्ये म
ल मास पातस्तदा पित्रयो दशे मासे ॥ यतः ॥ मल मास मृतानां तु मले स्याद्दाब्दि
कांतरम् ॥ वृद्धमनुः ॥ अप्याध्येयं प्रतिष्ठां च यज्ञं दानं व्रतानि च ॥ देव व्रत वृषो
त्सर्गं चूडा करण मेखलाम् ॥ मांगल्य मभिषेकं च मल मासे विवर्ज्जयेत् ॥ तथा
वापी कूप तडागादि प्रतिष्ठा यज्ञ कर्म्म च ॥ न कुर्य्यान्मल मासे तु महा दान
व्रतानि च ॥ वृषो त्सर्गोऽत्र काम्यः ॥ अथ ग्रहण निर्णयः ॥ वृद्धगौतमः ॥ सूर्य्य ग्र
हे तु नाश्नीयात् पूर्वं याम चतुष्टयम् ॥ चंद्र ग्रहे तु यामांस्त्रीन्बाल वृद्धातु
रै र्विना ॥ वशिष्ठः ॥ ग्रस्तो दये विधोः पूर्वं नाहर्भोजन माचरेत् ॥ भृगुः ॥

मुक्ता देवास्त मानं तु रवीन्दू प्राप्नुतो यदि ॥ परेद्युरुदये स्नात्वा शुद्धो ऽभ्यवहरेन्नरः ॥ अत्र भोजने प्राय श्चित्त मुक्तम् ॥ कात्यायनेन ॥ चन्द्र सूर्य्य ग्रहे भुक्त्वा प्राजा पत्येन शुध्यति ॥ तस्मि न्नेव दिने भुक्त्वा त्रि रात्रेणैव शुध्यति ॥ भारते ॥ सर्वस्वे नैव कर्त्तव्यं श्राद्धं वै राहु दर्शने ॥ अकुर्वाणस्तु नास्तिक्यात्पंके गौरिव सी दतीति ॥ साता तपः ॥ आपद्यनग्नौ तीर्थे च ग्रहणे चंद्र सूर्य्ययोः ॥ आम श्राद्धं द्विजः कुर्य्या च्छूद्रः कुर्य्या त्सदै वहि ॥ वृद्ध वशिष्ठः ॥ सूत के मृत के चैव न दोषो राहु दर्शने ॥ ताव देव भवे च्छुद्धि र्याव न्मुक्ति र्न दृश्यते ॥ इति यड्विंशन्मते ॥ सर्वेषा मेव वर्णानां सूत के राहु दर्शने ॥ स्नात्वा कर्म्माणि कुर्वीत सृत मन्नं विसर्ज्जये दिति ॥ मेधा तिथिः ॥ आर नालं पय स्तक्रं दधि स्नेहा ज्य पाचितम् ॥ मणि कस्थो दकं चैव न दुष्ये द्राहु सूतके ॥ मन्वर्थ मुक्ता वल्याम् ॥ अन्नं पक्व मिह त्याज्यं स्नानं स वसनं ग्रहे

॥ वारि तत्कार नाला दितिल दर्भा न दुष्यति ॥ गृहीयितं जलं पीत्वा पाद कृ-
च्छ्रं समाचरेत् ॥ योग विशेषो गृहणो ध्यासः ॥ रवि गृहः सूर्य्य वारे सोमे सोम ग्र-
गृह स्तथा ॥ चूडा मणि रिति ख्यात स्तत्र दत्त मनं तकम् ॥ वारेष्व न्येषु यस्तु
ग्रयं गृहणो चन्द्र सूर्य्ययोः ॥ तत्पुण्यं कोटि गुणितं योगे चूडा मणो स्मृतः
॥ द्विवेदि कुल संभूत सरयू कृत संग्रहे ॥ शिरो मणौ समाप्तैया प्रमेयं तत्व
संज्ञ का ॥ दुर्गा नंद पद द्वन्द्व ध्याना वस्थित चेतसा ॥ ततितोयं हि सत्री-
त्ये संगृहाख्य शिरो मणिः ॥ भूया माद्भुः शिरो वर्ये वेकृ मीये शुभे शुचौ ॥
समाप्तोयं सदा भूया द्वि दुर्या प्रीति दः शुभः ॥ यावद्भू मण्डले सन्ध्या वेदि-
कं कर्म्म सज्जनाः ॥ ता वत्स्वस्ति युतो भूया त्संगृहाख्य शिरो मणिः
इति श्री मद्विवेदि कुल संभव सरयू दत्तविर चिते ॥ संग्रह शिरो मणौ
नाम्नि गृंथे तिथि निर्णय कथनं नाम चतु र्विंशति तमा प्रभा समाप्ता समा-

सोऽयं संग्रह शिरो मणिनाम ग्रंथः ॥ सम्वत् १९५१ माघ मासे कृष्ण पक्षे अष्टम्यां रवि वासरे समाप्तः ॥ शुभ मस्तु ॥ लिखित मिदं पुस्तकं वैजनाथेन हि वेदिना ॥

१७७ सोऽयं संग्रह शिरो मणिनाम ग्रंथः ॥ सम्वत् १८५१ माघ मासे कृष्ण पक्षे
५०० अष्टम्यां रवि वासरे समाप्तः ॥ शुभ मस्तु ॥ लिखित मिदं पुस्तकं वैजनाथेन
द्वि वेदिना ॥